| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अथसंस्कारकौस्तुभ-स्थानुक्रम | अनंत देव | धर्म | पूर्ण | - | २/१२ | ६७२ | संस्कृत | कागद | 11 | 52 | | |

M-2828

# ७ अथसंस्कारकौस्तुभस्यानुक्रमणिकाप्रारंभः ७

श्रीगणेशायनमः॥ ॥अथसंस्कारकौस्तुभस्यानुक्रमणिकाप्रारंभो ऽयंक्रियते॥

इतिसंस्कारकौस्तक्भस्यानुक्रमणिकासमा

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुचरणारविंदाभ्यांनमः श्रीलक्ष्मीनारायणाभ्यांनमः अथसंस्कारकौस्तुभप्रारंभः गर्भा-
धानप्रभृतिविहितानेकसंस्कारसुन्दरचित्तादर्शेसकलमुनयोयंप्रपश्यंतिदेवम् चंद्रादित्यानलभतडितांभाप्रवाहेनिदानंवंदेवेदैःशिरसिनिहितंपा
लकंपांडवानाम् १ नत्वाहरिगुरुचरणौवादिरणौघेजयप्रदंविदुषाम् मधुनाशनमोदावहमधुनासंस्कारकौस्तुभंतनुमः २ अथषोडशसंस्काराः
तत्रगर्भाधानंप्रथममुच्यते इतरसंस्कारान्प्रतिउपजीव्यत्वेनतस्यैवस्मृतिकर्तृभिःगृह्यसूत्रकारैश्चगर्भाधानमृतावितिउपनिषदिगर्भलंभनमि
तिचप्रथमनिर्देशात् तदुपयोगितयादुष्टरजोदर्शनशांतिंवक्तुंप्रथमरजोदर्शनेनतत्स्वरूपमुक्तंविधानपारिजाते नाभिमूलेस्थितंपुष्पंचतुर्दलस
मन्वितम् तस्मिन्सर्वाश्चदधतेगर्भसंभवकारणम् अधोमुखस्थितंस्त्रीणांबाल्येतुमुकुलीकृतम् बाल्यात्परवयःप्राप्तौमुकुलंविकसद्भवेत्
उत्फुल्लेकुसुमेस्त्रीणांस्वभावेनस्रवेद्रजः तदाप्रभृतिसर्वासांमासिमासिऋतुर्भवेत् रजोदर्शनेशुभाशुभसूचकानिकथ्यंते तत्रप्रथम-
रजोदर्शनेमासफलंशृणु चैत्रेस्यात्प्रथमर्तौतुनारीवैधव्यभागिनी वैशाखेधनपुत्राढ्याज्येष्ठेरोगान्वितातथा शुचौमृतप्रजाप्रोक्ताश्राव
णेधनधान्यभाक् नभस्येदुर्भगाक्लिष्टाप्याश्विनेचपयस्विनी ऊर्जेप्यायुष्मतीनारीमार्गशीर्षेबहुप्रजा पौषेतुपुंश्चलीनारीमाघेपुत्रसुखा-
न्विता फाल्गुनेश्रीमतीनारीरजोमासफलंक्रमात्इति अथतिथिफलम् श्रीधरीयेगुरुः प्रथमायांपतिंहंतिद्वितीयायांसुखंभवेत् तृ
तीयायांश्रियैस्याच्चचतुर्थ्यांवृषलीभवेत् पंचम्यांपुत्रलाभश्चषष्ठ्यांचारित्रविक्रया सप्तम्यांपुत्रवृद्धिःस्यादष्टम्यांपुत्रनाशनम् नवम्यांरुद

तीनित्यंदशम्यांधर्मशालिनी एकादश्यांपतिस्निग्धाद्वादश्यांक्रंदिनीभवेत् त्रयोदश्यांमानधनात्वपराबहुदोषकृत् पर्वण्यन्यगृहीतास्याद्वि
द्यादेवंतिथेःफलम् इति कश्यपोपि अष्टमीषष्ठ्यमारिक्ताद्वादशीसंक्रमेपिच वैधृतौचव्यतीपातेग्रहणेचंद्रसूर्ययोः विष्ट्यांसंध्यासुनिद्रायांदु
र्भगाप्रथमार्तवइति अथपूर्वाण्हादीनांफलम् स्मृतिरत्ने शुभंचैवतुपूर्वाण्हेमध्यान्हेमध्यमंफलम् अपराण्हेतुवैधव्यंपूर्वरात्रेशुभंभवेत् मध्य
रात्रेमध्यमंस्यात्पररात्रेशुभान्वितेति स्मृतौ प्रातःकालेसुतधनासायान्हेसर्वभोगिनी मध्यान्हेतुभवेद्वेश्यानिशीथेविधवाभवेदिति अथवा
रफलम् रुग्णापतिव्रतादुःखीपुत्रिणीभगभागिनी पतिप्रियाक्लेशभागासूर्यवारादिषुक्रमात् भानुवारेभवेद्व्याधिःसोमवारेपतिव्रता दुः
खिताभौमवारेतुबुधेसौभाग्यसंयुता श्रीसंयुतागुरोर्वारेपतिभक्ताभृगोर्दिने मंदवारेनिराशास्यात्प्रथमर्तौरजस्वलेति अथनक्षत्रफलम्
गर्गः सुभगाचैवदुःशीलावंध्यापुत्रसमन्विता धर्मयुक्ताव्रतश्रीचपरसंतानमोदिनी सुपुत्राचैवदुष्पुत्रापितृवेश्मरतासदा दीनाप्रजावती
चैवपुत्राढ्याचित्रकारिणी साध्वीपतिव्रतानित्यंसुपुत्राकष्टचारिणी स्वकर्मनिरताहिंस्रापुण्याप्तुत्रादिसंयुता नित्यंधनव्ययासक्तापुत्रीधा
न्यसमन्विता मूर्खाचारापुण्यवतीदस्रर्क्षादेःक्रमात्फलम् पतिवत्याश्चदुष्टेषु प्रथमंस्याद्रजोयदि पत्युःसुतस्याभवेन्मृत्युस्त्रिपूर्वादिषुभेषुच
मघाशक्रादित्यदित्यवन्हिभेषुचवा भवेत् तत्रापिस्यान्महाशोकोदारिद्र्यंचानपत्यता तद्दोषपरिहारार्थंकुर्याच्छांतिंयथाविधि तोषयेज्ज
पहोमाभ्यांतत्तन्नक्षत्रदेवताः आचार्यादीन्समभ्यर्च्यभोजयेच्छक्तितोद्विजान् तद्दुष्टेषुकृतेनाशुसर्वारिष्टंप्रणश्यतीत्याश्वलायनस्मृतौ

अथलग्नफलम् मेषेसव्यभिचारास्याद्वृषभेपरभोगिनी मिथुनेधनभोगाढ्याकर्कटेव्यभिचारिणी पुत्राढ्यासिंहराशौतुकन्यायांश्रीम
तीभवेत् विचक्षणातुलायांतुवृश्चिकेतुपतिव्रता मकरेलज्जहीनातुकुंभेनिर्धनसुक्तना मीनेविचक्षणालग्नेग्रहसंस्थाविवाहवदिति अथ-
योगफलानि दैवज्ञमनोहरे आद्यत्तौदुर्भगानारीविष्कंभेचेद्रजस्वला वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् गंडेतुपुंश्चलीनारीव्याघातेचा
त्मघातिनी वज्रेचस्वैरिणीप्रोक्तापातेचपतिघातिनी परिघेमृतवंध्याचवैधृतौपतिमारिणी शेषाःशुभावहायोगायथानामफलप्रदाः
अन्यत्रापिनृसिंहः परिघस्यतुपूर्वार्धेव्यतीपातेचवैधृतौ संध्यासूपप्लवेविष्ट्यामशुभंप्रथमार्त्तवम् व्याघातेनवशूलेतुनाड्यःपंचचतुर्दशे
ति अत्रसंख्ययोर्विकल्पः अथलग्नसंस्थग्रहफलानि वसिष्ठः वैधव्यसप्तमस्थेऽर्केचंद्रेक्षीणारुचिर्भवेत् अंगारकेभर्त्तृहीनाबुधेचेद
नपत्यता दौर्भाग्यमिंद्रसचिवेसापत्न्यंभार्गवेभवेत् प्रव्रज्यासूर्यपुत्रेतुराहौतुकलहःसदा अशुभंचैववकेतौस्याज्जामित्रेशुभदाःशुभाः
अष्टमस्येइत्यस्यसप्तम्यंतेषुप्रत्येकमनुषंगः जामित्रेसप्तमस्थाने नरसिंहोपि लग्नस्यसप्तमस्थानेसूर्योवैधव्यकारकः पुत्रहानिक
रस्त्वारोबुधःसत्पुत्रदोभवेत् बृहस्पतिर्धनायुष्यंशुक्रःसाफल्यमेवच शनैश्चरेतुवंध्यास्याद्राहौतुमरणंध्रुवम् चंद्रेसद्गुणसंयुक्तादेवरा
नमताच्छुभमिति अथवस्त्रफलम् गर्गः सुभगाश्वेतवस्त्रास्याद्दृढवस्त्रापतिव्रता क्षौमवस्त्राक्षितीशास्यान्नववस्त्रासुखान्विता
दुर्भगाजीर्णवस्त्रास्याद्रोगिणीरक्तवाससा नीलांबरधरानारीविधवापुष्पितानतः मलिनांबरधरानारीदरिद्रास्याद्रजस्वला वस्त्रे-

स्युर्विषमारक्तबिंदवः पुत्रमाप्नुयात् समाश्चेत्कन्यकाचेतिफलंस्यात्प्रथमार्त्तवइति अथस्थानफलम् ग्रामाद्बहिःपरग्रामेनारीस्याद्व्यभिचा
रिणी पतिव्रताशुभस्थानेस्वभगागृहमध्यतः ग्राममध्येतुवृद्धिश्चविधवाचदिगंबरा उपरागेचदुःशीलाआयुष्यंजलसन्निधौ धनमध्येतुक
न्यायाधनधान्यसमृद्धिदेति देवरातः संमार्जनीकाष्ठतृणाग्निशूर्पान्हस्तेदधानाकुलटातदास्यात् तल्पोपभोगेतपसिस्थितान्वेदृष्टरजोभाग्य
वतीतदास्यादिति अथप्रथमरजोदर्शनेशिष्टाचारः कश्यपः प्रथमर्त्तौतुपुष्पिण्याःपतिपुत्रवतीस्त्रियः अक्षतैरासनंकुर्युस्तस्मिंस्तामुप
वेशयेत् हरिद्रापुष्पगंधादीन्दद्यात्तांबूलकंस्रजम् आशिषोवाचयेयुस्ताःपतिपुत्रवतीभव दीपैर्नीराजनंकुर्यात्सदीपेवासयेद्गृहे ताःसर्वाः
पूजयेत्सम्यग्गंधपुष्पाक्षतादिभिः लवणापूपमुद्गादिदद्यात्ताभ्यःस्वशक्तितइति इदंचसर्वंशुभाशुभनिरीक्षणंप्रथमर्त्तौद्वितीयेवाशुभाशुभ-
निरीक्षणं कर्तव्यंज्ञातिभिःसम्यग्धर्मशास्त्रविधानतइति अथसर्वर्त्तुसाधारणनियममाह वसिष्ठः त्रिरात्रंरजस्वलाऽशुचिर्भवति सानां
ज्यान्नाभ्यंज्यान्नाप्सुस्नायादधःशयीतनदिवास्वप्यान्नाग्निंस्पृशेन्नरज्जुंसृजेन्नदंतान्धावयेन्नमांसमश्नीयान्नगृहान्निरीक्षेतनाश्लीलंकिंचि
दाचरेत् नखर्वेणपिबेदंजलिनावापिबेल्लोहेनायसेनवाविज्ञायतइति लोहेनताम्रेणतथा यानखानिनिकृंततेतस्यैकुनखीयाप्रलिखतेतस्यै-
खलतिर्यापर्णेनपिबतितस्याउन्मादकइति॥तैत्तिरीयश्रुतौनखनिकृंतनंभूमौरेखाकरणंपर्णेनपानंचनिषिद्धम् बौधायनेपि अथयदामलव
द्वासास्यान्नैनयासहसंवदेतनसहासीतनास्यान्नमद्याद्ब्रह्महत्यायैह्येषावर्णंप्रतिमुच्यास्तेथोकाल्यान्याहुरभ्यंजनंवास्त्रियाअभ्यंजनमेवम्

तिथ्यात्ययकाममन्यादितिनैनामुपनयेन्नारण्येनपराचीनांनस्नानीतिवाभ्यंक्तेनप्रतिलिखतेनाभ्यंक्तेनदंतान्धावतेननखानिनिकृंततेनकृणवति-
नरज्जुंसृजतिनपर्णेनपिबतिनखर्वेणेति अनयासंभाषणेप्रतिप्रसवोधर्मप्रश्नेब्रह्माध्येष्यमाणोमलवद्वासस्थानसंभाषितुंब्राह्मणेनसंभाष्य-
तयासंभाषेतसंभाष्यतुब्राह्मणेनैवसंभाष्याधीयीतैवंतस्याःप्रजानिःश्रेयसमितिवचनाद्विधवापिसंभाषेणेनैतत्कार्यमितिहरदत्तः शौचगा
नरोदनहसनपाननारीस्नुतानुलेपनदिवास्वप्नदंतधावनमौन कायिकवाचिकमानसिकदेवतार्चननमस्काररजस्वलांगनास्पर्शनतत्संभाषणरजो
वस्त्राणांसंत्यागंनकुर्यादितिविशेषः यद्यपिदक्षेण अंजनाभ्यंजनेस्नानंप्रवासंदंतधावनं नकुर्यात्सार्त्तवानारीगृहाणामीक्षणंतथेतिनस्ना
नमात्रंनिषिद्धम् तथाप्युपरागादिनिमित्तकस्नानेप्रसक्तेवसिष्ठेननाप्स्नायादितिमज्जनंनिषिध्यते अतएवपराशरेणनियमःस्मर्यते स्ना
नेनैमित्तिकेप्राप्तेनारीयदिरजस्वला पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेत् सिक्तगात्राभवेदद्भिःसांगोपांगाकथंचन नवस्त्रपीडनंकुर्यान्ना
न्यद्वासश्चधारयेदिति रजस्वलायाःप्रथमदिननिर्णयस्तुपारिजातेचतुर्विंशतिमते पूर्वार्धशायोस्तुरात्रौचेज्जननंमरणंरजः दृष्टंपूर्वंदिना
दित्वंतृतीयेदुत्तरेहनि केचिद्दिवोदितेसूर्येजननंमरणंतथा रजोवादृश्यतेस्त्रीणांयस्याहस्तस्यशर्वरी अपरेत्वर्धरात्रात्प्राक्सूतौरजसिसूत-
के पूर्वमेवदिनंप्राहुरूर्ध्वंचेदुत्तरेहनीति अत्रदेशाचारतोव्यवस्था स्नातायाःकालांतरेपुनःरजोदर्शनेत्रिरात्रव्रताभावेव्यवस्थोक्ता तत्रैवसं
ग्रहे ऋतुस्नातातुयाप्रौढापुनरेवरजस्वला स्नातात्सप्तदशाहेचशौचेनैवसुनिर्भवेत् अष्टादशाहेत्वेकाहंद्व्यहमेकोनविंशतौ विंशात्प्रभृत्युत्त

रेषुत्रिरात्रमशुचिर्भवेत् एतद्यस्याः किंचिदूने पूर्णे मासि रजो नियमस्तद्विषयम् कश्यपस्तु एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ऊर्ध्वं त्रिरात्रं वि
ज्ञेयमिति कुंडलिनोदितमिति एतत्पक्षादूर्ध्वं यस्या रजो नियमस्तद्विषयम् अथ रजस्वलाशुद्धिप्रकारः स्मृत्यर्थसारे रजस्वला षष्टिमृत्तिकाभिः
शौचं कृत्वा मलं प्रक्षाल्य दंतधावनपूर्वकं संगवे स्नायादिति स्नानोत्तरं विशेषः स्नात्वान्यं पुरुषं नारी न स्पृशेत्तु रजस्वला यदि स्पर्शेत्तदा प्रायश्चि-
त्तमाह ईक्षयेद्भास्करं देवं ब्रह्मकूर्चं ततः पिबेत् केवलं पंचगव्यं च क्षीरं वाचात्मशुद्धय इति लैंगे ज्वरितायाः शुद्धिस्तु संग्रहे आतुरा चेद्दतुमतीत
स्याः स्नानं कथं भवेत् स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो त्वनातुरा वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमं ब्राह्मणान्भोजयित्वा च पुण्याहेन
विशुद्ध्यति आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयत इति रजस्वलयोः परस्परं संसर्गे शुद्ध्युपायः स्मृतिमंजर्यां उदक्ये द्वे तु संस्पृष्टे सवर्णे चैक-
भर्तृके तयोः स्नानं मिथः स्पर्शे पंचगव्यं ततः पिबेत् सवर्णयोनिसंबंधे सगोत्रे च रजस्वले मिथः स्पृशेदमत्या तु स्नानमात्रेण शुद्ध्यति मत्यैक
रात्रं नाश्नीयात्पंचगव्यं पिबेत्ततः उदक्ययोर्यदान्योन्यमसंबंधः सवर्णयोः स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्यात्तु चिर्भवेत् मत्या तु नाद्यादासु
द्धेः कृत्वा चेत्स्मिनिवासरम् उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया उपवासे न शक्ता चेत्तत्समं दानमाचरेत् संभाषेत्तां स्पृशेत्तां वा ब्राह्मण्यौ च
रजस्वले आस्नानकालान्नाश्नीतामशुभे मत्या मिथः क्वचित् स्नात्वोपवासं कुर्यातां पंचगव्येन शुद्ध्यतः एवमभ्यासतः शुद्ध्यै प्रायश्चित्तं समाच
रेत् मत्या रजस्वलान्योन्यं वृषली ब्राह्मणी भवेत् इत्यतः पूर्वं स्पृष्टेति विशेषः ब्राह्मण्याः कृच्छ्रमेकं तु शूद्री पादेन शुद्ध्यति कश्यपः रजस्व

३

लासूतिकावाचांडालंयदिसंस्पृशेत् आस्नानकलान्नाश्नीयादतिकृच्छ्रंसमाचरेत् ज्ञानतःस्पर्शेनैतत् चांडालंसार्त्तवानारीसंस्पृशेद्भोजनांतरे वा
गयताबहिरासीतास्नानकालादुपोषिणी प्राजापत्यंचरेत्पश्चात्संचगव्यंततःपिबेत् विप्रान्द्वादशसंख्याकान्भोजयित्वातुशुद्ध्यति पुष्पिणींसं-
स्पृशेन्मोहादशुद्धंवानरंस्पृशेत् स्नानादर्वाङ्भुंजीतकृत्काकृच्छ्रंसमाचरेत् मोहादज्ञानतः स्पृष्ट्वोदक्यापंचनखान्द्विशफैकशफान्पशून्
अंडजानिचसर्वाणिनाद्यादास्नानवासरात् पराशरः रजस्वलायदादृष्टाशुनाजंबूकरासभैः पंचरात्रंनिराहारापंचगव्येनशुद्ध्यति ऊर्ध्वंतु
द्विगुणंनाभेर्वक्त्रेतुत्रिगुणंतथा चतुर्गुणंस्मृतंमूर्ध्निदंशेन्यत्रव्रतीभवेदिति अथदुष्टरजोदर्शनेशांतिमाहशौनकः आर्तवानांतुनारी-
णांशांतिंवक्ष्यामिशौनकः अन्नपुत्रादिलाभायदंपत्योरभिवृद्धये पंचमेन्हिचतुर्थेन्हिग्रहातिथ्यपुरःसरम् तस्मिन्नहनिकर्तव्यक्रतुहोमोवि
धानतः आचार्यंवरयेत्प्राज्ञोभुवनेश्वरितुष्टये होमार्थंचजपार्थंचवरयेदृत्विजोबहून् यजमानोद्विजैःसार्धंशांतिहोमंसमाचरेत् गृहादीशा
नदिग्भागेदेवतापूजनायच द्रोणप्रमाणधान्येनव्रीहिराशित्रयंभवेत् कुंभत्रयंन्यसेद्राशौतंतुवस्त्रादिवेष्टयेत् पूरयेत्तीर्थसलिलैःप्रति
कुंभंपृथक्पृथक् सूक्तेनाथनवर्द्धेनप्रस्रवआपइत्यथ ऋचायाःप्रवतस्तद्वद्गायत्र्याचततःक्रमात् मध्यकुंभेक्षिपेद्धान्यमौषधानिचहेम
च ततश्चपंचरत्नानिगंधपुष्पाक्षतादिकान् औषधानिचवक्ष्येतेमुनिभिःशांतिकारणात् औदुंबरःकुशादूर्वाराजीवश्चंपबिल्वकाः विष्णु
क्रांताथतुलसीबर्हिषःशंखपुष्पिका शतावर्यश्वगंधाचनिर्गुंडीसर्षपद्वयम् अपामार्गःपलाशश्चपनसोजीवकस्तथा प्रियंगवश्चगोधू

माव्रीहयोश्वत्थएवच क्षीरंचदधिसर्पिश्चपद्मपत्रंतथोत्पलम् कुरंटकत्रयंगुंजावचाभद्रकमुस्तकाइति द्वात्रिंशदौषधानीह यथासंभवमाहृ
रेत् गजाश्वरथवल्मीकसंगमात्ह्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् कुंभस्थापनइत्येतत्तन्मंत्रेणकारयेत् मृत्तिकांचौषधा
दीनिमंत्रेणप्रक्षिपेत्क्रमात् कुंभोपरिन्यसेत्पात्रंकांस्यंवाताम्रमेववा मृन्मयंनवपात्रंवास्वस्यवित्तानुसारतः पात्रोपरिन्यसेद्रूपंप्रतिमांभुवने
श्वरीम् तन्मूल्यंवान्यसेत्तत्र इंद्राणींचपुरंदरम् आचार्यःपूजयेद्देवीमंगाद्यावरणानिच अन्योवापूजनंकुर्याद्गायत्र्यामंत्रसारया इंद्राणीं
पूजयेद्देवीमिंद्राणीमासुनारिषु क्रमेणपूजयेदिंद्रमिंद्रत्वावृषभेवयं अनेनविधिनाचार्यःपूजयेद्देवतात्रयम् आवाहनादिसकलैरुपचा-
रैःपृथक्पृथक् तन्मध्यमंस्पृशन्कुंभंमंत्रेणभुवनेश्वरीं जपेदाचार्यआहोमाच्छ्रीसूक्तंचजपेत्ततः स्पृशन्वैदक्षिणंकुंभंऋत्विगेकोजपेदथ
चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच संस्पृशन्नुत्तरंकुंभंश्रीरुद्रंरुद्रसंख्यया शन्नइंद्राग्नीसूक्तंचतत्रचैवस्पृशन्जपेत् कुंभस्यपश्चिमेदे
शेशांतिहोमंसमाचरेत् अन्वाधानंततःकुर्याद्धोमतंत्रंसमाचरेत् पूर्णपात्रनिधानांतंकृत्वाचार्योद्विजैःसह दूर्वाभिस्तिलगोधूमैःपायसेन
घृतेनच पायसंश्रपयेत्तत्रसावित्रंचहविश्चतत् कृत्वाज्य भागपर्यंतंहविरुद्वासनादिकम् तिसृभिश्चैवदूर्वाभिरेकैकाचाहुतिर्भवेत् अभि
मंत्र्यप्रयुक्ताभिर्गायत्र्याजुहुयात्क्रमात् अष्टोत्तरसहस्रंतुशतमष्टोत्तरंतुवा तिलमिश्रैश्चगोधूमैर्द्रव्येणाज्याहुतीर्हुनेत् जुहुयात्पायसेनै
वआज्येनचहुनेत्क्रमात् हविश्चतुष्टयेनैवप्रत्येकंसमसंख्यया गायत्र्यैवचहोतव्यंहविरत्रचतुष्टयं ततःस्विष्टकृतंहुत्वारज्जुमहृ

पांतथा अयाश्चेत्यादिभिर्हुत्वासमुद्रादूर्मिसूक्ततः संततामाज्यधारांतांपूर्णाहुतिमथाचरेत् परिषेचनपर्यंतंहोमशेषंसमापयेत् सहौष
धिस्थितैस्तत्रप्रतिकुंभस्थितोदकैः ऋतुमत्यांस्थिताशांतिर्दंपतीभ्यांस्रुवायच शांतिरभिषेकः अथाभिषेकमंत्राश्चप्रोच्यंतेशौनका
दिभिः आपोहिष्ठेतिनवभिःसूक्तेनचततःपरम् इंद्रोअंगत्तृचेनैवपावमानैःक्रमेणतु उभयंशृणवच्चनःस्वस्तिदाविशएकया त्र्यंबकेणा
थमंत्रेणजातवेदसएकया समुद्रज्येष्ठाइत्यादिचतुर्भिश्चप्रसिद्धकैः त्रायंतामितिमंत्रैश्चत्रिभिश्चैभिर्यथाक्रमं इमाआपस्तृचेनैवदेव
स्यत्वेतिमंत्रतः मंत्रेणाथतमीशानंत्वमग्नेरुद्रइत्यथ तमुष्टुहीतिमंत्रेणभुवनस्यपितरंतथा यातेरुद्रेतिमंत्रेणशिवसंकल्पमंत्रतः इंद्र-
त्वाद्वृषभंवयंमंत्रैश्चैवाभिषिंचयेत् साचवस्त्रांतरंधृत्वापुनश्चोपवसेत्सती उपवासोत्रसमीपावस्थानं विप्रान्विधिवदभ्यर्च्यगंधपुष्पा
क्षतादिभिः धेनुंपयस्विनींदद्यादाचार्यायचभूषणैः सदक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिने ऋत्विग्भ्यश्चापिसर्वेभ्योदद्याद्वैदक्षिणांततः
महाशांतिंप्रजप्याथविप्राशीर्वचनंततः ब्राह्मणान्भोजयेत्सम्यग्भुंजीतस्वजनैःसह स्मृतौ ब्राह्मणान्भोजयित्वातुदेवज्ञंभोजयेत्ततः
एवंयःकुरुतेशांतिंशौनकोक्तप्रकारतः तदनिष्टंतुसकलंसद्यएवविनश्यतीति जपेदाचार्यइति अन्वाधानात्मकहोम तंत्रारंभपर्यंत-
मित्यर्थः अनेनैवाशयेनान्वाधानंततःकुर्यादितिश्लोकेआचार्यग्रहणम् ततश्चाग्निस्थापनादिग्रहपूजांतंयजमानेनकर्तुमुचितम्
श्रपयेत्तत्रेतिगृहसिद्धान्नग्रहणंव्यावर्त्यते सावित्रंचहविश्चतदित्यत्रतच्छब्देनहविश्चतुष्टयकालेसवित्रइतिचतुर्थ्यंतेनदेवतोद्देशः

कार्यइतिज्ञाप्यते लभ्यतेचात्रमंत्रसंवादः पार्वणोष्विनितद्भिन्नविसंवादिनोमंत्रात्पूर्णमासायेत्युद्देशोंगीक्रियतेयाज्ञिकैः संवादेतुकेसुति-
कन्यायेनैवतत्सिद्धिः नचैवंभुवनेश्वरीदैवत्यहोमाभावापत्तिः वाचनिकत्वेन इष्टत्वात् वस्तुतस्तुषुञ्प्राणिप्रसवइतिधातोर्व्युत्पन्नःसवि
तृशब्दःप्रकृतफलदात् त्वेनप्रथमप्रयाजेसमिद्धब्दोग्नेरिवलिंगानादरेणभुवनेश्वरीप्रतिपादकइतिनविरोधः मुख्यदक्षिणाशक्तौनिष्क्र
योदक्षिणादेया तमाहकात्यायनः दशकार्षापणाधेनावितिअष्टावनडुहिस्मृताइतिच कार्षापणमाहनारदः कार्षापणोदक्षिणस्यांदिशि
रौप्यःप्रवर्त्तते पणैर्निबद्धःपूर्वस्यांषोडशैवपणासत्विति अथरजोदर्शनशांतिप्रयोगः बहुतरदोषदुष्टेप्रथमरजोदर्शनेद्वितीयादिर
जोदर्शनोत्तरंस्वल्पदोषदुष्टेतुतदनंतरमेवगर्भाधानप्रत्यासन्नदिनेसाकार्या कर्त्तापत्न्यासहकृतस्नानादिनित्यक्रियःपवित्रपाणिराचम्य
प्राणानायम्यदेशकालौसंकीर्त्यास्याममभार्यायाःप्रथमरजोदर्शनेईदृशदुष्टमासादिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसद्य
हमरवांशौनकोक्तांशांतिंकरिष्यइतिसंकल्प्यगणपतिपूजनादिआचार्यर्त्विग्वरणांवंकुर्यात् आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः
तथात्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रतेत्याचार्यस्य अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया सुप्रसन्नैःप्रकर्तव्यंशांतिकंविधिपूर्वक
मित्यृत्विजाम् ततोगंधवस्त्रादिभिःयथाशक्तितेषांपूजनं ततआचार्यःपवित्रपाणिःदेशकालौसंकीर्त्ययजमानानुज्ञया आचार्यकर्मकरि
ष्येइतिसंकल्प्ययदत्रसंस्थितमितिप्राच्यादिदिक्षुप्रादक्षिण्येनसर्षपान्विकीर्यशुचीवइति कृत्वापंचगव्येनतथैवप्रोक्ष्य आपोहिष्ठेतितृचेन

शुद्धाभिरद्भिस्तथैव प्रोक्ष्य कृतांजलिः स्वस्त्ययनं तार्क्ष्यमिति मंत्रद्वयेन देवतां संप्रार्थ्य फवनेश्वर्यादि प्रतिमात्रयस्य अग्न्युत्तारणं कुर्यात् अग्निः
सप्तिमिति सूक्तस्य वैश्वानरोऽग्निस्त्रिष्टुप् अग्न्युत्तारणे विनियोगः अग्निपदरहितेन अग्निः सप्तिमिति सूक्तेनाभिषिच्य पुनरग्निपदयुक्तेन तेने
वाभिषिंचेत् इत्यग्न्युत्तारणम् ततो गृहादीशान्यां मध्ये तद्दक्षिणोत्तर तश्च मही द्यौरिति मंत्राहृत्या भूमिं स्पृष्ट्वा ओषधयः समिति द्रोणप्रमा
णव्रीहिभिः तेषु देशेषु राशित्रयं कुर्यात् पलं स्वर्णाश्चत्वारः कुडवं प्रस्थमाढकम् द्रोणं च खारिका चेति पूर्वं पूर्वाच्चतुर्गुणम् इति षोडशप्रस्थात्मको
द्रोणः ततः आ कलशेष्विति मध्यदक्षिणोत्तरक्रमेण प्रक्षालितमव्रणमकालककुंभत्रयं सादयेत् मस्रुव आप इत्यस्य सूक्तस्य सिंधुक्षित्प्रैयमे
धो नद्यो जगती कलशेषूदकपूरणे विनियोगः याः प्रवत इत्यस्य वसिष्ठो नद्यः शक्वरी कलशेषूदकपूरणे विनियोगः याः प्रवत इति क्रम
प्रतिकलशं पूरणादि मंत्राणामावृत्तिः ततो गंधद्वारामिति गंधं या ओषधीरिति सर्वौषधीः ओषधयः समिति यवांश्च त्रिषु कलशेषूक्तक्र
मेण क्षिपेत् हेमपंचरत्नप्रक्षेपोत्तरं वा गंधादिप्रक्षेप इति वक्ष्यामः ततो मध्यकुंभे गायत्र्या यवव्रीहितिलमाषकंगुश्यामाकमुद्गान् क्षिप्त्वास
मद्रव्यप्रक्षेपोन गायत्र्येति हन्द्वाः तथैव उदुंबरकुशदूर्वारक्तोत्पलचंपकबिल्वविष्णुक्रांतातुलसीबर्हिःशंखपुष्पीशतावर्यश्वगंधानिर्गुंडी
रक्तपीतसर्षपापामार्गपलाशपनसजीवकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभद्रमु
स्तकारव्यानि द्वात्रिंशदौषधानि यथासंभवं वा प्रक्षिप्य त्रिष्वपि कलशेषु हिरण्यरूप इति हिरण्यं सहिरत्नानीति पंचरत्नानि गंधद्वारामिति गंधं याः फलि

नीरितिपुष्पफलानि गजाश्वरथ्यावल्मीकसंगमन्हदगोष्ठमृदः स्योनापृथिवीतिप्रक्षिप्य याओषधीरितिसर्वौषधी ःओषधयः सर्मितियवान्
कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान्निक्षिप्य युवासुवासाइतिसूत्रेणवाससावावेष्टितान्कलशकंठान्कृत्वापुष्पमाल्यादिभिःकल
शान्भूषयेत् ततःकलशानामुपरिधातुमयंवैणवंमृन्मयंवापूर्णपात्रत्रयंस्वशक्त्यनुसारेणपूर्णादर्वीतिमंत्रान्हत्यानिधायतदुपरिश्वेतवस्त्रत्रयं
चंदनादिकृतनाष्टदलयुक्तंन्यसेत् मध्यमेस्थापितप्रतिमायांभुवनेश्वरीमावाहयेत् अथभुवनेश्वरीध्यानम् उद्यद्दिनद्युतिमिंदुकिरीटांतुंगकु
चांनयनत्रययुक्ताम् स्मेरमुखींवरदांकुशपाशाभीतिकरांप्रभजेभुवनेश्वरीं गायत्र्याविश्वामित्रोभुवनेश्वरीगायत्री भुवनेश्वरीपूजनेविनि
योगः ०भुवनेश्वरीमावाहयामि एवंदक्षिणकलशे इंद्राणीमासुवृषाकपिरिंद्राणीपंक्तिः इंद्राणीपूजनेविनियोगः इंद्राणीमास्वितिऋक् १
एवमुत्तरकलशे इंद्रत्वाविश्वामित्रइंद्रोगायत्री इंद्रपूजनेवि० इंद्रत्वाइतिऋक् १ ततोमध्यमकलशे अंगाद्यावरणदेवताभ्योनमःअंगाद्या
वरणदेता आवाहयामीत्यावाह्य सप्रणवगायत्र्यंते अंगाद्यावरणसहितायैभुवनेश्वर्यै आसनंसमर्पयामीत्येवंषोडशोपचारैर्भुवनेश्वरींसं
पूज्यउक्तमंत्राभ्यांकांडानुसमयेनइंद्राणींद्रयोःषोडशोपचारैःपूजांकुर्यात् अशक्तौभुवनेश्वर्यासहैवपदार्थानुसमयेननाममंत्राभ्यांवातयोःपूज
नम् ततोमध्यमकुंभंस्पृष्ट्वा आचार्योऽष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य कर्दमानंद
श्चिक्लीतेंदिरासुतादयऋषयः श्रीर्देवता आद्यास्तिस्रोऽनुष्टुभः ततएकाप्रस्तारपंक्तिः ततोद्वेत्रिष्टुभौ ततोष्टावनुष्टुभोंत्याप्रस्तारपंक्तिः

जपेवि॰ ओंहिरण्यवर्णामितिसूक्तम् ततएकऋत्विक्दक्षिणकुंभेरुद्रसूक्तानिजपेत् यथा कद्रुद्रायेतिनवर्चस्यघोरःकण्वोरुद्रोगायत्री जपे
वि॰ कद्रुद्रायेतिसूक्तम् इमारुद्रायतवसइत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रआद्यानवजगत्योंत्येद्वेत्रिष्टुभौ जपेवि॰ इमारुद्रायेतिसूक्तं आते
पितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् जपेविनि॰ आतेपितर्मरुतांस्रुम्नमेत्वितिसूक्तम् इमारुद्रायस्थिरधन्वनइतिचतसृणांवसि
ष्ठोरुद्रआद्यास्तिस्रोजगत्योंत्यात्रिष्टुप् जपेविनि॰ इमारुद्रायस्थिरधन्वने ॰४ आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् जपेविनि॰ आवोराजानमध्व॰
तमुष्टुहीत्यस्यभौमोत्रीरुद्रस्त्रिष्टुप् जपेवि॰तमुष्टुहि यःस्विषुः॰ भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् जपेविनि॰ भुवनस्यपितरं॰ऋक् त्र्यं-
बकंवसिष्ठोरुद्रोनुष्टुप् जपेविनि॰ त्र्यंबकंऋक् अन्यऋत्विगुत्तरकलशंस्पृशन् एकादशावृत्तिभीरुद्रंजपेत् ततःशंनइंद्राग्नीतिपंचदश
र्चस्यसूक्तस्य वसिष्ठोविश्वेदेवास्त्रिष्टुप् जपेविनियोगः शंनइंद्राग्नीतिसूक्तम् ३ मध्यकुंभपश्चिमेस्थंडिलेअग्निस्थापनाग्निध्यानेकृतेस्था
पितकुंभैशान्यांवेद्यादौनवग्रहाणांतदंगदेवतानांचतत्तन्मंत्रैरावाहनंकुर्यात् सौकर्यार्थंग्रहपीठसंग्रहश्लोकोलिख्यते पंचास्रेकविमिंदुमत्रच
तुरस्रंगारकंत्र्यस्रगेराहुंशूर्पनिभेधनुष्यथशनिंकेतुंध्वजाभेनथा दीर्घेकोष्ठचतुष्टयेस्फुरगुरुंबाणोपमेत्वंद्रजंप्राचीतःक्रमतोलिखेद्ग्रहगणं
मध्येरविंवर्तुलमिति शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ प्रत्यङ्मुखःशनिःसोमःशेषादक्षिणतोमुखाइतिमत्स्यपुराणे आदित्या
भिमुखाःसर्वेसाधिप्रत्यधिदेवताःस्थापनीयामुनिश्रेष्ठानान्तरेणपराङ्मुखाइतिमहार्णवे तद्यथा प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवतादैवी

गायत्रीछंदः त्र्याल्हतीनांक्रमेणजमदग्निर्भरद्वाजभृगवऋषयः अग्निर्वायुःसूर्योदेवताःदैवीगायत्रीदैव्युष्णिकुदैवीबृहत्यश्छंदांसि सूर्या
द्यावाहनेविनियोगः तत्रग्रहपीठस्यमध्येवर्तुलेद्वादशांगुलेमंडलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैः आकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् सूर्या
वाहनेविनियोगः ओं आकृष्णेन० ॐ भूर्भुवःस्वः कलिंगदेशोद्भवकाश्यपसगोत्रसूर्यहागच्छेहतिष्ठेतिस्थापयेत् तत आग्नेयेचतुरस्रे
चतुर्विंशांगुलेमंडलेप्रत्यङ्मुखंसोमंश्वेतपुष्पाक्षतैः आप्यायस्वगोतमःसोमोगायत्री सोमावाहनेवि० ॐ आप्यायस्वसमेतुते० ॐ भू
र्भुवःस्वः यमुनातीरोद्भवात्रेयसगोत्रसोमेहागच्छेहतिष्ठेतिस्थापयेत् ततोदक्षिणेत्रिकोणेत्र्यंगुलेमंडलेदक्षिणामुखंभौमंरक्तपुष्पाक्ष
तैः अग्निर्मूर्धाविरूपोंगारकोगायत्री अंगारकावाहने० ॐ अग्निर्मूर्धादिवःककु० ॐ भूर्भुवःस्वःअवंतिदेशोद्भवभारद्वाजसगोत्रभौमे
हागच्छेहतिष्ठेतिस्थापयेत् ततईशान्येबाणाकारेचतुरंगुलेमंडलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः उद्बुध्यध्वंबुधःसौम्योबुधस्त्रिष्टुप् बुधा
वाहनेवि० ॐ उद्बुध्यध्वंसमनसःसखायः० ॐ भूर्भुवःस्वः मगधदेशोद्भवात्रेयसगोत्रबुधेहागच्छेहतिष्ठेति० ततउत्तरेदीर्घचतुरस्रेमंडले
उदङ्मुखंबृहस्पतिंपीतपुष्पाक्षतैः बृहस्पतेगृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहनेवि० ॐ बृहस्पतेअतियदर्योअर्हाद्यु० ॐ भूर्भुवः
सिंधुदेशोद्भवांगिरसगोत्रबृहस्पतेइहागच्छेहतिष्ठेति० ततःपूर्वेपंचकोणेनवांगुलेमंडलेप्राङ्मुखंशुक्रंशुक्लपुष्पाक्षतैः शुक्रःपाराशरः
शुक्रोद्विपदाविराट् शुक्रावाहनेवि० ॐ शुक्रःशुशुक्वांउषोन० ॐ भूर्भुवःस्वः भोजकटदेशोद्भवभार्गवसगोत्रशुक्रेहागच्छेहतिष्ठेति०

ततः पश्चिमे धनुराकारे द्व्यंगुले मंडले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः शमग्निरिरिंबिठिः शनिरुष्णिक् शन्यावाहने ॰ ॐ शमग्निरग्नि॰
ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चर इहागच्छ इह तिष्ठेति ॰ ७ ततो नैर्ऋत्ये शूर्पाकारे द्वादशांगुले मंडले दक्षिणाभिमुखं
राहुं कृष्णपुष्पाक्षतैः कयानोवामदेवो राहुर्गायत्री राह्वावाहने ॰ ॐ कयानश्चित्र आभुव ॰ ॐ भूर्भु॰ राठीनापुरोद्भव पैठीनसगोत्र राहो
इहागच्छ इह तिष्ठ ॰ ८ ततो वायव्ये ध्वजाकारे षडंगुले मंडले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः केतुं मधुच्छंदाः केतुर्गायत्री केत्वावा॰
ॐ केतुं कृण्वन्न केतवे ॰ ॐ भूर्भुवः स्वः अंतर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहागच्छ इह तिष्ठेति ॰ ९ यथोक्तकुसुमतंडुलाभावे यथा-
लाभमुपपन्नैः कुसुमतंडुलैः स्थापयेत् त्र्यंबकं वसिष्ठो रुद्रो नुष्टुप् रुद्रावाहने ॰ ॐ त्र्यंबकं यजामहे ॰ ॐ भूर्भुवः स्वः सूर्यदक्षिणपा-
र्श्वे ईश्वर इहागच्छ इह तिष्ठेति ॰ गौरीर्मिमाय दीर्घतमा उमा जगती उमावाहने ॰ ॐ गौरीर्मिमाय सलिला ॰ ॐ भूर्भुवः स्वः उमे इहागच्छेत्या
वाह्य इह तिष्ठेति सोमदक्षिणपार्श्वे उमां ॰ यदक्रंदो दीर्घतमा नारायणस्त्रिष्टुप् स्कंदावाहने ॰ ॐ यदक्रंदः प्रथमं ॰ ओं भूर्भुवः स्वः स्कंद इ-
हागच्छ इह तिष्ठेति भौमदक्षिणपार्श्वे स्कंदं ॰ विष्णोर्नुकं दीर्घतमा नारायणस्त्रिष्टुप् नारायणावा ॰ ॐ विष्णोर्नुकं वीर्याणि ॰ ॐ भूर्भुवः
स्वः नारायण इहागच्छेत्यावाह्य इह तिष्ठेति बुधदक्षिणपार्श्वे नारायणम् ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् ब्रह्मावाहने वि॰ ॐ ब्र
ह्मजज्ञानं प्रथमं ॰ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छेत्यावाह्य इह तिष्ठेति बृहस्पतिदक्षिणपार्श्वे ब्रह्माणं इंद्रं वो मधुच्छंदा इंद्रो गायत्री-

इंद्रावाहने॰ ओं इंद्रंवोविश्वतस्परि॰ ॐ भूर्भुवः स्वः इंद्रेहागच्छेहतिष्ठेति॰ शुक्रदक्षिणपार्श्वेइंद्रं ६ यमायसोमंवैवस्वतोयमोयमोनु-
ष्टुप् यमावाहने॰ ॐ यमायसोमंसुनुत॰ ॐ भूर्भु॰ यमेहागच्छेहतिष्ठेति॰ शनैश्चरदक्षिणपार्श्वेयमं ७ मोषुणोघोरःकण्वः कालोगा
यत्रीकालावाह॰ ॐ मोषुणःपरापरा॰ भूर्भु वःस्वःकालेहागच्छेहतिष्ठेति राहुदक्षिणपार्श्वेकालं ८ उषोवाजंप्रस्कण्वश्चित्रगुप्तोबृह
ती चित्रगुप्तावा॰ ॐ उषोवाजंहिवंस्वय॰ ॐ भूर्भुवःस्वः चित्रगुप्तेहागच्छेहतिष्ठेतिकेतुदक्षिणपार्श्वेचित्रगुप्तं ९ ततःशुक्लपुष्पाक्ष
तैःसर्वाःप्रत्यधिदेवताःस्थापयेत् अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री अग्न्यावाह॰ ॐ अग्निंदूतंवृणीमहे॰ ॐ भूर्भु॰ अग्नेइहागच्छे
हतिष्ठेति सूर्यवामपार्श्वेऽग्निं १ अप्सुमेमेधातिथिरापोनुष्टुप् अबावा॰ ॐ अप्सुमेसोमो॰ ॐ भूर्भुवःस्वः आपइहागच्छतेहतिष्ठतेतिसो
मवामपार्श्वे अपः २ स्योनामेधातिथिर्भूमिर्गायत्री भूम्यावाह॰ ॐ स्योनापृथिवि॰ ॐ भूर्भु॰ भूमेइहागच्छेहतिष्ठेतिभौमवामपार्श्वे-
भूमिं ३ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्ण्वावाह॰ ॐ इदंविष्णुर्वि॰ ॐ भूर्भु॰ विष्णाविहागच्छेहतिष्ठेतिबुधवामपार्श्वेविष्णुं ४
इंद्रःश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् इंद्रावाहने॰ ॐ इंद्रश्रेष्ठानि॰ भूर्भु॰ इंद्रेहागच्छेहतिष्ठेति बृहस्पतिवामपार्श्वेइंद्रं ५ इंद्राणीवृषाक
पिरिंद्राणीपंक्तिः इंद्राण्यावा॰ ॐ इंद्राणीमासुनारिषु॰ ॐ भूर्भु॰ इंद्राणीहागच्छेहतिष्ठेति शुक्रवामपार्श्वेइंद्राणीं ६ प्रजापतेहिरण्यग
र्भःप्रजापतिस्त्रिष्टुप् प्रजापत्यावाह॰ ॐ प्रजापतेन॰ ॐ भूर्भुवःस्वः प्रजापतेइहागच्छेहतिष्ठेतिशनिवामपार्श्वेप्रजापतिं ७ आयंगौः

सार्पराज्ञीसर्पागायत्री सर्पावाहने॰ ॐ आयंगौः पृश्नि॰ ॐ भूर्भुवः स्वः सर्पा इहागच्छथ इहतिष्ठध्वमितिराहुवामपार्श्वे सर्पान् ८ ब्रह्मज
ज्ञानंवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाह॰ ॐ ब्रह्मजज्ञानं॰ ओं भूर्भु॰ ब्रह्मन्निहागच्छेहतिष्ठेतिकेतुवामपार्श्वे ब्रह्माणं ९ ततः शुक्लपुष्पा
क्षतैर्विनायकादिपंचदेवताः स्थापयेत् गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती गणपत्यावाह॰ ॐ गणानांत्वागणपतिं॰ ॐ भू
र्भुवः स्वः गणपते इहागच्छेहतिष्ठेतिराहोरुत्तरतोविनायकं १ जातवेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गावाहने॰ ॐ जातवेदसे॰ ॐ भूर्भुवः स्वः
दुर्गेइहागच्छेहतिष्ठेतिशनेरुत्तरतोदुर्गां २ तववायोव्यश्वांगिरसोवायुर्गायत्री वाय्वावाहने॰ ॐ तववायवृतस्पते॰ ॐ भूर्भुवः स्वः वा
यविहागच्छेहतिष्ठेतिरवेरुत्तरतोवायुं॰ आदिह्रत्सआकाशोगायत्री आकाशावाहने॰ ॐ आदित्प्रत्नस्यरेतसो॰ ॐ भूर्भु॰ आकाशेहाग
च्छेहतिष्ठेतिराहोर्दक्षिणेआकाशं ४ एषोउषाः प्रस्कण्वोश्विनौगायत्री अश्व्यावाहने॰ ॐ एषोउषा अपूर्व्या॰ ॐ भूर्भु॰ अश्विनाविहा
गच्छतमिहतिष्ठतमितिकेतोर्दक्षिणेश्विनौ ५ यद्वाविनायकादीन्यंत्रोत्तरतः स्थापयेत् ततोग्रहपीठायांगतयावक्ष्यमाणदेवताः—
स्थापयेत् उत्तरेक्षेत्राधिपतिंवास्तोष्पतिंचावाहयेदित्येके क्षेत्रस्यवामदेवः क्षेत्राधिपतिरनुष्टुप् क्षेत्रपालावा॰ ॐ क्षेत्रस्यपतिना॰
ॐ भूर्भु॰ क्षेत्रपालेहागच्छेहतिष्ठेति क्षेत्रपालं ६ वास्तोष्पते वसिष्ठोवास्तोष्पतिस्त्रिष्टुप् वास्तोष्पत्यावा॰ ॐ वास्तोष्पते॰ ॐ भू॰
वास्तोष्पतेइहागच्छेहतिष्ठेतितदुत्तरे वास्तोष्पतिं ७ ततइंद्रादिलोकपालान्सूर्याभिमुखानावाहयेत् तत्रमंत्राश्च इंद्रंविश्वाजेतामधुच्छं

दाइंद्रो ऽनुष्टुप् पूर्वे इंद्रावाहने॰ ॐ इंद्रंविश्वाअवीवृधन्॰ ॐ भूर्भुवःस्वः इंद्रेहागच्छेहतिष्ठेति पूर्ववत् १ एवमुत्तरत्रापि अग्निंकाण्वोमे
धातिथिरग्निर्गायत्री अग्न्यावाहने॰ ॐ अग्निंदूतंवृणीमहे॰ २ यमायसोमंयमोयमोनुष्टुप् यमावाह॰ ॐ यमायसोमं॰ ३ मोषुणोघोरःक
ण्वोनिर्ऋतिर्गायत्री निर्ऋत्यावाह॰ ॐ मोषुणःपरापरा॰ ४ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् वरुणावा॰ ॐ तत्त्वायामिब्रह्मणा॰ ५
तववायोव्यश्वांगिरसोवायुर्गायत्री वाय्वावाह॰ ॐ तववायवृतस्पते॰ ६ सोमोधेनुंगौतमःसोमस्त्रिष्टुप् सोमावाह॰ ॐ सोमोधेनुं॰ ७ त
मीशानंगौतमईशानोजगती ईशानावाह॰ ॐ तमीशानंजगत॰ ८ एवमीशानांतादेवताआवाह्य तदस्तकमित्रावरुणा॰ गृहावैप्रतिष्ठा॰
एवंप्रतिष्ठाप्योक्ततत्तन्मंत्रैरादित्यायनमइति एवमादिभिर्नाममंत्रैर्वाषोडशोपचारैः संपूज्य मंत्रहीनंक्रियाहीनमितिक्षमाप्य ग्रहवेदी
शानभागेमहीद्यौः पृथिवीचनइत्यादिविधिनाकलशस्थापनंकृत्वा तदुपरितत्त्वायामीतिमंत्रेण वरुणंसंपूज्य तत्रकलशेसमुद्रनद्यावा
हनंकुर्यात् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुममशांत्यर्थंदुरितक्षयकारकाः ततःकलशाभिमंत्रणं कलशस्यमुखेविष्णुः॰
मूलेतत्रस्थितो॰ कुक्षौतुसागराः॰ ऋग्वेदोथ॰ अंगैश्चसहिताः॰ अत्रगायत्रीसावित्री॰ आयांतुमम॰ कारकाइत्यंतं ततःकलशप्रा
र्थना देवदानवसंवादेमथ्यमानेमहोदधौ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयि
तिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठंतिस

वैंपियतः कामफलप्रदाः त्वत्प्रसादादिमंयज्ञंकर्त्तुमीहेजलोद्भव सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ततः आचार्योऽन्वाधानंकुर्यात्
तत्रप्रधानकीर्त्तनेविशेषः सूर्यंसोमं भौमंबुधंबृहस्पतिंशुक्रंशनिंराहुंकेतुं एताः प्रधानदेवताः एतत्संख्याकाभिः अर्कादिजातीयसमिदाहु
तिभिः तावतीभिश्चर्वाहुतिभिराज्याहुतिभिश्चेतदित्यतत्स्थानेऽष्टोत्तरशतमष्टाविंशतिंवाकीर्तयेत् ईश्वरंउमांस्कंदंनारायणंब्रह्माणंइंद्रंयमंकालंचि
त्रगुप्तं अग्निंअपः भूमिंविष्णुंइंद्रंइंद्राणींप्रजापतिंसर्पान्ब्रह्माणं एताः देवताः एतत्संख्याकाभिस्तदाहुतिभिः अत्रएतदित्यस्यस्थानेपूर्व
संख्यान्यूनांअष्टाविंशतिसंख्यामष्टसंख्यांवाकीर्त्तयेत् विनायकंदुर्गांवायुमाकाशंअश्विनौक्षेत्रपालंवास्तोष्पतिं इंद्रमग्निंयमंनिर्ऋतिंवरु-
णंवायुंसोममीशानं एतादेवताः एतत्संख्याकाभिः समिदाहुतिभिः आज्याहुतिभिश्चर्वाहुतिभिश्च एतदित्यस्यस्थाने अष्टसंख्यांचतुःसं-
ख्यांवाकीर्त्तयेत् भुवनेश्वरीमष्टोत्तरसहस्रसंख्याकाभिर्दूर्वाहुतिभिः तिलमिश्रगोधूमाहुतिभिः पायसाहुतिभिराज्याहुतिभिश्च तावतीनाम
संभवेऽष्टोत्तरशतंवा भुवनेश्वरीमित्येतत्स्थानेसवितारमितिवाइंद्राणीमिंद्रंच एतत्संख्याभिर्दूर्वादिचतुर्विधाहुतिभिः अत्रएतदित्यस्य
स्थानेपूर्वसंख्यांन्यूनसंख्यांवाकीर्त्तयेत् देवताद्वयमुद्दिश्यनान्वाधानं शेषेणस्विष्टकृतमित्यादि॰ ततः पात्रासादनकालेस्थालीद्वयंप्रोक्ष
णींदर्वींस्रुवमित्यादि युगपदनेककर्तृकाज्यहोमप्रसक्तौअनेकस्रुवासादनंकार्यम् निर्वापकालेभुवनेश्वर्यादिदेवतात्रयमुद्दिश्य तूष्णींनिर्वा
पप्रोक्षणेच ततआज्यसंस्कारः ग्रहहोमार्थंकर्तव्यामंत्रवंतश्चरवः प्रतिदैवतमितियाज्ञवल्क्यवचनात् ग्रहार्थंगृहसिद्धान्नचरुं प्रोत्य

इति केचनगृहपाकौदनमुत्सृत्य ग्रहानुद्दिश्य जुह्वति तत्र शिष्टाचार एव प्रमाणमिति महार्णवे तत्रायं प्रयोगः सूर्याय त्वा जुष्टं निर्वपामीति च
तुरो मुष्टीन्निरूप्यैवं सोमाय मंगलाय त्वेत्यादित्वाकारेण ग्रहेभ्यश्चतुरो मुष्टीन्निरूप्य इतरासां देवतानां कृते देवेभ्यो जुष्टं निर्वपामीति चतुरो मुष्टीः
न्निर्वपेत् इत्यपि तत्रैवेति दिक् आज्येन सह पायसादिहविस्त्रयस्य गृहसिद्धान्नस्य च पर्यग्निकरणम् दर्वीस्रुवसंमार्गोऽनेन गृहसिद्धान्नमासा-
दितस्थाल्यामादाय अग्नावधिश्रित्याभिघारणादिबर्हिष्यासादनान्तं कुर्यात् ततः पायसमभिघार्य बर्हिष्यासादनान्तं कुर्यात् अर्कादिसमिधः
दूर्वातिलमिश्रगोधूमांश्च तत्रैवासाद्य अग्न्यर्चनाद्याज्यभागान्ते यजमानोऽन्वाधानानुसारेण एतत्संख्याहुतिपर्याप्तं अर्कादिजातीयसमिच्चर्वा
ज्यात्मकं हविस्त्रयं सूर्याय सोमायेत्यादिन ममेत्येवं त्यागपूर्वकं तदंगदेवताभ्योऽपि त्यक्त्वा एतत्संख्याकाहुतिपर्याप्तं दूर्वादिहविश्चतुष्टयं भुवने
श्वर्यै न ममेति त्यजेत् तथा इंद्राण्यै इंद्रायेति च भुवनेश्वर्यै इत्यस्य स्थाने सवित्र इति वा इंद्राणींद्रयोर्होमाभावपक्षे न तदुद्देश्यकत्यागः एवं
त्यागे कृते सर्त्विगाचार्यो ऽर्कादिसमिधो दधिमध्वाक्ताश्चर्वाहुतीराज्याहुतीश्च संकल्पानुसारिसंख्याका जुहुयात् तादृशसंख्या एव दूर्वादिह
विश्चतुष्टयाहुतीर्जुहुयात् तत्र दधिमधुघृताक्ताभिस्तिसृभिर्दूर्वाभिरेकैकाहुतिः कार्या तन्न्यूनसंकल्पानुसारिसंख्याश्चतुर्विधाहुतीरिंद्रा
णींद्रमंत्राभ्यां तद्धोमपक्षे पूर्वोक्तसंख्याहुतीर्हुत्वा स्विष्टकृदादि प्रायश्चित्तहोमान्तं कृत्वा दिक्पालादिभ्यः सदीपमाषभक्तबलिसंकल्पं यज
मानद्वारा कारयेत् सपत्नीको यजमानः प्रतिबलिं संकल्प्य साक्षतजलं त्यजेत् तद्यथा अग्न्यायतनस्य समंतात् दिक्षु माषभक्तबलीन् दि

कृपालेभ्योदद्यात् त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् इंद्रप्रीत्यर्थेबलिदानेविनियोगः ॐ त्रातारमिंद्र० इंद्रायसांगायसपरिवारायसायुधायसश
क्तिकायएषमाषभक्तबलिर्नमम भोइंद्रदिशंरक्षबलिंभक्षममयजमानस्यसहकुटुंबस्यायुःकर्त्ताक्षेमकर्त्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्त्ता
भवेतिपुष्पाक्षतजलानिपूर्वाभिमुखस्त्यजेत् १एवमग्न्यादिसप्तभ्योदिक्पालेभ्यस्तत्तन्मंत्रैर्बलिंदद्यात् तद्यथा अग्निंकाण्वोमेधातिथिर
ग्निर्गायत्री अग्निप्रत्यर्थेबलिदानेवि० ॐ अग्निंदूतंवृणी० अग्नयेसांगाय० २ यमायसोमंवैवस्वतोयमोयमोनुष्टुप् यमप्रीत्यर्थेबलिदा०
ॐ यमायसोमं० यमायसांगाय० ३ मोषुणोघोरःकण्वोनिर्ऋतिर्गायत्री निर्ऋतिप्रीत्यर्थेबलि० ॐ मोषुणःपरापरा० निर्ऋतयेसांगाय० ४
तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप् वरुणप्रीत्यर्थे० ॐ तत्वायामिब्रह्मणा० वरुणायसांगाय० ५ तववायोव्यश्वांगिरसोवायुर्गायत्री वायु
प्रीत्यर्थेबलि० ॐ तववायवृतस्पते० वायवेसांगाय० ६ सोमोधेनुंगोतमःसोमस्त्रिष्टुप् सोमप्रीत्यर्थे० ओंसोमोधेनुंसोमोअर्वंत० सोमाय
सांगाय० ७ तमीशानंगोतमईशानोजगती ईशानप्रीत्यर्थे० ॐ तमीशानंजगत० ईशानायसांगाय० ८ ततोग्रहबलयोदेयाः तत्रपूर्वंआ
कृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् सूर्यप्रीत्यर्थे० ॐ आकृष्णेनरंजसा० आदित्यायसांगायसपरिवारायईश्वराग्निरूपाधिदेवताप्रत्यधि
देवतासहितायेमंसदीपंमाषभक्तबलिंसमर्पयामिइतिपुष्पंक्षिपेत् भोआदित्येमंबलिंगृहाणममयजमानस्य० १ आप्यायस्वगोतमःसो
मोगायत्री सोमप्रीत्यर्थे० ॐ आप्यायस्वसमेतु० सोमायसांगाय० उमाब्रूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि० २ अग्निर्मूर्धाविरूपोगा

रकोगायत्री भौमप्रीत्यर्थं बलिदा॰ ॐ अग्निर्मूर्धादिवः॰ भौमायसांगाय॰ स्कंदभूमिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि॰ ३ उद्बुध्य-
ध्वंबुधोबुधस्त्रिष्टुप् बुधप्रीत्यर्थं॰ ॐ उद्बुध्य ध्वंसमनसः॰ बुधायसांगाय॰ नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतायेत्यादि॰ ४ बृहस्पते
गृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पतिप्रीत्यर्थंबलि॰ ॐ बृहस्पतेअति॰ बृहस्पतयेसांगाय॰ ब्रह्मेंद्ररूपाधिदेवताप्रत्यधिदेवतासहितायेत्या-
दि ५ शुक्रः पाराशरः शुक्रोद्विपदाविराट् शुक्रप्रीत्यर्थंबलि॰ ओं शुक्रः शुशुक्वा उषोन॰ शुक्रायसांगाय॰ इंद्रेंद्राणीरूपाधिदेवताप्रत्यधिदेव
तासहितायेत्यादि ६ शमग्निरिरिंबिठिः शनिरुष्णिक् शनिप्रत्यर्थं॰ ॐ शमग्निरग्निभिः॰ शनैश्चरायसांगाय॰ यमप्रजापतिरूपाधिदेवताप्र
त्यधिदेवतासहितायेत्यादि ७ कयानोवामदेवोराहुर्गायत्री राहुप्रीत्यर्थंबलि॰ ओंकयानश्चित्र॰ राहवेसांगाय॰ कालसर्परूपाधिदेवताप्रत्य
धिदेवतासहितायेत्यादि॰ ८ केतुंकृण्वन्मधुच्छंदाः केतुर्गायत्री केतुप्रीत्यर्थं॰ ॐ केतुंकृण्वन्न॰ केतवेसांगाय॰ चित्रगुप्तब्रह्मरूपाधिदेवताप्र
त्यधिदेवतासहितायेत्यादि ९ ततः गणानांत्वागृत्समदोगणपतिर्जगती गणपतिप्रीत्यर्थंबलिदाने॰ ॐ गणानांत्वागण॰ गणपतयेसां-
गायसपरिवारायऋद्धिबुद्धिसहितायेत्यादि १ जातवेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गाप्रीत्यर्थं॰ ॐ जातवेदसेसुनवाम॰ दुर्गायैसांगायैसपरि
वारायैसायुधायैसशक्तिकायैइमंबलिं॰ भोदुर्गेममयजमानस्यायुःकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीऋद्धिकर्त्रीभव २ तववायोव्यश्वांगिरसोवायु
र्गायत्री वायुप्रीत्यर्थं॰ ॐ तववायवृत॰ वायवेसांगायेत्यादि॰ ३ आदित्प्रत्नस्यवत्सआकाशोगायत्री आकाशप्रीत्यर्थं॰ ॐ आदित्प्रत्नस्यरेत॰

आकाशायसांगायेत्यादि ४ एषोउषाः प्रस्कण्वोश्विनौगायत्री अश्विप्रीत्यर्थेबलि० ॐ एषोउषाअपूर्व्या० अश्विभ्यांसांगाभ्यांसपरिवाराभ्यां-
सायुधाभ्यांस शक्तिका भ्यामेषमाषभ क्तबलिं० भोअश्विनौ अमुंबलिंगृह्णीतंममयजमानस्याआयुःकर्त्तारौक्षेमकर्त्तारौभवतं ५ वास्तोष्पतेव
सिष्ठोवास्तोष्पतिस्त्रिष्टुप् वास्तोष्पतयेसांगायेत्यादि ६ ततोगायत्र्याविश्वामित्रोभुवनेश्वरीगायत्री सवितागायत्रीतिवा भुवनेश्वरिप्रीत्यर्थे
ॐ० भुवनेश्वर्यैसांगायैइत्यादि सवित्रेइत्यादिवा ७ ततइंद्राणीइंमंत्राभ्यांपूर्वोक्ताभ्यांक्रमेणतदुभयोद्देशेन बलिंदत्वाक्षेत्रपालायबलिंदद्या
त् क्षेत्रस्यवामदेवःक्षेत्रपालोनुष्टुप् क्षेत्रपालप्रीत्य० ॐ क्षेत्रस्यपतिना० क्षेत्रपालायसांगायसपरिवारायभूतप्रेतपिशाचराक्षसडाकिनीशा-
किनीवेतालपरिवारयुतायइमंमित्यादि० ततःशूद्रादिनातद्बलिनयनेकृतेशांतापृथिवीतिभवंप्रोक्ष्यसयजमानआचार्यःप्रक्षालितपाणिपा
दआचांतःस्रुचिद्वादशगृहीतंचतुर्गृहीतंवा आज्यमादायतदुपरि वस्त्रयुतंचंदनादिभूषितंफलंनिधाययजमानतत्पत्न्यन्वारब्धस्तिष्ठन्
पूर्णाहुतिंजुहुयात् समुद्रादूर्मिरितिसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् अंत्याजगती पूर्णाहुतिहोमेविनियोगः ॐ समुद्रादूर्मिर्मधुमांउदा०
सूक्तांतेस्वाहा अग्नय० ततःपूर्णपात्रनिनयनंकृत्वासाचार्योयजमानःसंस्थाजपेनोपस्थायपरिस्तरणविमोकादिपर्युक्षणांतंकुर्यात् त-
तोधृतनवकंचुकीवस्त्रयावामभागस्थयापत्न्यासहितंप्राङ्मुखंयजमानंसर्त्विगुदङ्मुखआचार्यःस्थापितकलशचतुष्टयाद्भिःपात्रांतरेगृहीता
भिःतत्रत्यपंचपल्लवैःसकुशदूर्वैरभिषिंचेत् आपोहिष्ठेतितिस्रवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री पंचमीवर्द्धमानासप्तमीप्रतिष्ठांत्येद्वेअ

नुष्टुभौ अभिषेकेवि० ओं आपोहिष्ठामयोभुव० १ इंद्रोअंगेतितृचस्यगृत्समदइंद्रोगायत्री अभिषेके० ओं इंद्रोअंगमहद्भय० ३ त्रिभिष्ट्वंदेवेतिस
प्तर्चस्यसूक्तस्यवसिष्ठऋषिः आद्यानांतिसृणामग्नि श्चतुर्णांविश्वेदेवा आद्यागायत्रीद्वितीयानुष्टुप्तिस्रोगायत्र्योंत्येद्वे अनुष्टुभौ अभिषेके०
ॐ त्रिभिष्ट्वंदेवसवित० ७ उभयंशृणवच्चनइति भर्गइंद्रोबृहती अभि० ॐ उभयंशृणवच्चन० १ स्वस्तिदाविशइत्यस्य भारद्वाजः शासइंद्रोनुष्टु
प् अभिषे० ओं स्वस्तिदाविशस्पति० १ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् अभिषेके० ॐ त्र्यंबकंयजा० १ जातवेदसेकश्यपोदुर्गात्रिष्टुप् अभिषेकेवि०
ॐ जातवेदसेसुनवाम० १ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् अभि० ओं समुद्रज्येष्ठाःसलिल० ४ त्वायंतामितिचतसृणांसप्त
ऋषय आपोनुष्टुप् अभिषेके० ओं त्वायंतामिह० ४ इमाआपइतिचतसृणांसप्तऋषयआपोनुष्टुप् अभिषेके० ॐ इमा आपःशिवतमा० ४ देव
स्यत्वासवितुः हस्ताभ्यांसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंचामि देवस्यत्वा० अश्विनोर्भैषज्येन तेजसेब्रह्मवर्चसायाभिषिंचामि दे
वस्यत्वा० इंद्रस्येंद्रियेणश्रियैयशसेबलायाभिषिं० तमीशानंगौतमईशानोजगती अभिषेके० ओं तमीशानंजगत० १ त्वमग्नेगृत्समद्रोरु
द्रोजगती अभिषेके० ॐ त्वमग्नेरुद्रोअ० १ तमुष्टुत्यांगिरसस्त्रिरश्चीनोरुद्रस्त्रिष्टुप् अभिषेके० ओं तमुष्टुहियःस्विषुः० १ भुवनस्यपितरंमृजि
श्वारुद्रस्त्रिष्टुप् अभिषेके० ॐ भुवनस्यपितरं० १ यातेरुद्रेतिकश्यपोरुद्रःस्वराळनुष्टुप् अभिषेके० ओं यातेरुद्रशिवातनू० १ यज्जाग्र
तइतिषण्णांप्रजापतिर्मनस्त्रिष्टुप् अभिषेकेविनि० ओं यज्जाग्रतो० येनकर्मा० यत्प्रज्ञानं० येनेदंभूतं० यस्मिन्नृचः० सुषारथि० ६ इंद्रत्वावृ

षभमितिपंचानांविश्वामित्रइद्रोगायत्री अभिषेके० ओं इंद्रत्वावृषभंवयं०५ सुरास्त्वामभिषिंचंत्वित्यादिपुराणमंत्राः सुरास्त्वामभिषिं-
तुब्रह्मविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते आखंडलोग्निर्भगवान्यमोवैनिर्ऋति
स्तथा २वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ३कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः
बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ४एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाःग्रहा-
स्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ५देवदानवगंधर्वायक्षराक्षसपन्नगाः ऋषयोमुनयोगावोदेवमातरएवच ६ देवपत्न्योद्रुमानागादैत्या
श्चाप्सरसांगणाः अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच औषधानिचरत्नानिकालस्यावयवाश्चये सरितःसागराःशैला स्तीर्था
निजलदानदाः एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धयेइति तच्छंयोराहृणीमृहे० ततःकलशोदकेनान्येनचजलेनतैलाभ्यंगसर्वौषध्य
नुलेपनपूर्वकंस्नातौदंपती अभिषेककालीनवासांसिपरित्यज्य अहतशुक्लवासांसिपरिधायश्वेतचंदनपुष्पधारणंकुर्यातां स्वकवा
मांस्याचार्यस्य अग्नेःपश्चादुपविश्यदक्षिणतःपत्नी ततोविभूतिधारणंकृत्वाचार्यादीनांचरणक्षालनगंधाक्षतैःपूजनंकृत्वाचार्या
यधेनुंदद्यात् तदभावेउक्तनिष्क्रयं रुद्रजापिनेनड्वाहंसदक्षिणंउक्तनिष्क्रयंवा ऋत्विग्भ्योयथाशक्तिहेमतन्निष्क्रयंवादद्यात् ततोभुव
नेश्वर्यादीनांआदित्यादीनांवरुणस्यचाचार्येणोत्तरपूजनेकृतेतन्द्धस्तेनैवउत्तिष्ठब्रह्मणस्पतइत्यादिविसर्जनेजातेसोपस्कारप्रतिमाः

तद्भस्मेप्रतिपाद्याग्निपूजांतेगच्छगच्छेत्यग्निंविसृज्यकर्मांगदेवताप्रीत्यर्थंब्राह्मणभोजनंसंकल्प्यभूयसींदक्षिणांचसंकल्प्यशांतिसूक्त
पाठंकारयित्वाकर्मपूर्णमस्त्वितिवाचयित्वापरमेश्वरार्पणंकुर्यात् इतिश्रीमदनंतदेवीयेसंस्कारकौस्तुभेदुष्टरजोदर्शनशांतिः अ
यंशौनकोक्तप्रकारोबह्वृचानां अन्येषांप्रकारांतरंमदनरत्नेऋषिपुत्रसंहितायाम् प्रथमार्तवदोषाणांशांतिंकुर्यादनंतरं तिथिनक्षत्र
वारादिदेवानांपूजनंपृथक् शांतिस्थलंप्रकुर्वीतविधिनादैवनिर्मिते उद्यानेवानदीतीरेतडागेवाथचत्वरे मंडलंकारयेत्तत्रगोमयेनद्वि
हस्तकं स्थंडिलंकारयेत्तत्रचतुराढकशालिभिः आढकंतंडुलंचैवआढकौतिलयावकौ उपर्युपरिसंस्तीर्णेतन्मध्येनलिनंलिखेत्
दर्भैराच्छाद्यतन्मध्येकर्णिकायांन्यसेद्घटं ससूत्रंसपिधानंचसकूर्चंवस्त्रवेष्टितम् पुण्योदकेनसंपूर्णमौषधादिसमन्वितं सहदेव्ये-
कपत्राचविष्णुक्रांतासमद्रिका बिल्वपत्रंसहैतानिचूर्णयित्वान्यसेद्घटे कुष्टमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचोरश्चमुस्ताख्याः
सर्वौषध्यःप्रकीर्तिताः गजाश्वरथ्यावल्मीकसंगमात्ह्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंचकुसुदंतथा
शुक्तिफलानिच वज्रवैडूर्यमाणिक्यविद्रुमाणिविनिक्षिपेत् एवंकुंभंसमासाद्यगंधपुष्पाक्षतादिभिः अनुष्ठानपरोविप्रःप्राङ्मुखोवा
प्युदङ्मुखःआसीनःक्रपसन्नात्वाप्राणसंयमनान्वितः सावित्रींचजपेत्कुंभंस्पृशन्दशशतंद्विजः एवंप्रदोषकालेतुकारयेदपरेह्
नि उदयेसमनुप्राप्तेस्नातांगंधाद्यलंकृतां स्नापयेच्छांतिमन्विच्छन्पूर्वाण्हेप्राङ्मुखींस्थितां अधिवासितकुंभस्यतोयैश्चापिसमंत्रकैः

पश्चाच्छेषोदकेनैव स्नात्वा देवं प्रणम्य च स्वगृह्योक्तविधानेन होमं कुर्यात्प्रयत्नतः दूर्वाज्येन तिलैर्हुत्वा सावित्र्या चैव मंत्रतः अष्टोत्तरसहस्रं
वा शतमष्टाधिकं तथा तत्संख्यां त्रिविधं हुत्वा दूर्वाज्येन तिलैः समं ब्राह्मणान्भोजयित्वा तु देवं संपूजयेत्ततः अनेन विधिना नारी सर्वदोषा
त्प्रमुच्यते अनंतरं चतुर्थदिवसे यदा तिथ्यादीनां प्रशस्ता बहवो दुष्टाश्चाल्पास्तदा चतुर्थदिवसे शांतिकर्म विधाय प्रशस्तकाले संगमं कुर्या
त् इत्युपन्यस्य मदनरत्ने उक्तशांत्युपन्यासात् पृथक् शांतो पूर्वं देवनिर्मिते अकृत्रिमे तडागे तत्समीपे उक्तपरिमाणे श्वतुर्भिर्द्रव्यैरुपर्युपरि सं
स्तीर्णे स्थंडिलं कृत्वा मध्ये कमलं लिखेत् शुभैरित्यंते अर्चयेत्कुंभे वरुणमिति शेषः जपार्थं ब्राह्मणवरणं सूचयन्नाह अनुष्ठानेति स्ना
पयेत्स एव ब्राह्मणः यजमानं प्रत्याह स्नात्वेति देवं वरुणं होमे सविता देवता इति श्रीमदनंतदेवीये संस्कारकौस्तुभे मदनरत्नोक्तार
जोदर्शनशांतिः अथ बोधायनोक्तारजोदर्शनशांतिः ऋतुशांतिं व्याख्यास्यामः तिथिवारनक्षत्रलग्नदोषशांत्यर्थं चतुर्थेऽह्नि पंच
मेऽह्नि वा शांतिस्नानं कुर्वीत देवालये गृहे वा प्रस्थाष्टभिर्धान्यैस्तदर्द्धैस्तंडुलैस्तदर्द्धैस्तिलैश्चारत्निमात्रं चतुरस्रं कृत्वा मध्ये नलिनमुल्लिख्य
कुशैर्दूर्वाभिः प्रतिच्छाद्य तस्मिंस्तंतुवेष्टितं कुंभं निधायापो ह्विवाइदं ॐ सर्वमित्येतेनानुवाकेनाऽब्लिंगैः शांतिकुंभमुदकैः पूरयित्वा कूर्च-
मंतर्द्धाय पंचपल्लवान् पंचमृदश्च निक्षिप्य कपित्थाश्वत्थपालाशबिल्वोदुंबुरं च नवरत्नं च निक्षिप्य नववस्त्रयुग्मेनाच्छाद्य नारिकेलफले
नापिधाय बिल्वपल्लवैश्चूतपल्लवैश्चावकीर्य पुरुषं पुंडरीकाक्षं ध्यात्वा गंधधूपदीपैरुदकुंभमभ्यर्च्याथ श्रोत्रियान्बहुश्रुतान्षट् चतुरो वा ब्रा-

ह्मणान्वरणपूर्वकमभ्यर्च्याचार्यंच नत्कुंभमन्वारभ्य वैष्णवींगायत्रींसहस्राष्टकं शताष्टकंवा तदंगंगायत्रींचवेदादिना पोहिष्ठामयोभुव
इतितिसृभोहिरण्यवर्णाःशुचयःपावकाइत्येतमनुवाकंवापवमानःसुवर्जनइत्येतमनुवाकंपुरुषसूक्तमित्येतमनुवाकमृचांप्राचीमित्येतमनुवा
कमथालंकृतांपत्नीसुरुविष्टरेतृणआसीनामापोहिष्ठामयोभुवइतितिसृभिर्हिरण्यवर्णाःशुचयःपावकाइतिचतसृभिःपवमानःसुवर्जनइ-
त्येतेनानुवाकेनप्रत्यृचमाशीर्वादपुरःसरंस्नापयेयुस्ततोनारीपंचगव्यंप्राशयित्वा यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके प्राशनात्पंचगव्य-
स्यदहत्यग्निरिवेंधनमिति शुचौसमेदेशेस्थंडिलंकल्पयित्वालौकिकाग्निंप्रतिष्ठाप्य स्वगृह्योक्तविधानेनाग्निमुखंकृत्वाविष्णुसूक्तेनशता
ष्टकसंख्याःपलाशसमिधोहुत्वैवंब्रह्मसूक्तेनान्नंरुद्रसूक्तेनाज्यंतेषामष्टादशकृत्वोथ पुण्यहोमोघृतसूक्तेनाज्येनहुत्वाततोनक्षत्रहोमंतत्त
न्मंत्रेणतस्यचतुर्दशकृत्वःपूर्ववत्समिदन्नाज्यैस्त्र्यंबकंयजामहइतितिलहोमंशताष्टकाहुतीरुपजुहुयात्स्विष्टकृत्प्रभृतिसिद्धमाधेनुप्रदा
नादथदक्षिणांदद्यादाचार्यायविशेषतःततःपुण्याहवाचनंकृत्वाततोनारीदोषात्प्रमुच्यतइत्याहभगवान्बोधायनः विष्णुसूक्तंविष्णोर्नु
कंतदस्यप्रियंतद्विष्णुःपरोमात्रयाविचक्रमेत्रिर्देवइति॰ ब्रह्मसूक्तंब्रह्मजज्ञानमितिषड्टचं रुद्रसूक्तंपरिणोरुद्रस्यहेतिःस्तुहिश्रुतमितिमी
दुष्टमःअर्हन्बिभर्षित्वमग्नेरुद्रो॰आवोराजानमितिषड्टचंशतमष्टकंचशताष्टकंअष्टोत्तरशतमित्यर्थः एतत्पूरणार्थमेवैकैकस्यषड्टच
स्याष्टादशावृत्तयोविधीयंते अथघृतसूक्तम् योब्रह्माब्रह्मणउज्जभारप्राणेश्वरःकृत्तिवासाःपिनाकी ईशानोदेवःसनआयुर्दधा

तुनसैस्मैजुहोमिहविषाघृतेनस्वाहा इदंब्रह्मणे १ विभ्राजमानःसरिरस्यमध्याद्रोचमानोघर्मरुचिर्यआगात् सम्रृत्युपाशानपनुद्यघोरा
निहायुषेणोघृतमत्तुदेवःस्वाहा इदंदेवाय २ ब्रह्मज्योतिर्ब्रह्मपत्नीषुगर्भंयमादधात्पुरुरूपंजयंतम् सुवर्णरंभग्रहमर्कमर्च्यंतमायुषेव-
र्धमानोघृतेनस्वाहा इदमर्काय ३ श्रियंलक्ष्मीमंबिकामोपलांगांषष्ठींजयामिंद्रसेनेत्युदाहुः तांविद्यांब्रह्मयोनिंसरूपामिहायुषेतर्पयामो
घृतेनस्वाहा इदंविद्यायै ४ दाक्षायण्यःसर्वयोन्यःसयोन्यःसहस्रशोविश्वरूपाविरूपाः ससूनवःसपतयःसयूथ्याआयुषेणोघृतमिदं
जुषंतांस्वाहा इदंदाक्षायणीभ्यः ५ दिव्यागणाबहुरूपापुराणाआयुश्छिंदोनःप्रमथंतुवीरान् तेभ्योजुहोमिबहुधाघृतेनमानःप्रजांरीरि
षन्मोतवीरान्स्वाहा इदंदिव्यगणेभ्यः ६ एकःपुरस्ताद्यइदंबभूवयतोबभूवभुवनस्यगोपाः यमप्येतिभुवनंसांपरायेसनोहविर्घृतमिहा
युषेत्तुदेवःस्वाहा इदंदेवाय ७ वसून्रुद्रानादित्यान्मरुतोथसाध्यानृभून्यक्षान्गंधर्वांश्चपितॄंश्चविश्वान् भृगून्सर्पांश्चांगिरसोथस-
र्वान्घृतंहुत्वास्वायुष्यामहयामशश्वत्स्वाहा इदंवस्वादिभ्यः ८ इतिघृतसूक्तम् इत्यनंतदेवीयेसंस्कारकौस्तुभेबौधायनोक्तप्र-
कारेणरजोदर्शनशांतिः अथगर्भाधानम् कश्यपः षष्ठ्यष्टमींपंचदशींचतुर्थींचतुर्दशीमप्युभयत्रहित्वा शेषाःशुभाःस्युस्तिथयो
निषेकेवाराःशशांकार्यसितेंदुजानामिति आर्योगुरुःसितःशुक्रःइंदुजोबुधः वसिष्ठः उपप्लवेवैधृतिपातयोश्चविष्ट्यादिवापारिघ
पूर्वभागे संध्यासुपर्वस्वपिमातृपित्रोर्मृतेन्हिपत्नीगमनंचवर्ज्यमिति तस्मिन्नृतौपर्वण्याद्याश्चतस्रोरात्रीर्वर्जयित्वायुग्मासुसमासु

संकौ॰
१५

षष्ठिप्रभृतिषु गच्छेत्तां पुत्रार्थं अयुग्मासु स्त्रीजन्मभयादगमनं न तु प्रतिषेधात् युग्मास्वपि रात्रिष्वेवोपगमनं नाहनि तथा चाथर्वणी श्रुतिः
प्राणं वा एते प्रस्कंदंति ये दिवा रत्या संयुज्यंते ब्रह्मचर्यमेव तद्यद्रात्रौ संयुज्यंत इति शंखलिखितावपि नार्त्तवे दिवा मैथुनं व्रजेदिति पर्ववर्जं व्रजेच्चैना
मिति मनुः पर्ववर्जमित्यनेन निषिद्धमिति तिथिनक्षत्राण्युपलक्ष्यंते निषिद्धपर्व चामावास्या पौर्णमासी च तत्र स्त्रीगमनं श्रुत्वा निषिद्धम् नामा
वास्यां पौर्णमास्यां श्रुत्वा स्त्रियमुपेयात् यद्युपेयान्निरिंद्रियः स्यादिति चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा पर्वाण्येतानि राजेंद्र रविसं
क्रांतिरेव च तैलस्त्रीमांससंभोगी च सर्वेष्वेतेषु वै पुमान् विण्मूत्रभोजनं नाम प्रयाति नरकं नृप इति विष्णुपुराणे एवं गच्छन् स्त्रियं क्षामां मघा
मूलं च वर्जयेदिति क्षामां लघ्वाहारादिना कृशामित्यर्थः अत एव बृहस्पतिः स्त्रीपुंसयोराहारविशेषं सनिमित्तमाह स्त्रियाः शुक्राधिके-
स्त्री स्यात् पुमान् पुंसोऽधिके भवेत् तस्माच्छुक्रविवृद्ध्यर्थं स्निग्धं भक्ष्यं च भक्षयेत् लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतमिति यत्तु षोडश
र्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेदित्येतद्व्याख्यावसरे मिताक्षराकारेणोक्तम् ऋतौ
श्राद्धदिनेपि गच्छतो न ब्रह्मचर्यहानिरिति तत्षोडशदिनेषु तदितरकालासंभवविषयम् पारिजाते विष्णुप्रजेशरविमित्रसमीरपौष्णमू
लोत्तरावरुणभानि निषेककाले पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यमफला विफलाः स्मरन्त्या इति विष्णुः श्रवणं प्रजेशो
रोहिणी रविर्हस्तः मित्रोऽनुराधा समीरः स्वाती पौष्णं रेवती उत्तरात्रयं वरुणः शतभिषक् एतानि पूज्यानि वसुर्धनिष्ठा शीत

१५

करोमृगः अदित्यः पुनर्वसुः एतानिमध्यमानि अन्यानिविफलानीत्यर्थः विष्णुपुराणे ऋतावुपगमः शस्तः स्वपत्न्यामवनीपते पु
न्नामर्क्षेषुशुभेकालेज्येष्ठयुग्मासुरात्रिषु ज्येष्ठासुताःसुरात्रिषु ज्येष्ठंचउत्तरोत्तरमलं ३ आश्वलायनः गर्भाधानंद्विजःकुर्यादृतौप्रथमए
वहि चतुर्थदिवसादूर्ध्वंपुत्रार्थीदिवसेसमे क्रूरदारुणभंपौष्णंदस्राग्नीचद्विदैवतम् श्राद्धाहंनैवरिक्तांचहित्वान्यस्मिन्विधीयतइति
विष्णुपुराणे यस्मिन्नृक्षेभवेद्गर्भस्तस्माद्यद्दशमंभवेत् तत्रापत्यंप्रजायेततस्मादेतत्त्रयंत्यजेदिति त्रयंमघारेवतीज्येष्ठाख्यानि आपस्तं
बः चतुर्थीप्रभृत्यांषोडशीमुत्तरामुत्तरांयुग्मांप्रजानिःश्रेयसमुपदिशंति चतुर्थ्यांरात्रौविधिनिर्वृत्तरजस्कायां रात्राविति न केवलमल्पायुः
किंत्वन्यदपि तदुक्तंलैंगे कदाचिज्जीवतिचेद्विद्याहीनंव्रताश्रमभ्रष्टंपतितपारदारकंदारिद्र्यार्णवमग्नंचतनयंसाप्रसूयतइति चतुर्थ्यांरात्रौ
त्वस्यांगम्यतेसाएवंप्रसूयतइत्यर्थः व्यासः रात्रौचतुर्थ्यांपुत्रःस्यादल्पायुर्धनवर्जितः पंचम्यांपुत्रिणीनारीषष्ठ्यांपुत्रस्तुमध्यमः स
प्तम्यामप्रजायोषिदष्टम्यामीश्वरःसुतः नवम्यांसुभगानारी दशम्यांचतुरःपुमान् एकादश्यामधर्मास्त्रीद्वादश्यांपुरुषोत्तमः त्रयोद
श्यांसुतातस्यवर्णसंकरकारिणी धर्मज्ञश्चकृतज्ञश्चआत्मवेदीदृढव्रतः प्रजायतेचतुर्दश्यांगुणौघैर्जगतीपतिः राजपत्नीमहाभागारा
जवंशगतातथा जायतेपंचदश्यांतुबहुपुत्रापतिव्रता विद्यालक्षणसंपूर्णःसत्यवादीजितेंद्रियः आश्रयःसर्वभूतानांषोडश्यांजा
यतेपुमानिति आश्वलायनः दीक्षितस्तुमहायज्ञेःपित्रोःप्राग्वत्सराद्द्विजः नैयाद्भार्यांप्रयत्नेनऋतावप्यर्थितोबुधः प्राग्रजोदर्शना

सं॰कौ॰
१६

स्त्रीनैयाद्गत्वापतत्यधः अर्थीकारेणशुक्रस्यब्रह्महत्यामवाप्नुयादिति महाभारते ऋतौगच्छतियोभार्यामनृतौनैवगच्छति यावज्जीवं
ब्रह्मचारीमुनिभिःपरिकीर्तितः तथा ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयइति अस्यवचन
स्यजायमानोवैब्राह्मणस्त्रिभि र्ऋणवान्जायतेयज्ञेनदेवेभ्यःप्रजयापितृभ्योब्रह्मचर्येणऋषिभ्यइतिश्रुतिमूलत्वेनोपपत्तेः श्रुत्यंतरक
ल्पनाया अन्याय्यत्वादजातपुत्रंप्रत्येषनियमः तथाचमनुः ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः पितृणामनृणश्चैवसतस्मात्सर्वमर्हति
यस्मिन्नृणंसन्नयतियेनचानंत्यमश्नुते सएवधर्मजःपुत्रःकामजानितरान्विदुरितिकेचित् अन्येतुऋतोर्निमित्तत्वात्प्रतिनिमित्तंनैमि
त्तिकावृत्तिर्विहिता स्मर्यतेच एष्टव्याबहवःपुत्रायद्येकोपिगयांव्रजेदित्याहुः व्यासः वृन्द्धांवंध्यामसद्वृत्तांमृतापत्यामपुष्पिणीं कन्यां
सूंबहुपुत्रांचवर्जयेन्मुच्यतेभयादिति वृन्द्धासरजस्कापिगर्भधारणादावशक्तानतुगतरजस्का अपुष्पिणीमित्यस्यपौनरुक्त्यापत्तेः
अस्यापवादः बौधायनसूत्रानुयायिपत्यतिकर्त्राविश्वकर्त्राभेदेनोक्तः त्रिरात्रंव्रतंचरेदित्युपक्रमस्यव्रतसमाप्तौ अस्तमितेआदित्ये
अन्योन्यमलंकृत्यापआचम्यवाग्यतोशय्यांगच्छतइत्युक्तं व्रतमध्येपिसहशयनमुक्तंगोभिलेन एतत्प्रभृतित्रिरात्रमेकरात्रंवाक्षारा
लवणाशिनौब्रह्मचारिणौभूमौसहशयीतामिति अनसूत्रेशय्यैक्यायुर्वारमपिमैथुनंप्रयत्नतोवर्ज्यमितिब्रह्मचारिणाविति वचनम्
एतत्प्रभृतिविवाहप्रभृति इत्यर्थः आश्वलायनोपि अतऊर्ध्वमक्षारालवणाशिनौब्रह्मचारिणावलंकुर्वाणावधःशायिनौस्यातां-

१६

त्रिरात्रं द्वादशरात्रं संवत्सरं वैकऋषिर्जायत इति चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यादिति व्रतानंतरं सूर्याविदे वध्वाउपयमनकाले परिहि
तं वस्त्रं दद्यादिति वृत्तिविद्भिः श्रीमत्प्रयोगरत्नकारैरपि अथ विवाहोत्तरं दंपत्योर्गृहप्रवेशादिनादारभ्योपक्रम्यतनःशुभेन्हि स्वस्त्यादि वाच
यित्वा स्वलंकृतां वधूमुपगच्छेत रात्राविव्युक्तम् धर्मप्रवृत्तौ नारायणः षड्‌तुषु भार्यां तेन्वयं गादिषु चरेत् अनर्तुमती भार्यास्तनसंग मि
तिकेचनेति केचनेति ऊत्थम् नगंतव्यमिति निषेधाभावः सूचितः कारिकायामपि स्वस्त्यादि वाचयित्वादौ स्त्रियं तामुपगच्छति मुहूर्तेशो
भनेतस्याः क्रीडनं स्याद्यथातथेति ज्ञानान्वेयं कारिकाज्ञातृभिः व्रतसमाप्त्यनंतरं मुहूर्ते ब्राह्मणैः स्वस्त्यादि वाचयित्वा नक्तमेव वधूमुपगच्छ
ति स्पर्शादिसंकरी करोति यथायंनमहारणतस्याः ललानचरेत् सुंदरवचनैरपेक्षितालंकारवस्त्रादिदानैः प्रीतिमुत्पाद्य लज्जामप्यपनीय
परस्पराधिमतं विषययोगमनुसरतीति विवाहप्रकरणे कात्यायनः त्रिरात्रमक्षारालवणाशिनौ स्यातामिति अथ गर्भाधानहोमः
परिशिष्टे अथर्तुमत्याः प्राजापत्यमृतौ प्रथमेनुकूलेऽहनि स्नातयान्वारब्धः प्राजापत्यस्य स्थालीपाकस्य हुत्वैता आहुतीर्जुहुयात्
विष्णुर्योनिमिति तिस्रो नेजमेषेति तिस्रः प्रजापते नत्वदित्येकामिति प्रथमग्रहणाद्द्वितीयावृत्तौ नैतत्सूर्योपस्थानांतम् अनुकूलग्रहणा
दुपगमनं यत्राहोरात्रे चिकीर्षितं तद्दिन एवैतदिति नियम्यते अतएव दिनांतरापेक्षया चतुर्थस्यैवानुकूलत्वे नत्रैवैतत् शांतिरपि तदुपयोगित्
यातत्रैव यद्यपि शुद्धा भर्तुश्चतुर्थेन्हि स्नानेन स्त्री रजस्वला दैवे कर्मणि पित्र्ये च पंचमेऽहनि शुध्यतीति मदनपारिजातोदाहृतवचनात्

सं॰कौ॰
१७

चतुर्थेऽह्निदैवकर्मार्हतानेतिप्रतीयते तथापितेनैवरजस्युपरतेसाध्वीस्नानेनस्त्रीरजस्वलेतिमनुवाक्येसाध्वीगर्भाधानादिविहितकर्मयोग्ये
तिव्याख्यानात् प्रधानानुरोधेनतदधिकारसंपत्त्यर्थंशांतावप्यधिकारसिद्धिः तथाश्रौतेषुदर्शादिष्वपित्रिरात्राणीतिवचनात्रजस्वलायाःस्ना
नदिवसेपिश्रौतकर्माणिकर्त्तव्यान्येव नतुपंचमेहनीति आपस्तंबभाष्यकारोक्तेः एवमुदाहृतमदनपारिजातग्रंथे आदिपदंउपनयनाद्यभि
प्रायं तत्रापिवक्ष्यमाणश्रीसूक्तहोमपूर्वकाभिषेकेणचतुर्थेहन्यधिकारसंभवात् अन्यदिनानुकूलत्वेशांतिपूर्वकमेतत्तत्रैवेतिव्यवस्थाबोध्या
अयंहोमोऽनाहिताग्नेःअर्धाधानिनश्चाहिताग्नेःसत्यौपासनेतत्रैवकार्यः षोडशरात्रिमध्येचंद्रतारानुकूल्येसर्वथाउक्तदिवसालाभेचतुर्थेऽह
न्यशुभेसतितत्रैवकार्यम् शांतिश्चेत्स्थापितस्मिन्नेवाहनिकार्या अथपुनःसंधानम् तन्नाशेसतिद्वादशरात्रात्पूर्वंस्थंडिलाद्यग्निप्रतिष्ठाप
नांतंकृत्वा अयाश्चेत्याहुत्योत्पाद्याग्निंतत्रकार्यं तदूर्ध्वंप्रमादाग्नित्यागेप्रत्यब्दंप्राजापत्यं एतावत्कालपर्यंतंगृह्याग्निविच्छेदजनितदोषपरि
हारद्वाराश्रीपरमेश्वरप्रीत्यर्थंएतावतःकृच्छ्रानेतत्प्रत्याम्नायद्वाराकरिष्यइतिसंकल्प्यतथैवाचरेत् ततएतावद्दिनेषुगृह्याग्निविच्छेदवशे-
नलुप्तसायंप्रातरौपासनहोमादिनित्यकर्मपर्याप्तंहौम्यद्रव्यंतन्निष्क्रयंवादातुमहमुत्सृजइतिसंकल्प्यपूर्वकंदत्वापुनःसंधानंकुर्यात् तद्यथा
देशकालकीर्तनांतेश्रीपरमेश्वरप्रीत्यर्थंविच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्येइतिसंकल्प्याग्निप्रतिष्ठापनांतंकृत्वाअग्निध्यानांतेन्वाधानं
कुर्यात् अस्मिन्नन्वाहितेग्नावित्याद्याघारदेवतेआज्येनेत्यंतमुक्त्वाऽत्रप्रधानंत्रिरग्निंपवमानंअग्निंप्रजापतिंचाज्येनअर्यमणमग्निंवरुणम

१७

ग्निंपूषणमग्निंप्रजापतिंचलाजद्रव्येणचतुर्वारंसूर्यासावित्रीमाज्येनशेषेणस्विष्टकृतमित्यादि पात्रासादनेप्रोक्षण्यादिषण्णांपत्न्यंजलेःप्राङ्मु
खस्यासादनंशूर्पस्यच सर्वेषांप्रोक्षणांतेआज्यसंस्कारः तेनसहलाजांस्त्रिःपर्यग्निकरणं आज्यस्योत्पवनमात्रेकृतेलाजानांत्रिःप्रोक्षणंस्रु-
वांजलिशूर्पसंमा र्गो तेलाजानामाज्यस्यदक्षिणतोबहिष्यासादनं आघारांतेअग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः अग्निःपवमानोदेव
ता गायत्रीछंदः पुनःसंधानप्रधानाज्यहोमेविनियोगः ॐ अग्नआयूंषि॰ इतितिसृभिर्हुत्वाअग्नयेपवमानायेदं॰ त्वमर्यमावस्कस्तुतोग्निस्त्रिष्टुप्
पुनःसंधानप्राधानाज्यहोमे॰ ओं त्वमर्यमाभवसि॰ अग्नयइदं॰ प्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् पुनःसंधानप्र॰ ॐ प्रजापतेनत्व॰ प्र
जापतयइदं॰ ततः क्षालितेजलौस्रुवेणोपस्तीर्यस्वयमेवलाजानांद्विरवदायजामदग्न्यश्चेत्त्रिरवदायस्रुवेणशूर्पस्थानवत्ताश्चाभिघार्यस्वय
मुपविष्टएवतिष्ठेत्वाअंजलिंदक्षिणपाणिनाधृत्वास्वाहाकारांतेजल्यग्रेणजुहुयात् प्रजापतिंमनसाध्यायात्तूष्णींहोमेषुसर्वत्रेतिश्रौतसूत्रं
यत्रतूष्णींशब्दविशिष्टोहोमश्चोद्य तेतत्रप्रजापतिदेवतांध्यायेत् देवतासाध्यत्वाद्धोमस्यध्यानत्वादेवमानसेसिद्धेमनोग्रहणंशब्दध्यानांतं ते
नचतुर्थ्यंतंप्रजापतिशब्दंध्यात्वातदनंतरंस्वाहेत्युपांशूक्त्वा जुहुयात् होष्विनिबहुवचनादेवप्रकरणादुत्कर्षेसिद्धेसर्वत्रग्रहणं गार्ह्येष्वपि
अस्यप्रथमार्थमितिवृत्तिः ततअर्यमणंवरुणंपूषणमितितिसृणांहिरण्यगर्भोर्यमाग्निर्वरुणाग्निः पूषाग्निरनुष्टुप् पुनःसंधानप्रधानलाजहो
मेवि॰ ॐ अर्यमणंनुदेवं॰ अर्यम्णोग्नयइदं॰ ॐ वरुणंनुदेवं॰ वरुणायाग्नयइदं॰ ॐ पूषणंनुदेवं॰ पूष्णोग्नयइदं॰ पत्न्यान्वारब्धः शूर्पकोणेनशे

षलाजान्प्रजापतिंमनसाध्यायन्स्वाहाकारेणजुहुयात् तत आनःप्रजामितिचतसृणांसूर्यासावित्रीऋषिः सूर्यासावित्रीदेवता आद्याजगती
द्वितीयात्रिष्टुप् अंत्येद्वेअनुष्टुभौ पुनःसंधानाज्यहोमे॰ ॐ आनःप्रजांजन॰ इतिचतसृभिःस्वाहाकारसमकालंस्रुवेणजुहुयात् सूर्यासावित्र्याइदं
स्रुवगताज्यशेषमनामिकयादाय समंजंत्वितिमंत्रस्यसूर्यासावित्रीऋषिः सूर्यासावित्रीदेवता अनुष्टुप्छंदः हृदयांजनेवि॰ ॐ समंजंतुविश्वे॰
स्वस्यपत्न्याश्चहृदयांजनंकृत्वाहस्तंप्रक्षाल्यस्विष्टकृदादिहोमशेषंसमाप्यदशत्रीन्वाब्राह्मणान्भोजयेत् इत्यनंतदेवीयेसंस्कारकौस्तुभे
विच्छिन्नगृह्याग्निपुनःसंधानं सर्वाधानिनापिएवमेवपुनःसंधानेनौपासनमुत्साद्यगर्भाधानपुंसवनादिहोमःकार्यः तत्रकृच्छ्रसंकल्पोद्र
व्यदानसंकल्पश्चनकार्यः गर्भाधानहोमंकर्त्तुंगृह्याग्नेःपुनःसंधानंकरिष्यइतिसंकल्पः गर्भाधानांतेग्नित्यागः अर्धाधानिनोपिऔपासन
होमाद्यकरणपक्षेप्रायश्चित्तमात्रंनद्रव्यदानम् द्विभार्यस्याग्निद्वयसंसर्गात्पूर्वमेवाग्न्यनुगमेप्रायश्चित्तं औपासनहोमीयद्रव्यमात्रदानंचका
र्येनतुस्थालीपाकादिद्रव्यदानम् अथप्रयोगः कर्त्ताप्रातरभ्यंगस्नानंकृत्वाशांत्यभावेसप्तमृत्तिकापंचपल्लवपंचत्वक्सहितैर्नूतनोदक-
कुंभैःपत्नीमपिस्नापयित्वातयासहोपविश्यदेशकालौसंकीर्त्यममास्यांभार्यायांसंस्कारातिशयद्वारास्यांजनिष्यमाणसर्वगर्भाणांबीजग
र्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानाख्यंकर्मकरिष्येइतिसंकल्प्यतदंगत्वेनगणेशपूजनादिनांदीश्राद्धांतंकुर्यात् तत्रता
वत्पूर्वापयोगित्वेनस्वस्तिवाचनमुच्यते तद्विधिमाहशौनकः स्वस्तिवाचनमेतत्तुसर्वेषामृध्दिकारणं आदावंतेचकर्त्तव्यमितियज्ञविदांमतमिति

तत्रकलशस्थापनंहारितेनोक्तं गोमयेनोपलिप्योर्वीरंगवल्लिकयार्चयेत् प्रस्थधान्योपरिस्थाप्यपूर्णाहिकलशद्वयम् दक्षिणेचोत्तरेचैवउत्तरेतुनि
धापयेत् पात्रमक्षतपूर्णंतुफलपुष्पसमन्वितमिति तत्रकलशस्यतत्रनिक्षेप्यपंचरत्नानांचलक्षणंविष्णुधर्मोत्तरे हैमाराजततास्रावामृन्मया-
लक्षणान्विताः सुवर्णंराजतंमुक्ताराजावर्त्तःप्रवालकं पंचरत्नमितिख्यातमिति कलशेनिक्षिप्यपंचत्वचःपंचपल्लवाश्चतत्रैवोक्ताः न्यग्रोधपि
प्पलप्लक्षजंबूचूततरूद्भवाः रुवनिशीमइत्यृचाधटेपंचत्वचःक्षिपेत् अश्वत्थोदुंबरःप्लक्षोन्यग्रोधश्चूतएवच पंचपल्लवमाख्यातंसर्वकर्मसुशोभ
नमिति अथप्रयोगः सपत्नीकोयजमानःकृताभ्यंगःपवित्रपाणिर्गोमयोपलिप्तरंगवल्लिकायुक्तभूतलस्थप्रस्थपरिमितधान्योपरिकलश
द्वयंसुलक्षणंशुद्धजलपूरितंसपल्लवंनिधायतत्पश्चिमदेशेयुग्मान्ब्राह्मणान्विशुद्धान्प्राङ्मुखान्दक्षिणतोवाउदङ्मुखानुपवेश्यसोत्तर-
छदेशुद्धपीठेस्वयमुपविश्यस्वदक्षिणेसंस्कार्यमुपवेश्य प्राणानायम्ययथाचारमिष्टदेवतादिनमस्कारपूर्वकंसुमुखश्चेत्यादिपठित्वादेशकालौ
संकीर्त्य अमुककर्मकरिष्येतदंगत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येतत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरि-
ष्येइतिसंकल्प्य गणानांत्वा॰ऋद्धिबुद्धिसहितंगणपतिमावाहयामि गणपतयेनमःआसनंपाद्यमर्घ्यमाचमनीयमित्यादिदक्षिणादानां
तंकृत्वानिषुसीदेतिमंत्रेणपुष्पांजलिंसमर्प्यवक्रतुंडेतिसंप्रार्थ्यस्वपुरतःमहीद्यौःपृथिवीचनइतिमंत्रावृत्त्यादक्षिणतउत्तरतश्चभूमिंस्पृशे
त् एवमुत्तरक्रियाणांतत्तत्कालानुष्ठानेमंत्रावृत्तिःपूर्वस्थापितकलशयोस्तंत्रेणमंत्रावृत्तिःओंओषधयःसमितितथैवतंडुलपुंजौकृत्वा-

आकलशेष्विति तंडुलपुंजोपरिकलशौ निधाय इमंमेगंगे इति तीर्थजलेन प्रत्येकं पूरयित्वा गंधद्वारामिति गंधं प्रक्षिप्य ओषधयः समिति स
र्वौषधीः कांडात्कांडात्प्ररोहंतीति दूर्वाः अश्वत्थेवोनिषदनमिति पंचपल्लवान् रुवतिर्भामइति पंचत्वचः स्योनापृथिवीति सप्तमृदः याःफ
लिनीरिति फलं सहिरत्नानीति पंचरत्नानि हिरण्यरूपइति हिरण्यं युवासुवासाइति वाससासंवेष्ट्य पूर्णादर्वीति पूर्णपात्रं स्थाप्य तत्त्वा
यामिशुनःशेपोवरुणस्त्रिष्टुप् पूजनेवि० ओंतत्त्वायामीति उत्तरकलशे वरुणं गंधादिभिः पूजयित्वा तत्र कलशे कलशस्यमुखेविष्णुः
कंठेरुद्रःसमाश्रितः मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ऋग्वेदोथयजुर्वेदःसामवेदोह्य
थर्वणः अंगैश्च सहिताःसर्वेकलशंतुसमाश्रिताः अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा आयांतुममशांत्यर्थंदुरितक्षयकारकाः सर्वे
समुद्राःसरितस्तीर्थानिजलदानदाः आयांतुममशांत्यर्थं० ततःकलशेविष्ण्वादीन्संपूज्याक्षतान्क्षिपेत् मातृदेवोभव पितृदेवोभव
आचार्यदेवोभव अतिथिदेवोभव आशिषःप्रार्थयंते एताःसत्याआशिषःसंतु अवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिर
स्याधायदक्षिणेनपाणिनासुवर्णपूर्णकलशंधारयित्वा दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमा
युरस्तु शिवाआपःसंतु सौमनस्यमस्तु अक्षतंचारिष्टंचास्तु गंधाःपांतुसुमंगल्यंचास्तु अक्षताःपांतु आयुष्यमस्तु पुष्पाणिपांतु
सौश्रियमस्तु तांबूलानिपांतु ऐश्वर्यमस्तु दक्षिणाःपांतुबहुदेयंचास्तु अत्रगंधाःपांत्वित्यादिभिर्मंत्रपूर्वान्हैःयुग्मान्ब्राह्मणान्गंधा-

द्विनापूजयेत् तेचस्फमंगल्यं चास्त्वित्यादिमंत्रोत्तरान्द्वौनिप्रतिब्रूयुः यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्त्तते तम-
हमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनंबहृषिसंमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्येइत्युक्तेवाच्यतामितिप्रतिब्रूयुः
भद्रंकर्णेभिः॰द्रायुः द्रविणोदाद्रविणस॰दीर्घमायुःसवितापश्चातान्॰दीर्घमायुः नवोनवोभवति॰दीर्घमायुःउच्चादिविदक्षिणावंतो॰मायुः
आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे यस्त्वाहृदाकीरिणा॰जातवेदोयशो॰यस्मैत्वंसुकृते॰अश्विनंसपुत्रिणं॰स्वस्ति संत्वासिंचामियजुषा
प्रजामायुर्धनंच॰मनःसमाधीयताम् समाहितमनसःस्मः प्रसीदंतुभवंतः प्रसन्नाःस्मः शांतिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अ
विघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवंकर्मास्तु कर्मसमृद्धिरस्तु धर्मसमृद्धि॰वेदसमृद्धि॰शास्त्रसमृद्धि॰पुत्रसमृद्धि॰धनधान्य-
समृद्धि॰इष्टसंपदस्तु॰अरिष्टनिरसनमस्तु यत्पापंतत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरेकर्मण्यविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिर॰
उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंतां इष्टाःकामाःसंपद्यंतां तिथिकरणमुहूर्तनक्षत्रसंपदस्तु तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदे
वताःप्रीयेतां तिथिकरणेमुहूर्तेनक्षत्रेसग्रहेसदैवतेप्रीयेतां दुर्गापांचाल्यौप्रीयेतां अग्निपुरोगाविश्वेदेवाःप्रीयंतां इंद्रपुरोगामरुद्गणाःप्री॰
ब्रह्मपुरोगाःसर्ववेदाः॰विष्णुपुरोगाःसर्वदेवाः॰माहेश्वरीपुरोगाउमामातरःप्रीयं॰वसिष्ठपुरोगाऋषिगणाःप्रीयंतां अरुंधतीपुरोगाएकपत्न्यःप्रीयं
तां ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ब्रह्मचब्राह्मणाश्चप्रीयंतां श्रीसरस्वत्यौप्रीयेतां श्रद्धामेधेप्रीयेतां भगवतीकात्यायनी-

प्री॰ भगवतीमाहेश्वरीप्रीयतां भगवतीपुष्टिकरीप्री॰ भगवतीतुष्टिकरी॰ भगवतीवृद्धिकरीप्री॰ भगवतीऋद्धिकरीप्रीय॰ भगवंतोविघ्नविनाय
कौप्रीयेतां भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयतां हरिहरहिरण्यगर्भाःप्रीयंतां सर्वाग्रामदेवताःप्रीयं
तांसर्वाःकुलदेवताःप्रीयंतां सर्वाइष्टदेवताःप्रीयंतां हताब्रह्मद्विषः हताःपरिपंथिनः हताअस्यकर्मणोविघ्नकर्त्तारः शत्रवःपराभवंयांतु
शाम्यंतुघोराणिशाम्यंतुपापानि शाम्यंत्वीतयः शुभानिवर्धतां शिवाआपःसंतु शिवाऋतवःसंतु शिवाओषधयःसंतु शिवावनस्पत
यःसंतु शिवाअग्नयःसंतु शिवाआहुतयःसंतु शिवाअतिथयःसंतु अहोरात्रेशिवेस्यातां निकामेनिकामेनःपर्जन्योवर्षतु फलवत्योनः
ओषधयःपच्यंतां योगक्षेमोनःकल्पतां शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां भगवा
न्नारायणःप्रीयतां भगवान्पर्जन्यःप्रीयतां भगवान्स्वामीमहासेनःप्रीयतां पुण्याहकालान्वाचयिष्ये वाच्यतां ॐ उद्गातेवशकुनेसा
मगायसि॰ मावद याज्ययायजतिप्रतिवैयाज्या॰ स्कुरुते यत्पुण्यंनक्षत्रं तद्बट्कुर्वीतोपव्युषं यदावैसूर्यउदेति अथनक्षत्रंनैति याव
त्तित्तत्रसूर्योगच्छेत् यत्रजघन्यंपश्येत् तावतिकुर्वीतयत्कारीस्यात् पुण्याहएवकुरुते तानिवाएतानियमनक्षत्राणि॰ मह्यंसहकुटुंबिने
महाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायास्यामुककर्मणःपुण्याहंभवंतोब्रुवंतु ओंपुण्याहमितित्रिः३ स्वस्तयेवायुमुपब्रवामहै॰ भ
वंतुनःआदित्यउदयनीयः॰ स्वस्त्युद्यंतिस्वस्त्युद्यंति स्वस्तिनइंद्रोवृद्ध॰ स्वस्तिनस्ताक्ष्यो॰ अष्टौदेवावसवःसोम्यासःचत॰ तेयज्ञं॰ सेव॰

मत्यंसह॰ अमुककर्मणेस्वस्ति॰ अस्मैकर्मणेस्वस्तिइतिप्रतिवचनंत्रिः ३ ऋध्यामस्तोमं॰ यशोनपक्के॰ सर्वामृन्हिमृध्नुयामिति॰ यएवंवेद ऋ
ध्यास्महव्यैर्नमसोपसद्य मित्रंदेवंमित्रधेयंनोअस्तु॰ अनूराधान्हविषावर्द्धयंतः शतंजीवेमशरदः सवीराः त्रीणित्रीणिवैदेवानामृन्हानि त्री
णिच्छंदांसित्रीणिसवनानि त्रयइमेलोकाः ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति मत्यंसह॰ अस्यकर्मणःऋद्धिंभवंतोब्रुवंतु इतित्रिः
ऋध्यतामितिविप्राःइतित्रिः ३ ॐश्रियेजातः॰ यएवंवेद यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् अमुंचलोकमिदमुचसर्वं तन्नोनक्षत्रमभिजिद्वि
जित्यश्रियंदधात्वहृणीयमानं अहेबुध्नियमंत्रंमेगोपाय यमृषयस्त्रयिविदाविदुः ऋचःसामानियजूंषि साहिश्रीरमृतासतां एतैर्मंत्रै
र्नीराजनंकारयेत् मत्यमित्यादिपूर्ववत् अमुककर्मणःश्रीरस्त्वितिभवंतोब्रुवंतु इतित्रिःअस्तुश्रीरितिप्रतिवचनंत्रिः ३ वर्षशतंपूर्णमस्तु
शिवंशिवमस्तु गोत्राभिवृद्धिरस्तु प्रजापतिःप्रीयतां ओंशुक्रेभिरंगैः॰ शोचिर्वसानः॰ तदप्येष॰ आविक्षित॰ ततःउत्तरकलशंदक्षिणह
स्तेदक्षिणकलशंवामहस्तेगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभिर्मंत्रैः वास्तोष्पतेप्रति॰ यत्त्वेमहेप्रति॰ वास्तोष्पतेप्रतरणो॰ अज
रासस्ते॰ वास्तोष्पतेशग्मया॰ पाहिक्षेमउत॰ अमीवहावास्तोष्पते॰ सरवास्मे॰ शिवं ३ ततःपत्नींवामतउपवेश्य तदुक्तं सर्वेषुधर्मकार्येषुप
त्नीदक्षिणतःस्थिता विप्रपादक्षालनेतु अभिषेकेचवामतइति ब्राह्मणाअभिषेकंकुर्युः समुद्रज्येष्ठा॰ याआपोदिव्या॰ यासांराजा॰ यासु
राजा॰ त्वायंतामिह॰ आपइद्वा॰ हस्ताभ्यांदशशाखाभ्यां॰ इमाआपःशिवतमा॰ याभिरिंद्रमभ्यषिंच॰ महांतंत्वामहीनां॰ देवस्यत्वासवि॰

भूर्भुवः स्वः तच्छंयोरावृणीमहे० मंत्रांते अमृताभिषेकोस्त्वित्वदेयुः इतिस्वस्तिवाचनम् अथशौनकाद्युक्तम् शौनकः अर्चिताब्राह्म
णाः सम्यक् गंधमाल्यैः सदक्षिणैः तिष्ठेयुः प्राङ्मुखायुग्मावक्तारो दर्भपाणयः तिष्ठेद्वाचयितानेषां दक्षिणस्यामुदङ्मुखः बिभ्रत्कुंभमपांपूर्णं
पिहिताननमर्चितं अथवाचयितुर्बाहुं दक्षिणंतु समाश्रिताः तिष्ठंत्युदङ्मुखाः सम्यक् संस्कार्यास्तत्रनत्वतु मनइत्यादिकंमंत्रंपूर्वंवाचयितावं
देत् समाहितेत्यादीतरे मंत्रंब्रूयुः समाहिताः प्रसीदंतुभवंतइत्यथवाचयित्वावदेत् प्रसन्नाः स्मइतिब्रूयुरर्चिताब्राह्मणाः पुनः शांतिपुष्ट्य-
स्त्यविघ्नाद्याः शब्दाः पंचदशैवतु अरुकशब्दांतमुच्येरन्वाचयित्वातथापरैः आशीर्वादानथान्यांश्चविविधानपिवाचयेत् अतोदेवाअवंतुनः
सूक्तंवैष्णवमुत्तमं द्रविणोदाः सवितेतिनवोविद्युन्नयेत्तिच आवदंस्त्वमित्युक्त्वाथपुण्याहंवाचयेत्ततः वाचयित्वायथाशक्तिसर्वाणि द्विजसत्त
मैः प्रकृतेतेदेवतायारुकहोमंकुर्याद्विचक्षणः तस्यानामगृहीत्वाथप्रीयतामितिचोच्यतां पुण्याहंस्वस्तिमृद्धिंच भवत्पूर्वंब्रुवंतितिप्रणवाद्यंत्रिरा
वृत्तंभवदादिविनापरे पुण्याहादेस्त्रिरभ्यासेमंद्रमध्योत्तमस्वरम् आश्रयेरन्निमेसर्वेयथागमपरंपरं प्रयुक्तिविषयेभेदस्तृतीयेत्वृत्युच्यतामिति
वक्तारोब्रूयुरस्त्वुच्चैरितिविस्पष्टमेवच पुण्याहशब्दमुक्त्वातुस्वस्तिनइत्यृचंजपेत् स्वस्तिशब्दंतथोक्त्वाचऋध्यामेतिऋचंवदेत् ऋद्धिंपवंतोब्रु
वंत्वित्युच्यतामित्यथोवदेत् आपोहिष्ठेतितिसृभिः शंनोदेवीत्यृचैकया ईशानावार्याणांचशुद्धवत्यघमर्षणं तरत्समंदीसूक्तंतुसर्वपापापनो
दनं पवरवसोममित्यादिऋग्भिः प्रोक्ष्यसमंततः पुण्याहंवाचयित्वैवंसर्वकल्याणवान्भवेत् स्वस्तिवाचनमेवंतुसर्वेषामृद्धिकर्मणां आदावं

नेचकर्त्तव्यमितियज्ञविदांमतमिति जयंतेनकारिकाकारेण अर्चिताइत्यारभ्यतथापरैरित्यंतग्रंथमित्थमेवपठित्वाप्रकृतदेवतायाइत्यारभ्य
तृतीयेत्वृत्स्यतामितीत्यंतंपठितेनतन आपइत्यादिभिःशांतिंततःकुर्युःसमाहिताइतिपठित्वांत्यश्लोकःपूर्ववदुक्तः परिशिष्टे अथसर्वसंह
स्रशांतिःपुष्टिस्तुष्टिर्वृद्धिरविघ्नमायुष्य आरोग्यंस्वस्तिशिवंकर्म समृद्धिधर्मसमृद्धिःपुत्रसमृद्धिर्वेदसमृद्धिशास्त्रसमृद्धिधनधान्यसमृद्धि
रिष्टसंपदित्येतानिपंचदश स्वंतानिवाक्यान्युक्त्वातन्नाम्नाकर्मदेवताप्रीयतामितिब्रूयुःअथवान्वयितापूर्वंतत्तल्लिंगान्मंत्रान्पठित्वात्रिस्त्रिमंद्र
मध्यमोच्चस्वरैः ॐपुण्याहंभवंतोब्रुवंत्वोंस्वस्तिभवंतोब्रुवंत्वोमृद्धिंभवंतोब्रुवंत्विति ब्रूयात् तेपितथाप्रत्येकंप्रतिब्रूयुः ॐ ऋध्यतामित्यृ
द्धौब्रूयुः अथप्राङ्मुखमासीनंसामात्यंकर्त्तारंब्राह्मणाःसपल्लवदर्भपाणयःशांतिपवित्रलिंगाभिर्ऋग्भिःसिंचेयुः पुरंध्रयोनीराजनादि-
मंगलंकुर्युरिति कर्मदेवताआहबौधायनः विवाहस्याग्निरौपासनस्याग्निःसूर्यप्रजापतयःस्थालीपाकस्याग्निःसूर्यप्रजापतयःस्थाली
पाकस्याग्निःगर्भाधानस्यब्रह्मापुंसवनस्यप्रजापतिःसीमंतस्यधाताविष्णुबलेःसविताजातकर्मणोमृत्युर्नामकर्मणःसविता तस्यांतेप्रजा
पतिरूपःनिष्क्रमणस्यसवितातस्यांतेचित्रियाणि अन्नप्राशनस्यसविताचौलस्यकेशिनस्तस्यांतेप्रजापतिरुपनयनस्येंद्रःश्रद्धामेधेअंते-
विसर्गेस्त्रुस्रुवाःपुनरुपनयनस्याग्निः अथयदिब्रह्मचर्यव्रतमाचरेत्तस्मिन्नपापहोमेसवितासमावर्त्तनस्यश्रीरिंद्रोवाशूलगवस्येशानः
प्रत्यवरोहणस्यसवितोपाकर्मणिव्रतेषुचसविताबास्तुहोमवास्तोष्पतिरंतेप्रजापतिः अयुतहोमस्येंद्रोंतेप्रजापतिरायुष्यहोमस्याग्नि

रायुष्मान् नक्षत्रहोमस्यनक्षत्रसूक्तं अष्टमीप्रदोषस्येशानः आग्रयणस्याग्रयणदेवताः सर्पबलेःसर्पाः एकोद्दिष्टस्यांतेप्रजापति स्तडागादीनां
वरुणोयक्षबलेर्यक्षाः ग्रहशांतिहोमस्यादित्यादिनवग्रहाः नागारितंत्रहोमेब्रह्मादयःप्रीयतामिति एवमेवान्येषांहोमानांयाज्याऽनुवाक्ययोर्दे
वतासोप्रीयतामिति कूपतडागांतेप्रधानोदकांतेप्रजापतिः कूष्मांडहोमस्याग्न्यादयश्चांद्रायणस्याग्न्यादयोग्न्याधेयस्याग्न्यादयोग्निष्टोमस्यै
दएवनेन्येष्टकर्मसुप्रजापतिरिति पुण्याहवाचनसूत्रेचगंधादिदक्षिणांतानांदानसमयेशिवाआपःसंत्वित्यादीनांबहुदेयंचनोस्त्वित्यंतानां-
वाचनमुक्तंबौधायनेन पारिजातधृतशौनकीयेपिदानसमयेवाक्यवाचनंविधायोक्तम् कर्त्ताथदक्षिणंजानुंपातयित्वामहीतले उदङ्मु
खोजपेत्सूक्तंश्चन्द्वयेत्येवमादिकमिति ॐपुण्याहमितिवाचनांतेचोक्तम् ततःस्वस्तिनइंद्रेतिऋचंब्रूयुःसहोभये ततोवाचयितापूर्वमों-
स्वस्तीत्यभिधायतु पश्चाद्भवंतइतिचब्रुवंस्त्विति चभाषते ओंस्वस्तीतितथैवान्येप्रतिब्रूयुरतःपरं प्रारिप्सितंचतुर्थ्यंतकाकर्मवाचयिता
ततःस्वस्तीत्याद्यंब्रुवंस्त्वंतंपूर्ववत्समुदीरयेत् वक्तारश्चचतुर्थ्यंतंतत्तत्कर्मोक्तिपूर्वकं स्वस्तीतिचप्रतिब्रूयुः ऋद्धिवाचनांतेच ततोवाच
यिताकुंभंजलंसंस्कार्यंमूर्धनि किंचित्सिंचेत्सहैवान्येब्रूयुश्चाविविधाशिषइति आश्वलायनस्मृतौ गुरोर्दक्षिणभागेतुकर्तासीततदा
ज्ञयेतिप्रक्रम्यमनःसमाधीयतामित्यादिवचनंगुरुकर्तृकमेवोक्तं ततःसावित्र्यादिमंत्रैरभिषेकमुक्त्वांतेउक्तं पुण्याहांतेर्चयेद्विप्रान्दक्षि
णाभिःस्वशक्तितःयत्किंचिच्छ्राद्धिकंभुक्त्वाप्रतिगृह्यंचवाशुचिः अब्राह्मणश्चपुण्याहेनार्हःस्यादितिमेमतिः पुण्याहवाचनेशस्त

मादौ स्यात्सर्वकर्मसु नाकृत्वैतद्बुधः कुर्यात्सर्वकर्माणि मानव इति अत्र च बह्वृचपरिशिष्टे मातृपूजननान्दीश्राद्धयोः स्वगृह्योक्तं यस्य यत्कर्म नोदितं तस्य तावति शास्त्रार्थे
कृते सर्वः कृतो भवेदिति स्वगृह्यानुक्तस्यानावश्यकत्वमभिप्रेत्य कारिकाकृज्जयंताभ्यां परिशिष्टमनुसृतम् तत्र च प्रशस्तानिति ब्राह्मणवि
शेषणं किमाशयमित्याकांक्षासत्वात्स्मृत्युक्तं श्राद्धभोजनप्रतिग्रहादिसाहित्यं ग्राह्यम् यद्यपि ब्राह्मणपूजनं आरंभे कार्यमिति प्रतीयते तेन तथापि कुंभ
स्य प्रणामांतपूजां विधाय ब्राह्मणपूजनं कार्यम् अथशब्देन बह्वृचक्रमतया पदार्थोक्तिसमये स्वर्चितमिति कुंभविशेषणस्यान्यथानुपपत्तेः
ब्राह्मणपूजनं प्रसिद्धमेवेति वाक्यवचनमपि ताभ्यामनादृतं पुण्याहादिवाचने मद्रादित्रैविध्यमपि यथागमपरमिति वैकल्पिकत्वेनोक्तम्
परिशिष्टे पंचदशान्पठित्वा पंचदशैतानीत्युक्तिर्न्यूनाधिकोक्तिव्यावृत्त्यर्थेत्यभिप्रेत्य पंचदशैवेति कारिकाद्दावुक्तं शांतिपवित्रालिंगाभिर्त्रग्भि
रिति परिशिष्टस्य प्रपंचनं च पारिजातधृतशौनकीये पवस्वसोममित्यंतानामृचां पाठेनाश्वलायनस्मृतौ च सावित्र्यादिमंत्रपाठेन कृतं नत्वचो वि
शेषतस्तातविवक्षिताः पारिजातधृतशौनकीये विशेषपाठाभावात् उक्तपाठयोः परस्परविसंवादाच्चेत्याशयेनापइत्यादिभिः शांतिं ततः कु
र्यादित्येवोक्तं अतो देवाइत्यादीनां श्रद्धयेत्यादिसूक्तस्यैव शौनकीयपाठ एव क्वचिदसत्वात्परिशिष्टादावपि अविधेरनित्यत्वात्तत्तल्लिंगानृमं
त्रानू पठित्वेति परिशिष्टं स्वधृतशौनकीये चोद्धातेवेतितिसृणामृचां पाठेन तद्विवरणमालोच्य पारिजाते प्रयोगकाले याज्ययायजतीत्यादे
रान्चारभास वाक्यानामनादरः कृतः अत इत्थं प्रयोगः यथाचारं गणेशवरुणपूजादौ कलशं धारयित्वेत्यंते त्वनेशिवा आपः संत्वित्यादि

वाक्यवचनेनब्राह्मणपूजनेविहितेपूजितायुग्माब्राह्मणादर्भपाणयः प्राङ्मुखास्तिष्ठेयुस्तद्दक्षिणतोवान्वयितोदङ्मुखोदर्भपाणिः स्वर्चितं
कुंभंसपल्लवंदक्षिणहस्तेदधानस्तिष्ठेत् तद्दक्षिणपार्श्वेपत्नीसंस्कार्याश्वानिष्ठेयुः ततोब्राह्मणान्प्रतिमनःसमाधीयतामितिकर्त्तासमा-
हितमनसःस्मइत्यपरे प्रसीदंतुभवंतइतिकर्त्ता प्रसन्नाःस्मइतिपरे ततःसर्वेसंहत्यपंचदशवाक्यानिवदेयुः शांतिरस्तु १ पुष्टिरस्तु २ तुष्टिर
स्तु ३ वृद्धिरस्तु ४ अविघ्नमस्तु ५ आयुष्यमस्तु ६ आरोग्यमस्तु ७ स्वस्तिशिवंकर्मास्तु ८ कर्मसमृद्धिरस्तु ९ धर्मसमृद्धिरस्तु १० पुत्रसमृद्धिर
स्तु ११ वेदसमृद्धिरस्तु १२ शास्त्रसमृद्धिरस्तु १३ धनधान्यसमृद्धिरस्तु १४ इष्टसंपदस्तु १५ इत्युक्त्वाकर्मदेवतानामग्रहणपूर्वकं अग्निःप्री-
यतामितिवदेयुः यत्रनामविशेषोनोक्तःतत्रप्रजापतिःप्रीयतामिति अथावदंस्त्वमित्यृचंपठित्वा ओंपुण्याहंभवंतोब्रुवंत्वितिवदेत् ॐ पुण्या
हमितिपरेब्रूयुः स्वस्तिनइत्यृचंपठित्वा ॐ स्वस्तिभवंतोब्रुवंत्वितिवदेत् ॐ स्वस्तीतिपरे ऋध्यामस्तोममित्यृचंपठित्वा ओंऋद्धिंभवंतोब्रुवंत्वि-
तिवदेत् ओंऋध्यतामितिपरे तत आपोहिष्ठेत्यादित्रिभिःसमुद्रज्येष्ठाइत्यादिभिर्वाभिषेकःकार्यः ततःसुवासिन्योनीराजनाशीःप्रयोग
नूतनवस्त्रदानादिमंगलंकुर्युरितिसंक्षिप्तःपुण्याहवाचनप्रयोगः अथवृद्धिश्राद्धम् तच्चपार्वणत्रयात्मकं मातृभ्यःकल्पयेत्पूर्वंपितृभ्य
स्तदनंतरम् ततोमातामहानांचकुर्याच्छ्राद्धंक्रमेणवैतिवसिष्ठोक्तेः एतदारंभेमातृपूजनमवश्यंकार्यं अकृत्वामातृयज्ञंतुयःश्राद्धंपरिवेषयेत्
तास्तस्यक्रोधसंपन्नाहिंसांकुर्वंतिदारुणामितिहेमाद्रौभविष्योक्तेः कर्मांगश्राद्धेप्येतत्कार्यम् कर्मादिषुचसर्वेषुमातरःसगणाधिपाः पूज

नीयाः प्रयत्नेन पूजिताः पूजयंति ता इति षट्त्रिंशन्मते श्राद्धशेषिककर्मांगत्वस्यापि मातृपूजनप्रतीतेः अत्र विशेषो हेमाद्रौ चतुर्विंशतिमते ति
स्रः पूज्याः पितुः पक्षे तिस्रः पूज्याश्च मातृके इत्येता मातरः प्रोक्ताः पितृमातृष्वसाष्टमी ब्रह्माण्याद्याः स्मृताः सप्त दुर्गाक्षेत्रगणाधिपाः वृद्धौ वृद्धौ
सदा पूज्याः पश्चान्नांदीमुखान् पितॄन् गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना स्वधा स्वाहा मातरो लोकमातरः एतास्त्वभ्युदये पूज्या
आत्मदेवतया सहेति मातृपितामही प्रपितामह्यः मातामही मातुः पितामही मातुः प्रपितामह्यः पितृष्वसा सप्तमी मातृष्वसा अष्टमी आत्य
ष्टौ मनुष्यमातरः प्रत्यक्षाः प्रत्यक्षमेव कुंकुमवस्त्राभरणपुष्पादिभिः पूज्याः परोक्षास्तु वक्ष्यमाणदेवतामातृवद् अक्षतपुंजादिष्वावाह्य पूज
नीया इति हेमाद्रिः ब्रह्माण्याद्याः सप्त दुर्गा क्षेत्रपालगणाधिपांश्च षोडशोपचारैः पूजयित्वा नांदीमुखान् पितॄन् पूजयेत् शास्त्रांतरे महाल
क्ष्म्या सह ब्रह्माण्याद्याः पूज्या इत्युक्तम् तथा गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना० धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतयास
ह आभ्योऽर्घ्यं गंधपुष्पं च धूपं दीपं निवेदयेदिति आत्मदेवता कुलदेवता अर्घ्यग्रहणेन षोडशोपचारपूजावश्यकेति द्योत्यते तथा कुड्य
लग्ना वसोर्धाराः पंचधारा घृतेन तु कारयेत्सप्तधारा वा नातिनीचा नचोच्छ्रिताः आयुष्याणि च शांत्यर्थं जप्त्वा तत्र समाहित इति आयुष्याणि आ
नो भद्रा इति सूक्तानि तत्रेति यत्र मातृपूजायां वसोर्धारा कृता कातीयगृह्याद्यनुसारे णतत्रायमायुष्यसूक्तजपः कार्यः अनेनैव वसोर्धारा-
या अनित्यत्वं ज्ञापितं ब्रह्मांडे स्वाहाशब्दं प्रयुंजीत स्वधास्थाने च बुद्धिमान् वृद्धिश्राद्धे सदा सव्यं यज्ञसूत्रं च कारयेत् कुशस्थाने च दूर्वाः स्यु-

मंगलस्याभिवृद्धयइति आश्वलायनगृह्यपरिशिष्टेतु आभ्युदयिकेयुग्माब्राह्मणा अमूलादर्भाप्राङ्मुखेभ्य उदङ्मुखेोदद्यादुदङ्मुखेभ्योवा
प्राङ्मुखेभ्योद्वौदर्भौपवित्रइति मंगलात्मकविवाहाद्यारंभेक्रियमाणनांदीश्राद्धेकुशस्थानेदूर्वाविधिः यज्ञाद्यारंभेतुक्रियमाणे अमूलदर्भविधिरि
तिव्यवस्थाबोध्या युग्मत्वेपिनियममाहहेमाद्रौछांगलेयः एकैकस्यतुवर्गस्यद्वौद्वौविप्रौसमर्चयेत् विश्वेदेवेतथाद्वौचनप्रसज्येतविस्तरइति
भविष्ये सर्वंप्रदक्षिणंकार्यंपूर्वाण्हेउपवीतिनेति पूर्वाण्हे भोजयेद्विप्रानष्टौसर्वंप्रदक्षिणं तथाचनवमोविप्रश्चतुरस्रेरवगोत्तमेतिच चरणक्षा
लनकालेसमागतानतिथिंक्षालनचतुरस्रदेशेभोजयेदित्येतदर्थमेतदितिहेमाद्रिः अशक्तंप्रतिपक्षांतरं तत्रैवनांदीमुखान्समुद्दिश्यपितृनप
चद्विजोत्तमान् भोजयेद्विधिवत्प्राज्ञइति अष्टानांस्थानेचत्वारःएकोतिथिःपूर्ववदधिकइत्यर्थः वृद्धिश्राद्धेविश्वेदेवाःसत्यवसुसंज्ञकाः कर्मांग
नांदीश्राद्धेक्रतुदक्षसंज्ञकाः इष्टिश्राद्धेक्रतुर्दक्षइतिवचनात् इष्टिश्राद्धंकर्मांगश्राद्धमितिहेमाद्रिणाव्याख्यानात् तन्त्रयोगानुसारेणेष्ट्यंगश्रा
द्धमित्येवव्याख्येयो चिंतेतिशंक्यं प्रधानस्यार्थेनोंगत्वस्यप्रवेशेनैवोद्देश्यबुद्धिपर्यवसमानेसतिइष्टिग्रहणस्यैवपंचावत्तैववपाकार्येत्यत्रवपाग्र
हणस्येवाविवक्षितत्वात् अतएवनिषेककालेसोमेचसीमंतोन्नयनेतथा ज्ञेयंपुंसवनेश्राद्धंकर्मांगंवृद्धिवत्कृतमितिवाक्येपिनिषेकादिग्रह-
णमाधानाद्युपलक्षणार्थमितिपारिजातादयः सोमशब्दस्तेषामुपलक्षणार्थइतिमदनरत्नादयः अस्मिन्पक्षेपुत्रजन्मनिनिमित्तकेप्रधानभू
तेनांदीश्राद्धेसत्यवसूनांगभूतौ अन्यंतुनिषेकादिशब्दानामुपलक्षणार्थमपिन्यायामन्यमानानिषेकादिगणितकर्मानकर्मांगनांदीश्राद्धेसत्य

वसूगणितेषु ऋतुदक्षावित्याहुः केषांकर्मणामारंभेकार्यमित्यपेक्षायां बह्वृचकारिकायामुक्तं स्यादाभ्युदयिकंश्राद्धंवृद्धिपूर्तेषुकर्मसु गर्भपुं
सवसीमंतचौलोपनयनेष्विह विवाहेचानलाधेयप्रभृतिश्राद्धकर्मसु इदंश्राद्धंप्रकुर्वंतिद्विजावृद्धिनिमित्तकं अन्ये:षोडशसंस्कारेश्रावण्या
दिष्वपीष्यते वाप्याद्युद्यापनादौतुकुर्युःपूर्तनिमित्तकमिति अन्यैरित्युक्तसंस्कारेभ्योन्येषुजातकर्मादिषुश्रवणाकर्मादिषुचतदनावश्यक
मितिज्ञापनार्थं कार्ष्णाजिनिः सीमंतोन्नयनेचैवपुत्रादिमुखदर्शने नांदीमुखान्पितृगणान्पूजयेत्प्रयतोगृहीति अत्र पुत्रादीत्यादिश-
ब्दात्पौत्रस्यापिसंग्रहइतिनिर्णयामृते अत्रविशेषंछंदोगपरिशिष्टेकात्यायनः असकृद्यानिकर्माणिक्रियंतेकर्मकारिभिः प्रतिप्रयोगंने
ताःस्युर्मातरःश्राद्धमेवच आधानहोमयोश्चैववैश्वदेवेतथैवच बलिकर्मणिदर्शेचपूर्णमासेतथैवच नवयज्ञेच यज्ञज्ञावदंत्येवमनी-
षिणः एकमेवभवेच्छ्राद्धमेतेषुनपृथक्पृथक् इति अत्रप्रथमश्लोकापराध्यां आधानादीनांकेषांचिदेवावृत्तावपिनांदीश्राद्धंनावर्ततइत्येत-
त्सरतयाव्यवस्थाप्यते अतएवापस्तंबकल्पानुसारियाज्ञिकानांविच्छिन्नाधानेनांदीश्राद्धाचारश्चिंत्यः केषांचित्प्रथमप्रयोगेपिनेतत्कार्य
मित्यप्याहुः नाष्टकासुभवेच्छ्राद्धंनश्राद्धेश्राद्धमिष्यते नसोष्यंतीजातकर्मप्रोषितागतकर्मस्विति अत्रद्वितीयःपादोहेतुवन्निगदत
याप्रथमशेषःप्रसवात्पूर्वंविहितंकर्मसोष्यंतीकर्मजातकर्मांगत्वेननिषेधस्तुछंदोगमात्रविषयस्तत्परिशिष्टगतत्वादितिसमयोद्योतेनतदा
पिवृद्धिनिमित्तकंपुरुषार्थंततःपूर्वंभवत्येव वृद्धिश्राद्धजातकर्मादीनांस्वकालातिपत्तौसंहैकस्मिन्दिनेचौलादिनासहक्रियमाणेतेषु

नांदीश्राद्धंतंत्रेणकार्यमित्यपितंत्रेवपरिशिष्टे गणशःक्रियमाणेषुमातृभ्यःपूजनंसकृत् सकृदेवभवेच्छ्राद्धमादौनपृथगादिष्विति अत्रा
दौयज्जन्मनिमित्तंयच्चसंस्कारादिषुविहितं तत्सकृदेवकार्यम् नपृथगित्यन्वयः ततश्चपुत्रजननिमित्तंचौलांतसंस्कारांगंचैतन्नांदीश्राद्धं
तंत्रेणकरिष्येइतिसंकल्पः यद्यपिश्राद्धवसिष्ठेन नांदीमुखेविवाहेचप्रपितामहपूर्वकम् नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकमितिउ
क्तम् स्मृत्यर्थसारेपिवृद्धमुख्याश्चपितरोवृद्धिश्राद्धेषुभुंजतइति नतदाश्वलायनशाखिभिरनुसर्त्तव्यं मातापितामहीचैवतथैवप्रपिताम
हीपित्रादयस्त्रयश्चैवमातुःपित्रादयस्त्रयः एतेनवार्च्चनीयाःस्युःपितरोभ्युदयेद्विजैरित्याश्वलायनस्मृतिवशेनमात्रादीनां अनुलोमक्रमप्र
तीतेर्बह्वृचैरनादरणीयंतदितिपारिजातोक्तेः एवंपित्रर्थविप्रेभ्यःप्रदायार्घ्यंयथाविधि पितामहायविप्रेभ्योदत्वार्घ्यंचयथापुरा प्रपिताम
हशब्दादिमिदंतेर्घ्यमितीरयेदितिपारिजातोदाहृतभवत्स्मृतौच अर्घ्यदानक्रमप्रतीतेःप्रपितामहसंयुक्तंमंत्रमुक्तातमेवतु तदर्थमुपविष्टे-
भ्यस्तृतीयंसकृदेवत्वितिकारिकोक्तेश्च उक्त्वापितरिदंतेर्घ्यमितिपित्रेर्घ्यमानयेदित्युक्त्वाशौनकेन एवमेवार्घ्यदानंतुकुर्यादुत्तरयोर्द्वयोरित्यु
क्तेश्च एवमेवजयंतोक्तेश्च अथजीवत्पितृकस्यसंस्कर्तुर्नांदीश्राद्धनिर्णयः तत्रकात्यायनः वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति येभ्य
एवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति गृह्यपरिशिष्टेतुनांदीश्राद्धंप्रकृत्योक्तंमहत्सुपूर्वेद्युस्तदहरल्पेषुतदिदमेकेमातृणांपृथक्कुर्वंति अ
थपितृणां अथमातामहानामितित्रितयमिच्छंतितस्माज्जीवत्पि ताकृतसंस्कारेषुमातामहयोःकुर्यात्तस्यांजीवंत्यांमातामहस्यैवकुर्यादि

ति महत्स्वुपनयनादिषु अल्पेषु पुंसवनादिषु पृथग्दिनभेदेन पूर्वापराह्णादिकालभेदेन वा त्रितयं श्राद्धत्रयं भिन्नप्रयोगमित्याशयः तथाच गार्ग्यः
मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतमिति तथाच शातपः पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं
तथा ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति एके इच्छन्तीति परिशिष्टोक्त्या सह प्रयोगः स्वाभिमतत्वेन सूचितः उक्तश्रावृत्त्युकल्पेन द्व
द्धमनुना अलाभे भिन्नकालानां नांदीश्राद्धत्रयं बुधः पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकमिति एवं जीवत्पितृकं प्रत्यपि तीर्थ इव श्राद्धत्रयप्रा
प्तौ विषयविशेषे पवादमुच्यते तस्मादिति तत्र पार्वणद्वयेनैव नांदीश्राद्धफलसिद्धिरित्याशयः एवं जीवन्माता तृपितृकस्य मातामहश्राद्धेनैव
तत्सिद्धिरित्याशयेनोक्तं तस्यामित्यादि एतच्चोपलक्षणार्थं जीवत्पितृमातामहस्य मातृपार्वणेन तत्सिद्धिरित्यपि बोध्यम् यद्वर्गाद्यो जीव
ति न तत्पार्वणातिरिक्तपार्वणानुष्ठानेन नांदीश्राद्धफलसिद्धिरित्यत्र तात्पर्यस्य वाक्यभेदभयेन तस्मादित्यादिग्रंथे स्वीकर्तुमुचितत्वात् एवं च सति
मृतपितृकजीवन्मातृमातामहस्य पितृपार्वणमात्रेण नांदीश्राद्धसिद्धेः साधकतया सकलदाक्षिणात्यस्वीकृतेन पितृवर्गे मातृवर्गे तथा मातामा
हस्य च जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति पारिजाताद्यनेकग्रंथसंमतपाठे वकारविरोधाच्च न गिरेति ब्रूयादिति तदर्थप्राप्तेतरनिद्द
त्सनुवादतया तत्स्वीकारेणात्रत्यैवावपतीति वत्श्रौतपरिसंख्यांगीकारगौरवस्यावपनापत्तेश्चांतं वर्गं तु परित्यजेदिति शास्त्रविरोधाच्च येष्वपए
वेति शास्त्रस्य परिशिष्टस्य च पारिजातोक्तव्यवस्थाविरोधापत्तेश्च तथाहि तत्रोक्तपरिशिष्टमुदाहृत्य तत्संवादितया सपितुः पितृकृत्येषु अधि

सं॰कौ॰
२६

कारोनविद्यते नजीवंतमतिक्रम्यकिंचिद्दद्यादितिश्रुतिरितिकातीयवचनमुदाहृत्यपितृकृत्येषुपितामहादिसंबंधिषुश्राद्धेष्वित्यर्थइतिव्याख्यायके
ष्वपिदेतदपवादत्वेन उद्वाहेपितृजननेपित्रेष्ट्यांसोमिकेमखे तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुरितिमैत्रायणीयपरिशिष्टमुदाहृत्यतंतदपि
कारेण येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइत्येतत्समानार्थाविष्णुस्मृतिरुदाहृता पितरिजीवतियःश्राद्धंकुर्यात्सयेषांपिताकुर्यात्तेषांकुर्यात्पितरि
पितामहेचयेषांपितामहइति ततश्चबह्वृचपरिशिष्टस्य कृतसंस्कारविषयत्वान्नजीवंतमतिक्रम्ये तद्विषयंमैत्रपरिशिष्टस्यतु तदतिरि-
क्तविषयत्वाद्येभ्यएवपितादद्यादित्येतद्विषयमित्येवंव्यवस्थाप्रतीयतइतिवार्त्रघ्नीवृधन्वत्योरिवसमुच्चयासंभवः नचमैत्रपरिशिष्टस्यकृत
संस्कारविषयत्वमस्तीतिशंक्यम् उद्वाहशब्दस्यकर्त्तुर्द्वितीय विवाहपरत्वात् नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेबुधः अतऊर्ध्वंप्रकुर्वी
तस्वयमेवतुनांदिकमिति वचनात् नचपुत्रजननर्निमित्तकर्मितिसंस्कारांगंतीर्थइवतत्रापिपुरुषार्थस्यैवविधानात् नचजीवद्वर्गत्रयाद्यः=
स्यकृतसंस्कारेष्वपियेभ्यएवपितादद्यादित्येतत्स्वीकारआवश्यकइतिशंक्यम् पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यादितिविष्णू
क्तरीत्यालोपस्यौचित्यप्रतीतेः एतदपवादमप्यनंतरंवक्ष्यामः यत्तुपारिजातोक्तव्यवस्थादूषणायस्मृतिरत्नावल्यामुक्तं बह्वृचपरिशिष्ट
स्यबह्वृचविषयत्वान्मैत्रायणीयस्यतच्छाखिविषयत्वान्नव्यवस्थांतरंकल्पनीयमितितन्न आश्वलायनपरिशिष्टेकृतसंस्कारेष्विति-
श्रवणात्परिशिष्टांतरेणतद्भिन्नकर्मणामेवश्रवणात्कर्मभेदेनव्यवस्थायाअकल्प्यत्वात् शब्दानांरूढशाखाभेदव्यवस्थाकल्पनस्यैवा

२६

न्याय्यत्वात् होलाधिकरणन्यायबाधितत्वाच्च यत्तु पारिजातेनाजीवतः पितुः कुर्याच्छ्राद्धमग्निमृनो द्विजः येभ्य एव पिता कुर्यात्तेभ्यः कुर्वीत
साग्निकः पितामहे प्येवमेव कुर्याज्जीवति साग्निकः साग्निकोपि न कुर्वीत जीवति प्रपितामह इति स्मृतं तु वचनान्मैत्रायणीयपरिशिष्टोक्तविषये ष्व
पि जीवत्पितृकस्य साग्नेरेवाधिकारो न निरग्नेरिति प्रतिपादितं तदुद्वाहपुत्रजननिमित्तकनांदीश्राद्धव्यतिरिक्ततीर्थश्राद्धादिविषयं अनग्नि
कोपि कुर्वीत जन्मादौ वृद्धिकर्मणि येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणमिति आचारमदनरत्नोदाहृतहारीतवचनेन स्मृतं तु वाक्याप
वादात् साग्निरत्र श्रौताग्निमान् श्रौताग्निमांश्च तदितरो निरग्निरित्यपि तत्रैवोक्तम् अतश्च निरग्नेर्जीवत्पितृकस्य तीर्थश्राद्धादौ नाधिकार
इति सिद्धम् यत्तु तत्रैवोक्तम् येभ्य एव पिता दद्यादित्यत्र येभ्य इति पितुः पित्रादय एव परामृश्यंते न तु मात्रादयो मातामहादयश्च न जीवंतम
तिक्रम्य किंचिद्दद्यादित्यादिशास्त्रेण जीवत्पितृपार्वणमेव निषिध्यते तत्रैव जीवतोतिक्रमसंभवात् प्रमीतस्वमात्रादिकेन स्वमात्राद्युद्दे
शेन श्राद्धकरणे तदभावात् प्रतिप्रसवार्थस्य च येभ्य इति शास्त्रस्य निषेधसमानविषयत्वौचित्यात् किंच येभ्य इत्युक्तवाक्ये पितुर्मात्रादिग्रहणे त
त्समानार्थे विष्णुवाक्ये पितदापद्येत तच्चेत्थं पठ्यते पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च जीवति ये
षां पितामहः पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् यस्य पिता प्रेतः स्यात्स पित्रे पिंडं निधाय पितामहात्परं द्वाभ्यां दद्यात् यस्य
पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिंडं दत्वा पितामहाय दद्यात् यस्य पितामहः प्रेतः स्यात्स तस्मै पिंडं निधाय प्रपितामहात्परं द्वाभ्यां पिं

उंदद्यात् मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमिति अत्रचप्रमीतमातृमातामहोपिजीवसि
तृकःपितुःपित्रादीनिवतदीयानेवमात्रादीन्मातामहादींश्चोद्दिश्यश्राद्धंकुर्यादितिचेत्प्रथमवाक्येविवक्षितार्थःस्यात्तदायेषांपितामहःकु
र्यात्तेषांकुर्यादितिसानुषंगेद्वितीयवाक्येतथैवविवक्षाप्रद्येततत्रश्च स्वीयानांमात्रादीनांमातामहादीनांपितुर्मात्रादीनांमातामहादीनांचप्र
मीतानांपरित्यागेनपितामहस्यमात्रादीन्मातामहादींश्चोद्दिश्योद्वाहपुत्रजननादौजीवत्पितृपितामहस्यश्राद्धानुष्ठानमापद्येततथामाता
महानामप्येवमित्यतिदेशान्जीवन्मातामहस्यस्वीयानांपैतृकाणांपैतामहानांचमात्रादिमातामहादीनांचप्रमीतानांपरित्यागेनपितामह
स्यमात्रादीन्मातामहादींश्चोद्दिश्यतदनुष्ठानंस्यादितिप्रथममेववाक्यंपितुःपित्रादिपार्वणस्यैवप्रापकमितिस्वीकृत्यजीवत्पितृकस्तेनस
हस्वीयानामेवमात्रादीनांमातामहादीनांचश्राद्धंकुर्यादितिस्वीकर्तुमुचितमितितन्न यतोयेभ्यएवपितादद्यादीदृशार्थकानांविष्णुस्मृ-
त्यादिवाक्यानांप्रतिप्रसवत्वंतदैवघटते यदानजीवंतमतिक्रम्येत्यादीनांजीवत्पितृकंप्रतिपितुःपित्राद्युद्देश्यकस्यपार्वणनिषेधपरत्वं-
भवति नचैनतत् प्रतिप्रसवत्वाभिमतवाक्यभिन्नस्यतादृशपार्वणप्रापकस्यनिषेधापेक्षितस्याभावात् नतत्त्छ्राद्धविधिषुपित्रादिश
ब्दानांसंबंधिकत्वमहिम्नाकर्तुःपित्रादीनामेवप्रतीत्यारुकैस्तादृशपार्वणप्राप्तेरनाशंक्यत्वात् निषेधस्यचप्रेतेभ्यएवनिरूणीयादिति
पितृयज्ञप्रकरणस्याश्वलायनोक्तितुल्यप्रवृत्तिकेनजीवमानेनदेयंस्याद्यस्माद्भरतसत्तम तस्माज्जीवत्पिताकुर्याद्धाभ्यामेवनसंशय

इतिभविष्यपुराणवचनेनच प्राप्तस्यमृतपुंद्वयमात्रोद्देश्यकप्रदानस्यनिषेधकतयोपपत्तेः शक्यतेचहारीतवचनस्यानग्निकं प्रतिमात्रादिपार्वणवि-
षयेप्रतिप्रसवत्वंवक्तुमनायासेनतस्यापिवृद्धितीर्थादौमैत्रायणीयप्राप्तस्यक्रमंतुवचनेननिषिद्धत्वात् यत्तुजीवत्पितृपितामहेनपितामहमात्राद्युद्दे-
शेनश्राद्धानुस्यादित्युक्तं तत्रानिषिद्धं पितुर्मात्राद्युद्देशेनेवनदुद्देशेनापि प्रमाणसिद्धस्यतदनुष्ठानस्यस्वीकर्तुमुचितत्वात् यत्तुमातामहानामप्येवमि-
त्यतिदेशमूलकर्म निष्पादनं तत्तदर्थाज्ञानविजृंभितं अत्रहिमातामहानांश्राद्धंपितृपार्वणवत्कर्तव्यमुचितमंत्रोहयुक्तमित्यतिदिश्यते इत्यमति
देशेनचयथाविसर्जनांतान्यंगान्यतिदिश्यंतेतथाव्यवहितपूर्वग्रंथोक्तक्रमेणैकद्व्यादिजीवननिमित्ताद्व्युत्क्रममरणनिमित्ताच्चपितृपार्वणगतादेव
ताव्यवस्थापिअंगत्वाविशेषात् नचैवंमात्रादिश्राद्धंपितृपार्वणांगंयेनातिदिश्येत नचविष्णुस्मृतिव्याख्यातारोपिमातामहानामप्येवमितिवचनस
इतरेतिकर्तव्यतातिदेशपरतामिवोक्तविधदेवताव्यवस्थातिदेशपरतांमन्यमानाअपिमात्रादिपार्वणातिदेशपरतांमन्यंतेनचसर्वेषांपिताकुर्या
द्येषांपिताकुर्याद्येषांपितामहइत्यनयोर्मात्रादिमातामहादिपार्वणगोचरतामपि युक्तंचैतद्येषामितियच्छब्देनपितृकर्तृकश्राद्धोद्देश्यतायाः
पुत्रकर्तृकश्राद्धोद्देश्यत्वव्याप्यत्वप्रतीतेः यद्यत्कृतकंतदनित्यमितिवद्येभ्यएवपितादद्यादितियच्छब्दोपबन्धे वकारेणवीप्साप्रतीतेश्चयमेवधा
तेराष्ट्रं तूष्णीमसेनोभ्यवेक्षते क्षणमात्रेणतंहंतिव्याघ्रोमृगगणंयथेतिवत् अतोयेभ्यएवपितादद्यादीदृशशास्त्रानुसारिण्यनुष्ठानेपितृकर्तृक-
श्राद्धोद्देश्यपितृमातृमातामहाद्युद्देश्यकश्राद्धत्रयस्यकर्तव्यत्वान्नपुत्रेणात्मीयमात्राद्युद्देशेनश्राद्धसंभवः नचाश्वलायनपरिशिष्टानुसारि

पयनुष्ठानेपितुःपित्राद्युद्देशेनतत्संभवइति प्रागेवावेदितं अतस्तदुभयार्थसमुच्चयोक्तिःसाहसमात्रं सत्यपिविष्णुस्मृतेःकृतसंस्कारसाधारण्येआश्व
लायनशाखिभिस्तत्परिशिष्टोक्तएवपक्षःसंभवेकर्तुमुचितः बह्वल्पंवास्वगृह्योक्तमितिस्मृतेःकुलपरंपराया तत्वेनयदितच्छाखिनोपिविष्णु-
स्मृत्युक्तमाचरंति आचरंतु नतूक्तसमुच्चयःपरंपरायातोस्ति एवंचजीवत्पितृमातामहेनयदामातृपार्वणेननांदीश्राद्धसिद्धिरंगीक्रियते नतत्रदेवा
इतिश्राद्धहेमाद्रिसमुदाहृतेननित्यश्राद्धमदैवंस्यादेकाद्दिष्टंतथैवच मातृश्राद्धंतुयुग्मैःस्याददैवंप्राङ्मुखैःपृथगिति वचनेनपूर्वाह्णादिकालभे
देनपार्वणत्रयानुष्ठानपक्षेपार्वणांतरासाहित्येनक्रियमाणेमातृश्राद्धइवोक्तविधमातृश्राद्धेपितादृशोअदैवत्वबोधनात् नांदीश्राद्धमात्रेपिचविश्वेदे
वाःकृताकृताः विश्वेदेवविहीनंतुकेचिदिच्छंतिमानवाःयुग्माश्चात्रद्विजाःकार्यास्तेपूज्याश्चप्रदक्षिणमितितत्रैवमार्कंडेयवचनादित्यलम्

अथकृतसंस्कारेप्रवासादिनापितृकर्तृकत्वासंभवनिमित्तककर्त्रंतरंप्रतिनांदीश्राद्धदेवतानिर्णयः पारिजातेकात्यायनः स्वपितृभ्यः
पितादद्यात्कृतसंस्कारकर्मसु पिंडानोद्वाहनात्तेषांतस्याभावेतुतत्क्रमादिति ओद्वाहनात्प्रथमविवाहमभिव्याप्यकृतसंस्कारकर्मसु पितास्व-
पितृभ्यःपिंडान्दद्यात्तदुपलक्षितंवृद्धिश्राद्धंकुर्यात्तस्यपितुःप्रवासादिनाभावेतेष्वेवकर्मसुतन्निमित्तःपित्रसन्निधिनिमित्तोयोधिकारिक्रमः
असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैरितिशास्त्रावगतः तेनक्रमेणतेषांपूर्वसंस्कृतानांमध्येज्येष्ठभ्रात्रादिःकुर्वन्स्वपितृभ्योदद्यात्
समावर्तनस्यापिविवाहात्प्राचीनकृतसंस्कारत्वाज्जीवत्पितृकसमावर्तनेपितास्वपितृभ्योदद्यात् अजीवत्पितृकस्तुपूर्वसंस्कृतभ्रात्रसंभवे

स्वयमेवस्वपितृभ्योदद्यात् उपनयनेनकर्माधिकारसत्वाद्विवाहेप्येवमेवद्रष्टव्यमितिपारिजातेव्याख्यातं अत्रचपितुर्जीवत्पितृकस्यापिजीव
त्पितृकस्यचज्येष्ठभ्रात्रादेश्चतथाद्विविधस्यशास्त्रांतरेश्राद्धीयदेवतात्वेनयेवगताः पित्रादयोमात्रादयोमातामहादयश्चतेषामेवस्वपितृभ्यइति-
निर्देशः स्वेज्यत्वस्यषष्ठ्यर्थत्वात् जीवत्पितृकेनस्वजनकाद्युद्देश्यकश्राद्धानुष्ठानस्यबाधितत्वात् अतएवसमावर्तनस्यमाणवककर्तृकत्वेपित
दंगभूतनांदीश्राद्धेपितुस्तदभावेज्येष्ठभ्रात्रादेरप्राप्तकर्तृत्वप्रापणादिनावचनस्यार्थवत्त्वमित्याशयेनतदुपन्यासइतिबोध्यम् अजीवत्पितृक
इतिनजीवदसन्निहितपितृकस्याप्युपलक्षणम् स्वपितृभ्यइतिचपूर्ववत् आद्यस्येज्याजनकादयएवपरस्यपितुर्जनकादयएव नत्वाश्वलायन
परिशिष्टोक्तरीत्यापितृपार्वणत्यागेनमात्रादयः समावर्त्तनस्यात्मसंस्कारत्वेनसुतसंस्कारत्वाभावात् हेमाद्रिणात्वक्षराऽरूढ्यप्राप्तविधिंदर्शयितुं
व्याख्यांतरमकारि पित्रभावेअन्योयःकश्चित्संस्कारंकुर्यात् सतत्कुमारपितरमारभ्यसंस्कार्यस्यपितॄणांयःक्रमः तेनक्रमेणदद्यात् ननु
स्वीयेभ्यःपितृभ्यः तस्मात्पितृव्याचार्यमातुलादयः संस्कार्यस्योपनेयादेरेवपितृभ्यःश्राद्धंदद्युः नस्वपितृभ्यइत्यत्रपारमार्थिकःपक्षोविधी
यते अन्यथास्वपितृभ्यइत्यस्यानुषंगकल्पनायाअन्याय्यत्वात्पितृव्यादीनामपिपितृवत्स्वपितृभ्योदानाविशेषेस्वतृभ्यःपितादद्यादित्यस्या
नर्थक्यापत्तेःपितुःपितृव्यादिषुवैलक्षण्यद्योतकंतुशब्दानुपपत्तेःउपनेयस्यप्रदेयकन्यायाश्चासुरत्याधिकारित्वेनतदीयपित्रादीनामिज्यत्वौ
चित्याच्च महार्णवोदाहृतेगर्भाष्टमेवर्षेब्राह्मणआत्मानमुपनययेदित्यादिबुधस्मृत्यादिवाक्येणिजंतस्युपनयनशब्दंव्याचक्षाणैरपरार्कादिभि

रूपपादितंचोपनेयकन्ययोरेव उपनयनादौमुख्याधिकारित्वमिति अयमेवप्रकारः पितृव्यकर्तृकविवाहेबोध्यः नचतत्रप्रमाणाभावः पित्रभावे-
नामकरणेकर्त्रंतरप्रापकेशंखस्मृतौ अन्योवा कुलवृद्धइत्यस्यांनामकरणप्रभृतिसंस्कारविषयतायांहेमाद्रिणैवोक्तत्वादिति अत्रापिपित्रभा
वोद्वैधामरणेनप्रवासादिनावा पितरमारभ्येत्यपिइज्यत्वेनइज्योपलक्षणत्वेनवासंस्कार्यस्येतिषष्ठीक्रमनिरूपितसंबंधार्था संस्कार्यंप्रतिसमा
वर्तनादौइज्यदेवताक्रमोयोविहितइत्यर्थः अतएवेज्यत्वमुपनेयादेरितिषष्ठ्यर्थः ततश्चजीवत्पितृकस्योपनयनंकुर्वन्मातुलादिस्तदीयजन
कादीनुद्दिश्यैवकुर्याज्जीवत्पितृकस्यतुजनकादीन् नतुपरिशिष्टानुसारेणकेवलान्प्रमीतानपिसंस्कार्यमात्रादीन् संस्कार्यंप्रतिस्वसंस्कारेसमा
वर्त्तनादौकर्तव्येतासांमुक्तिरीत्येज्यत्वाप्राप्तेः अतउपनयनेसमावर्तीविसंस्कार्यस्यैवयद्यधिकारःस्यात्तदासंस्कार्यस्यनांदीश्राद्धदेवतायाऔचि
त्यायतास्ताएवोद्दिश्यमातुलादिर्नांदीश्राद्धंकुर्यादितितात्पर्यार्थः इतिपित्रन्यकर्तृकनांदीश्राद्धदेवतानिर्णयः श्रौतस्मार्ताधानाति
रिक्तविषयंचनांदीश्राद्धंपूर्वाण्हेकार्यम् पार्वणंचापराण्हेतुप्रातर्वृद्धिनिमित्तकमितिशातातपोक्तेः पूर्वाण्हेवैप्रदेवृद्धिरित्यत्रिवचनाच्च
आधानांगंत्वपराण्हे आमश्राद्धंतुपूर्वाण्हेसिद्धान्नेनतुमध्यतः पार्वणंचापराण्हेस्याद्वृद्धिश्राद्धंतथाप्रिकमितिगालववचनात् इदंचाधा
नपूर्वदिनेबौधायनोक्तनांदीश्राद्धविषयम् आपस्तंबसूत्रानुसारिणातुयत्संभारस्पर्शोत्तरंभाष्यकारादिभिरुक्तंतत्पूर्वोत्तरपदार्थैर्निषि
द्धक्रमत्वान्नपृथक्कालमपेक्षतइतिनतद्विषयम् पुत्रजन्मनिमित्तकश्राद्धेपिनप्रातःकालनियमः नियतेषुनिमित्तेषुप्रातर्वृद्धिनिमित्त

कं तेषामनियतत्वेतु तदानंतर्यमिष्यतइतिलौगाक्षिवचनात् अत्रपिंडदानंकुलधर्मानुसारेणवैकल्पिकम् पिंडनिर्वपणंकुर्यान्नवाकुर्या-
न्नराधिप वृद्धिश्राद्धेमहाबाहोकुलधर्मानवेक्ष्य त्वितिभविष्योक्तेः पिंडदानविशेषः शाल्यन्नंदधिमध्वक्तंबदराणियवांस्तथेतिप्रकृत्यस्मृ
त्यंतरेउक्तः द्राक्षामलकमूलानियवांश्चविनियोजयेत् तान्येवदक्षिणार्थंतुदद्याद्वृद्धिषुसर्वदेति ब्राह्मणभोजनसमयेजपविशेषोब्रह्मपुराणे
पवंच्छकुनिसूक्तंतुस्वस्तिसूक्तंशुभंतथेति संग्रहे शुभायप्रथमांतेनवृद्धौसंकल्पमाचरेदिति कारिकायांसंबंधनामगोत्राणिवर्जयेदत्र-
कर्मणीति चंद्रोदयेमालत्याशतपत्र्यावामल्लिकांकुरयाअपि केतक्याःपाटलायावादेयामालानलोहिताइति कवेषभूषणैस्तत्रसालंकारै-
स्तथानरैः कुंकुमाद्यनुलिप्तांगैर्भाव्यंतुब्राह्मणैःसहेतिच वृद्धिश्राद्धारंभेश्राद्धीयपाकांतरेणवैश्वदेवंसर्वैःकार्यम् आदौवृद्धौक्षयेचांतेम
ध्येदर्शेतुपार्वणे एकोद्दिष्टेनिवृत्तेतुवैश्वदेवोविधीयतइतिसांख्यायनपरिशिष्टात् अस्यबह्वृचैःपच्यमानस्यापिहोलाकाधिकरणन्यायेनसर्व
साधारण्यात् यत्तुश्राद्धहेमाद्रौ शेषमन्नमनुज्ञाप्यवैश्वदेवक्रियांततः श्राद्धान्हिश्राद्धशेषेणसकलंतुसमाचरेदिति चतुर्विंशतिमतादं
तेवैश्वदेवाचरणमुक्तम् तच्छ्राद्धसामान्यविषयत्वाविशेषशास्त्रानुरोधेनाशक्तंप्रत्यनुकल्प्यभूतपक्षांतरविधायकम् अनेनैवाशयेनश्रा
द्धसामान्यपुरस्कारेणैवकाल हेमाद्रावपीदृशोपन्यासाच्च तथाचोक्तंदीपिकायाम् भिन्नाग्निनेनतुवैश्वदेविकमनुश्राद्धंचरेत्साग्निकः
पश्चाद्भूतमखादनग्निकजनस्त्वग्नौकृतेचोत्तरम् स्वस्त्युक्तेर्विकिरस्यचोत्तरकृतत्पाकांतरेणाचरेद्देवाख्यंमखमंततःपितृयजेस्याद्भूतयज्ञोथ

वा श्राद्धान्नेनतदंतएवसकलंस्याद्वैश्वदेवादिकमिति अत्रसकलंसाग्निककर्त्तृकंनिरग्निककर्तृकंच नन्वपूर्वोक्तेनसहतुल्यविकल्पः पक्षांतंकर्म
निर्वर्त्यवैश्वदेवंचसाग्निकः पिंडयज्ञंततः कुर्यात्ततोन्वाहार्यकंबुधइत्याद्यनेकविशेषशास्त्रविरोधात् पितृमात्राद्युद्देशेननांदीश्राद्धेपितुर्मातामही
चेतिपाठः लुप्तपार्वणविषयश्लोकैकदेशलोपः केवलमातृपार्वणकरणेएताभवंतुमेप्रीताइत्यूहः सूक्तवाकवदिष्टदेवतासंस्कारार्थत्वाच्छ्लोकपा
ठस्येतिनांदीश्राद्धनिर्णयः अथमातृकापूजनादिनांदीश्राद्धप्रयोगः गौरीपद्माशचीमेधासावित्रीविजयाजया देवसेनास्वधास्वाहामा
तरोलोकमातरः धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचतथेंद्राणीचामुंडासप्तमातरः
गौर्यादिषोडशमातृर्ब्राह्म्यादिसप्तमातृश्च एतेष्वक्षतपुंजेष्वावाहयामि ॐभूर्भुवःस्वःमातृभ्योनमइतिनाममंत्रेणध्यानादिदक्षिणासमर्पणां
तांपूजांकृत्वागौरीर्मिमायसलिला॰ परमेव्योमन् मंत्रपुष्पंसमर्पयामि इतिमातृकापूजनम् अथनांदीश्राद्धम् सत्यवसुसंज्ञकाविश्वेदेवाः
नांदीमुखाः भूर्भुवःस्वः इदंवःपाद्यंस्वाहानमइयंचवृद्धिः मातृपितामहीप्रपितामह्यः नांदीमुखाः भू॰ इदंवःपाद्यं॰ पितृपितामहप्रपितामहाः
नांदीमुखाः भूर्भुवःस्वः इदंवःपाद्यं॰ मातामहमातुःपितामहमातुःप्रपितामहाःपत्नीसहिताःनांदीमुखाः भूर्भुव॰रिदंवःपाद्यंस्वा॰ ततःपूर्व
वत्सत्यवसुसंज्ञकाइत्यादि आसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः एवंमातृपितामहीप्रपितामह्यः पितृपितामहप्रपितामहाःएवं
मातामहइत्यादि पुनःसत्यवसुसंज्ञकाविश्वेदेवाःनांदीमुखाः भूर्भुवःस्वः इदंदास्यमानंवोयुग्मब्राह्मणभोजनपर्याप्तमन्नमामंवायथाशक्ति

सोपस्करंहिरण्यंवास्वाहानमइयंचवृद्धिः मातृपितामहीप्रपितामत्यः नांदीसुखाः भू० दास्यमानमित्यादि० पितृपितामहप्रपितामहाः नांदीसुखाः
भूर्भुवःस्वः दास्यमानमित्यादि० एवंमातामह० सपत्नीका इत्यादि गौर्यादिषोडशमातरः ब्राह्म्यादिसप्तमातरश्चवः युग्मब्राह्मण० उपास्मैगा० ५
अक्षन्नमीमदंत० १ कृतस्यनांदीश्राद्धस्यपूर्णतासिद्ध्यर्थेद्राक्षामलकंतत्स्थानिनिधित्वेनद्रव्यंवादक्षिणात्वेनस्वाहानम० इदंचश्राद्धीयान्नादिप्रतिगृ-
हीतृभ्योदेयम् प्रजापतेनत्वदेतामीतिमंत्रंजप्त्वा अनेननांदीश्राद्धेननांदीसुखदेवताः प्रीयंतांवृद्धिः मातापितामहीचैवतथैवप्रपितामही पिता
पितामहश्चैवतथैवप्रपितामहः मातामहस्तत्पिताचप्रमातामहकादयः एतेभवंतुमेप्रीताः प्रयच्छंतुस्तुमंगलम् इळामग्नेपुरुदंसं० १ इतियथा
चारंमुद्रापात्रसंघट्टनेनशब्दंकुर्यात् ततः उत्तिष्ठब्रह्मणस्पते० १ अप्स्वारमि० १ यांतुदेवगणाः सर्वे० इत्यादिवैदिकपौराणमंत्रैरावाहितदेवता
उत्थापयेत् विश्वेदेवागर्भाधानेदक्षक्रतुसंज्ञकाः ततोग्निध्यानादीकृतेचक्षुषीआज्येनेत्यंतेप्रजापतिंचरुणाविष्णुंषड्वारंप्रजापतिंचाज्येनशे
षेणस्विष्टकृतमित्यादिप्रणीतानिधानांतेप्रजापतयेत्वाजुष्टंनिर्वपामिप्रोक्षामीतिनिर्वापप्रोक्षणाद्यभ्यर्चनांतेपत्न्यन्वारब्धइध्माधानाद्याज्य-
भागांतंकृत्वाचरुमवदानधर्मेणावदायान्वारब्धः सव्यपाणिमूर्ध्वांगुलिंहृदयेनिधायप्रजापतयेस्वाहेत्याहुतिंहुत्वाप्रजाप तयइदंनममेतित्य
जेत् ततोविष्णुर्योनिमितितिसृणांत्वष्टाविष्णुरनुष्टुप्० गर्भाधानप्रधानाज्यहोमेविनियोगः ॐ विष्णुर्योनिंकल्पयतु० स्वाहाविष्णवइदं० ३ नेज
मेषेतितिसृणांत्वष्टाविष्णुरनुष्टुप् गर्भाधानप्रधानाज्य० ॐ नेजमेषपरापत० स्वाहा विष्णवइदं० ऋचः ३ यद्यप्यनुक्तमप्यनुसारेणाविष्णुर्योनि

मित्यादिहोमेषुलिंगोक्तत्वष्ट्रादिदेवतानुचिताः तथापारिजातादिग्रंथैःसकलशिष्टाचारैश्चानादृताइतिमयापि नादृताः प्रजापतेहिरण्यगर्भःप्र
जापतिस्त्रिष्टुप् गर्भाधानप्र॰ ओंप्रजापतेन॰ स्वाहा प्रजापतयइदं॰ अन्वारब्धएवैवंसंस्राव्याहुतीर्हुत्वा पत्न्यामूर्धानंदक्षिणपाणिनाभिमृशेत् अप
नःशोशुचदघमितिसूक्तस्यकुत्सोग्निर्गायत्रीमूर्धाभिमर्शनेवि॰ ओंअपनःशोशुचदघ॰ इतिसूक्तांतेमूर्ध्निहस्तंनिधायततस्तमपसार्य याःफलिनी-
रितिजपेत् याःफलिनीरित्यस्यभिषगोषधयोनुष्टुप् जपेविनि॰ ॐयाःफलिनीर्या॰१ ततोग्नेर्वायव्यदिशितिष्ठन्नुपतिष्ठते वधेनदस्युमिति
षण्णांवत्सःश्रुतोग्निस्त्रिष्टुप् अग्न्युपस्थानेवि॰ ओंवधेनदस्युंप्रहिचातयस्व॰६ऋचः अग्निस्तुविश्रवस्तममितिद्वयोर्वसूयवोग्निस्त्रिष्टुप् अग्न्यु
पस्थानेवि॰ ओंअग्निस्तुविश्रवस्तमं॰ऋचः२ ततःसूर्योपस्थानंकृत्वास्विष्टकृदादिहोमशेषंसमापयेत् परिशिष्टस्वारसिकप्रतीतेः परिशि
ष्टान्मूर्धालंभात्पूर्वंवासूर्योपस्थानंहोमशेषंसमाप्यसूर्योपस्थानमितिवृत्त्याः सूर्योनोदिवस्पात्विति पंचर्चस्यसूक्तस्यचक्षुःसूर्योगायत्री सूर्यो
पस्थानेवि॰ ओंसूर्योनोदिवस्पातु॰ऋचः५इतिसपत्नीकःसूर्यमुपस्थाय ब्राह्मणान्शतंदशत्रीन्वाभोजयित्वाततदाशिषोगृहीत्वासुत्वानु
कूलनिशायांकृतनित्यक्रियःस्वलंकृतःस्वलंकृतयापत्न्यासहस्वलंकृतंगृहंप्रविशेत् तत्रपर्यंकारूढस्तांशुभेमुहूर्तेपर्यंकमारोप्यसूक्ष्मवस्त्रे
णाश्वगंधाकल्कंसंवेष्ट्य उदीर्ष्वेति द्वयोःसूर्यासावित्रीऋषिःसूर्यासावित्रीदेवता आद्यात्रिष्टुप् अंत्यानुष्टुप् भार्यायाःदक्षिणनासापुटेऽश्व
गंधारससेचनेविनियोगः पक्षांतरे दूर्वारससेचनेइतिविशेषः ओंउदीर्ष्वातःपतिवती॰ स्वाहेतिस्वाहाकारांताभ्यांमंत्राभ्यांप्राङ्मुखाः

प्राङ्मुखः पृष्ठतस्तिष्ठन्नासापुटयोः सिंचेत् यथा रस उदरपर्यंतमायाति उभयोर्नासाबिलयोर्निषिञ्च्येति परिशिष्टात् दक्षिणनासापुट एववा-
सिंचेत् नस्तो दक्षिणतो निःसिंचेदिति परिशिष्टांतरात् ततस्तामाचमय्य ओंगंधर्वस्यविश्वावसोर्मुखमसीति मंत्रेण पूर्वोक्तर्ष्यादिभिर्विष्णुर्यो-
निर्मितितिसृभिर्नेजमेषइति तिसृभिः तिसृभिरंगुलीभिर्योनिमभिमृश्य तांपूषन्निति मंत्रस्य सूर्यासावित्री ऋषिः सूर्यासावित्री देवता त्रिष्टुप्
छंदः जपेविनि० ॐ तांपूषञ्छिवतमामेरयस्व० १ योगर्भमित्यस्य वसिष्ठः पर्जन्यो गायत्री जपेवि० ॐ योगर्भमोषधीनां० १ अहंगर्भमित्यस्य
प्रजावान्प्राजापत्यो गर्भ इंद्रोनुष्टुप् जपेविनि० ॐ अहंगर्भमदधां० १ इतिजपित्वा सकृदुपगच्छेत् रेतःसेककाले प्राणेते रेतोदधाम्यसाविति
अनुप्राण्य यथा भूमिरग्निगर्भा यथा द्यौरिंद्रेण गर्भिणी वायुर्यथा दिशांगर्भ एवंतेगर्भंदधाम्यसाविति स्त्रीहृदयमभिमृश्याचामेत् असावित्यस्य
स्थाने प्रथमैकवचनांतं स्त्रीयंनामवाच्यम् संप्रदायानुसारेणोक्तमेतत् परिशिष्टे तु गंधर्वोसि विश्वावसुर्मुखमसीति उपस्थमभिमृश्य विष्णु-
र्योनिं कल्पयत्विति द्वाभ्यां विहृत्य योगर्भमोषधीनामहं गर्भमदधामोषधीष्विति जपित्वोपगच्छेत् प्राणेते रेतोदधाम्यसावि० अभिमृशेत् नैके
गमने मंत्रविधिमिच्छंति नत्वनेन किंचित्संस्क्रियत इति तत्रौषधिनिषेकं कृत्वोपगच्छतीत्युक्तम् परिशिष्टांतरे तु गंधर्वस्य विश्वावसोर्मुखमसीत्यु
पस्थं प्रजनयिष्यमाणोऽभिमृशेत् विष्णुर्योनिमिति द्वारं विदारयेत्तांपूषञ्छिवतमामेरयस्वेत्यनुप्रहरेत् समाप्तेर्थे जपेत्प्राणेते रेतोदधाम्यसाविति
अनुप्राण्या यथा भूमिरग्निगर्भा यथा द्यौरिंद्रेण गर्भिणी वायुर्यथा दिशांगर्भ एवं गर्भं दधाम्यसाविति चोक्तम् उक्तहोमासंभवे पूर्वोत्तरपाकयज्ञतंत्र

सहिताग्नं चाज्याहुतयो होतव्याः अग्नये स्वाहा इंद्राय स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा ब्रह्मणे स्वाहा तत्र परिस्तरणमाज्य
भागौ ब्रह्मा चेत्यंगानि कृताकृतानि सर्वथैव होमासंभवे अश्वगंधामूलं पेषयित्वा उदीर्ष्वातः पतिवतीत्येकयैवऋचा दक्षिणस्यां नासिकायां नि
षिञ्च्योपगमनं कार्यं यथोक्तं सिद्धांतभाष्ये तत्रैके ऋतुकाले अनादेशहोममिच्छंति अपरे तु उदीर्ष्वेत्यनया दक्षिणस्यां नासिकायां नस्तः करो-
तीत्येत द्गर्भलंभनमिति अनुस्मृतं च होमरहितस्य एकयर्चा नस्तः करणमात्रसौत्रगर्भलंभन पदार्थत्वं जपते न तदनुसारिणा कारिकाकृतापि
उक्तं चेत्यम शौनकेनापि उदीर्ष्वातः पतिवतीत्येतामृचसुदीर्यत्वित्यादिना ग्रंथेन नचोपगमनमंत्रा अप्यावश्यकाः जयंतादिभिरनादरणा
त् उदाहृतपरिशिष्टाच्च प्राजापत्यचरुहोमकरणपक्षेपि प्रथमर्तावेवासौ कार्यः अश्वगंधारसेन नस्तः करणं तु प्रत्यृतु आवर्तनं परिशिष्टे
अयर्तुमत्याः प्राजापत्यमृतौ प्रथमे इत्युपक्रम्य होमाम्नानात् अयगर्भलंभनमृताविति ऋतुसामान्यमधिकृत्य नस्तः करणाम्नानात् तथैव भा
ष्यकारादिभिः संकथनाच्च इत्यनंतदेवीये संस्कारकौस्तुभे गर्भाधानम् एवं जातगर्भाया धर्मा उच्यंते पाद्मे गर्भिण्यधिकारे नाय
स्कारेषूपविशेन्मुसलोलूखलादिषु जलं च नावगाहेत शून्यागारं च वर्जयेत् वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् विलिखेन्न नखैर्भू-
मिं नांगारेण न भस्मना न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् न तुषांगारभस्मास्थिकपालेषु समाविशेत् वर्जयेत्कलहं गेहे गात्रभंगं त
थैव च न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा तथा

नामंगल्यंवदेद्वाक्यंनचहास्याधिकाभवेत् कुर्याच्छ्वशुरयोर्नित्यंपूजांमांगल्यतत्परा तिष्ठेत्प्रसन्नवदनाभर्तुःप्रियहितेरतेति पाद्मे संध्यायांनैव-
भोक्तव्यंगर्भिण्यावरवर्णिनि नस्थातव्यंनगंतव्यंवृक्षमूलेचसर्वदा सर्वौषधीभिःकोष्णेनवारिणास्नानमाचरेत् कृतरक्षासुभूषाच्चवास्तुपूज
नतत्परा दानशीलास्तृतीयायांपार्वत्यांनक्तमाचरेत् गर्भिणीकुंजराश्वादिशैलहर्म्यादिरोहणम् व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत् शोकंर
क्तविमोक्षंचसाध्वसंकुक्कुटासनम् व्यवसायंदिवास्वापंरात्रौजागरणंत्यजेत् अतिक्षारंतुनाश्नीयादत्याम्लमतिभोजनम् अत्युष्णमतिशीतंचगु
र्वाहारंपरित्यजेत् इतिवृत्ताभवेन्नारीविशेषेणतुगर्भिणी यस्तुतस्यांभवेत्पुत्रःस्थिरायुर्वृद्धिसंयुतः अन्यथागर्भपतनमवाप्नोतिनसंशयइति
मार्कंडेयपुराणेगर्भकृत्यम् तस्यरक्षांसदाकुर्यान्नित्यंशौचनिषेवणात् प्रशस्तमंत्रलिखनाच्छस्तमाल्यानुलेपनात् विशुद्धगेहवसनाद्दनाया
साच्चवैद्विजेति तत्रैवगर्भिणींप्रकृत्य अतोनवृक्षंनैवाद्रिंप्राकारंनपयोनिधिं परिखांवासमाक्रामेदबलागर्भधारिणीति अथगर्भिणीप
तिधर्माः संग्रहे गर्भिणीवांछितंद्रव्यंतस्यैदद्याद्यथोचितम् सूतेचिरायुषंपुत्रमन्यथादोषमर्हतीति कालविधाने क्षौरंशवानुगमनंनखकृं
तनंचयुद्धंचवास्तुकरणंत्वतिदूरयानम् उद्वाहमंबुधिजलस्पर्शतोपयोगमायुःक्षयोभवतिगर्भिणिकापतीनामिति क्षौरंवपनं तच्चात्रकर्तन
स्याप्युपलक्षणं नोदन्वतोंभसिस्नायान्नचश्मश्रुप्रादिकर्तयेत् अंतर्वत्न्याःपतिःकुर्वन्नप्रजाभवतिध्रुवमितिक्रतुस्मरणात् यत्तुवपनस्यनिषेधे
पिकर्त्तनंनचविधीयतइतिस्मृत्यंतरवचनंतद्गर्भिणीपतिव्यतिरिक्तानांजीवत्पितृकादीनांयोवपननिषेधस्तत्रकर्त्तनविधानपरम् संग्रहे दहनंवप

नंचैवचौलंवैगिरिरोहणम् नावआरोहणंचैव वर्जयेद्गर्भिणीपतिरिति स्मृत्यंतरे सिंधुस्नानंद्रुमच्छेदंवपनंप्रेतवाहनं विदेशगमनंचैवनकुर्याद्ग
र्भिणीपतिरिति एतदपवादस्तुचैव क्षौरंनैमित्तिकंकुर्यान्निषेधेसत्यपिध्रुवं पित्रोःप्रेतविधानंचगर्भिणीपतिराचरेत् एतेचनियमाःसप्तमासादू-
र्ध्वंभवंतिच वपनंमैथुनंतीर्थंवर्जयेद्गर्भिणीपतिः श्राद्धंचसप्तमादूर्ध्वमित्याश्वलायनोक्तेः श्राद्धंश्राद्धभोजनम् तीर्थंतीर्थयात्रां इतिगर्भि
णीपतिधर्माः यदिकृतेपिगर्भाधानेगर्भोत्पत्त्यभावःतदाप्रतिबंधकप्रेतोपद्रवनिवृत्त्यैनारायणबलिनागबलीकार्यौ परिशिष्टे अथनाराय
णबलिरर्वाक्संवत्सराच्छुद्धकालेशुक्लैकादश्यांस्नातःशुचौदेशेविष्णुंवैवस्वतंयमंच यथावदभ्यर्च्यतदग्रेतिलमिश्रान्मधुघृतप्लुतान्दशपिंडान्
विष्णुरूपंप्रेतंध्यायन् काश्यपगोत्रासौविष्णुदैवत अयंतेपिंडइतिदक्षिणाग्रेषुदर्भेषुदक्षिणामुखःप्राचीनावीतिपरान्चीनेनपाणिनादत्वापिंडा
न्गंधादिभिरभ्यर्च्यप्रवाहणांतंकृत्वानद्यांक्षिपेत् अथरात्रावयुग्मब्राह्मणान्निमंत्र्योपोषितःश्वोमध्यंदिनेविष्णुमभ्यर्च्यप्रेतमुद्दिश्यब्राह्मणान
नेकोद्दिष्टविधिनाभोजयित्वातृप्तेषुब्राह्मणसमीपेपिंडविधिनानिनयनांतंतूष्णींकृत्वाविष्णवेब्रह्मणेशिवायसपरिवारायमायविष्णोअयंतेपिं
डइत्येवंचतुःपिंडान्भक्तशेषेणदक्षिणसंस्थान्दत्वाथपंचमंकाश्यपगोत्रदेवदत्तेतिप्रेतंध्यात्वातद्रूपायविष्णोऽयंतेइतिदद्यात् अथाचांतान्दक्षि
णयासंतोष्यैकंतेषुगुणवंतंविशेषतोवस्त्राभरणगोहिरण्यैःप्रेतबुद्ध्यातोषयेदथतेःपवित्रपाणिभिःप्रेतायकाश्यपगोत्रायतेतिलोदकांजलिरिति
तिलोदकंदापयित्वातेननारायणबलिकर्मणाभगवान्विष्णुरिमंदेवदत्तंशुद्धमपापकमर्हंकरोत्विति वाचयित्वाविसृजेदेषनारायणबलिकल्पएवम्

न्यामपिस्वाभिमतदेवतांयमद्वितीयायामभ्यर्च्यविधिमिमंकुर्यात् सोनेनमापाषंकरोतिनतुपुण्यकृतोपिबलिमेनमकृत्वापारलौकिकंकुर्यात् कृ
तंनोपतिष्ठतेंतरिक्षेविनश्यतितस्माद्यथासंभवमपिकुर्यादिति अथप्रयोगः शुक्लैकादश्यांनदीतीरादिशुचिदेशेस्नानादिनित्यक्रियांतेप्राणा
यामादितिथ्यादिसंकीर्तनांतेमदीयकुलाभिवृद्धिप्रतिबंधकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंनारायणबलिंकरिष्यइतिसंकल्प्यकलशस्थापनविधिनास्था
पितकलशद्वयेस्वर्णादिजातीयप्रतिमयोर्विष्णुमावाहयामिवैवस्वतंयममावाहयामीत्यावाह्यपुरुषसूक्तेनयमायसोमंसुनुतेतिषोडशोपचा
रैःसंपूज्यतत्पूर्वभागेरेखायांदक्षिणाग्रकुशास्तरणांतेशुंधंतांविष्णुरूपीप्रेतइतिदशस्थानेषुदक्षिणासंस्थमपो निनीयमधुघृतप्लुतान्पिंडान्
सतिलान्काश्यपगोत्रचैत्रप्रेतविष्णुदेवतायंपिंडइतिदक्षिणामुखःप्राचीनावीतीदक्षिणाग्रेषुकुशेषुपराचीनपाणिनासव्यंजान्वाच्यविष्णुरू
पप्रेतंध्यायन्दद्यात् गंधादिभिरभ्यर्च्यप्रवाहणांतंकृत्वानद्यादौक्षिपेत्तु तस्यामेवरात्रौश्वःकरिष्यमाणःश्राद्धेक्षणःक्रियतामित्येवमेकंत्रीन्
पंचवेत्येवमयुग्मान्ब्राह्मणान्श्राद्धोद्देशेननिमंत्र्योपोषणंकुर्यात् श्वोभूतेमध्यान्हेविष्णुमभ्यर्च्यप्रेतंविष्णुरूपिणमुद्दिश्यैकोद्दिष्टविधि-
नापादप्रक्षालनादितृप्तिप्रश्नांतंकृत्वाब्राह्मणसमीपेपिंडपितृयज्ञवदुल्लेखनाद्यवनेजनांतंतूष्णींकृत्वाविष्णवेब्रह्मणेशिवायसपरिवारायय
मायचनाममंत्रैःचतुरःपिंडान्दत्वाविष्णोयंतेपिंडइतिविष्णुरूपंप्रेतंध्यायन्पंचमंपिंडंचदत्वार्चनादिप्रवाहणांतंकृत्वाआचांतान्दक्षिणयासं
तोष्यतेष्वेकस्मैगुणवतेप्रेतबुद्ध्यावस्त्राभरणगोहिरण्यानिदत्वाब्राह्मणान्वदेत् भवंतःप्रेतायतिलोदकांजलिदानंकुर्वंत्वितितेचपवित्र

सं०कौ०
३४

पाणयः सकुशतिलतुलसीपत्रतोयांजलिंप्रेतायकाश्यपगोत्रायविष्णुरूपिणेयंतिलोदकांजलिरितिदद्युः ततोब्राह्मणान्वाचयेत् अनेननारा
यणबलिकर्मणाभगवान्विष्णुरिमंदेवदत्तंशुद्धमपापमर्हंकरोत्विति ततःस्नात्वाभुंजीतेतिपरिशिष्टोक्तनारायणबलेःस्मृत्यर्थसारानुसारी
प्रयोगः अथनागबलिः तत्रशौनकः अथवक्ष्यामिसर्पस्यसंस्कारविधिमुत्तमं सिनीवाल्यांपौर्णमास्यांकारयेद्विधिवत्ततः कृतस
र्पवधोविप्रःपूर्वजन्मनिवायदि स्नात्वागत्वाततोब्रह्मदंडंदद्याद्विजातये वधंप्ररव्यापयेच्चापिचरेत्कृच्छ्रांश्चतुर्दश वधेहजन्मनिकृतेलोह
दंडंद्विजातये दद्यात्पापविशुद्ध्यर्थंश्रोत्रियायकुटुंबिने विप्रायदंडमूल्यंवात्वभावेसतिदापयेत् सार्पवधात्कर्मकर्तुरेतदेवप्रदापयेत् नि
ष्कत्रयंद्विनिष्कंवानिष्कमेकंकनीयसं अनुमत्यादिकर्तॄणांनिष्कमर्धंतदर्धकं वित्तशाठ्यंनकुर्वीतदद्याद्वित्तानुसारतः अनुज्ञांचगुरोर्लब्ध्वासंस्कुर्यात्तद
नंतरम् प्रियंगुव्रीहिगोधूमतिलपिष्टेनवाथवा कृत्वासर्पाकृतिंतेननवसूर्पेनिधायच अनेनवक्ष्यमाणेनमंत्रेणप्रार्थयेदहिम् एहिपूर्वं-
मृतसर्पअस्मिन्पिष्टेसमाविश संस्कारार्थमहंभक्त्याप्रार्थयामिसमाहितः वस्त्रोपवीतगंधाद्यैरक्षतैःकुसुमादिभिः कर्ता पुष्पांजलिं
दत्वाप्रणिपत्यहरेद्वहिः प्रक्षालितांघ्रिपाणिस्तु कृत्वाचम्योपविशेद्भुवि कुर्यात्संस्कारसंकल्पंप्राणायामपुरस्सरम् यज्ञोपवीतिनाकार्यंस-
र्पसंस्कारकर्मतु लौकिकाग्निंप्रतिष्ठाप्यसमिदाधानमाचरेत् ततोग्नेरग्निदिग्भागेभूमिंसंप्रोक्ष्यवारिभिः चितिंकृत्वाथसंस्तीर्यकुशैराग्ने
यकाग्रकैः पर्युक्ष्याग्निंपरिस्तीर्यपरिषिच्यसमर्चयेत् कृत्वेध्माधानपर्यंतंषट्पात्रासादनादिकम् आघारंचक्षुषीहुत्वासर्पिषाचयथावि-

३४

धि सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः अपः स्पृष्ट्वा स्पृशेच्छ्रोत्रं गत्वा चाग्निसमीपतः स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः
सर्पास्ये जुहुयादाज्यं व्याहृत्या च समस्तया आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् स्रुवं तत्र निधायाथ यज्ञपात्राणि बर्हिषि त्रिर्विप्रदक्षि-
णं कृत्वा प्रणिपत्य क्षमापयेत् चमसस्थैर्जलैः सर्पं व्याहृत्याभ्युक्ष्य पाणिना अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत् उत्तिष्ठेद्दह्यमानं नमो
स्तु सर्पेति मंत्रतः ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया पूर्वजन्मनिवासर्प त्वं सर्वं क्षमयस्व मे इति संप्रार्थ्य नागेंद्रं स्नात्वागत्य पुनः पुनः
क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिस्त्रिभिः हुते सर्पे जलेनाग्निमभिषिंचेत्ततः परम् नास्थिसंचयनं कुर्यात्स्नात्वा चान्यगृहं व्रजेत्
ब्रह्मचर्यादिकं कार्यं त्रिरात्राच्छुद्धिरिष्यते चतुर्थेऽहनि संप्राप्ते सचैलं स्नानमाचरेत् घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भोजयेत् कर्त्ता नाम
पदैर्विप्रानर्चयेद्वक्ष्यमाणकैः सर्पोऽनंतस्तथा शेषः कपिलो नाग एव च कालिकः शंखपालश्च भूधरश्च प्रकीर्तितः पादप्रक्षालनं कुर्यादेभि
र्नामपदैः पृथक् गंधपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् एवं कृते विधाने वै सर्पसंस्कारकर्मणि सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः
कुष्ठव्याध्यादिभिर्मुक्तः सर्वथा भेषजं त्विदम् आयुरारोग्यमैश्वर्यं प्राप्य कामानवाप्नुयादिति अथ नागबलिसंस्कारप्रयोगः स
तु सिनीवाल्यां पौर्णमास्यां पंचम्यामाश्लेषायुक्तनवम्यां वा कार्यः पर्षदं प्रदक्षिणीकृत्य नत्वा तदग्रे निष्कं तदर्द्धं वा निधाय मम इह जन्मनि जन्मां
तरे वाज्ञानाद्ज्ञानाद्वा जातसर्पवधदोषपरिहारार्थं प्रायश्चित्तमुपदिशंतु भवंतः तद्यथा सर्वे धर्मविवेक्तार इति श्लोकान्पठित्वा मामनु

गृण्हंतुभवंतइतिप्रणमेत् तैरुपदिष्टः चतुर्दशकृच्छ्र प्रायश्चित्तं यथोक्तप्रत्याम्नायेनकरिष्येइतिसंकल्प पूर्वकंवपनादिविधिनातदाचरेत्
ततोब्राह्मणंसपूज्य पूर्वोच्चरितएवंगुणविशेषेणविशिष्टायांपुण्यतिथौममसर्पवधदोषपरिहारार्थं इमंलोहदंडं असुकगोत्रायासुकशर्मणे
ब्राह्मणायइमांदक्षिणांचतुष्टयमहंसंप्रददे प्रतिगृह्यतां देवस्यत्वासवितुः॰प्रतिगृण्हामीतिविप्रः ततोगुर्वाज्ञांलब्ध्वाप्रियंगुव्रीहिगोधूमति
लपिष्टेषु एकतमपिष्टेनसर्पाकृतिंकृत्वाशूर्पेनिधायसर्पंप्रार्थयेत् एहिपूर्वमृतसर्पत्वस्मिन्नपिष्टेसमाविश संस्कारार्थमहंभक्त्याप्रार्थयामिस
माहितः ततः भुजंगेशायविद्महेसर्पजातायधीमहि तन्नोनागःप्रचोदयादिति आवाहनादिषोडशोपचारपूजांकृत्वा पुष्पांजलिंदत्वाप्रणि
पत्यभोसर्पेमंबलिंगृहाणममाभ्युदयंकुरु इतिबलिंसमर्प्यहस्तौपादौप्रक्षाल्याचामेत् शुद्धभू मौस्थित्वाप्राणानायम्यसंकल्पंकुर्यात् ममेह
न्मनिजन्मांतरेवाज्ञानादज्ञानाद्वाजातसर्पवधोत्थदोषपरिहारार्थंसर्पसंस्कारकर्मकरिष्ये ततोलौकिकाग्निंप्रतिष्ठाप्यान्वादध्यात् अस्मिन्सर्प
संस्कारहोमकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेग्नावित्याद्याघारचक्षुष्यंतमुक्त्वा त्रप्रधानं अग्नौ अग्निंवायुंसूर्यं एताः
प्रधानदेवता आज्येन भूर्भुवःस्वरितिसर्पमुखे प्रजापतिमाज्येन आज्यशेषेणसर्पसद्योयक्ष्ये समिधमादाय ततोग्नेरग्निदिशिभूमौजलेनप्रोक्ष्य-
चितिंकृत्वाचितिंपरिसमुत्य आग्नेय्याग्रकैर्दर्भैः पिंडपितृयज्ञवत्परिस्तीर्यपरिषि च्यषट्पात्राण्यासाद्येध्माधानाद्याघारचक्षुष्यंतंकुर्यात् ततः
सर्पंगृहीत्वाचित्यामारोप्यापःस्पृष्ट्वा अग्निंसमीपमेत्य ततःप्रधानहोमः समस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयः

अग्निवायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि आज्यहोमेवि० ॐ भूः स्वाहा अग्नयइदंनममेत्यादिव्याहृतित्रयमग्नौजुहुयात्
चतुर्थीसर्पमुखेजुहुयात् आज्यशेषंस्रुवेणोवसर्पदेहेनिषेचयेत् ततोहस्तगृहीतेश्ममसजलैः समस्तव्याहृत्यापाणिनाभ्युक्ष्य अग्नेरक्षाणोव
सिष्ठोग्निर्गायत्री सर्पायाभिप्रदानेविनि० ॐ अग्नेरक्षाणोअंहसः ॰१ ततउपस्थानं ॐ नमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु येअंतरिक्षेयेदिवि
तेभ्यःसर्पेभ्योनमः येदोरोचनेदिवोयेवासूर्यस्यरश्मिषुयेषामप्सुसदःकृतंतेभ्यःसर्पे० याइषवोयातुधानानांयेवावनस्पतीँरनु येवावटेषुशेर
तेतेभ्यःसर्पेभ्यो० अथपौराणमंत्राः कर्कोटकनमस्तेस्तुशंखपालनमोस्तुते नागराजमहादेवतवरूपाणितेनमः अफणाःफणिनोयेचसवि-
षानिर्विषाश्चये सर्वेसर्पावटेशाय्याःपुण्यमूर्तेनमोस्तुते त्वयेयंजगतीस्वामिन्स्वफणामंडलोपरि धृतैकदेशेत्यणुवत्तस्मैतुभ्यंनमोस्तुते त्व
याभगवतेश्रीमद्ब्रह्मदेवायनिर्मितं स्वभोगेनैवपर्यंकमायतंभोगिनांवर त्राहित्राहिमहाभो गिन्सर्पोपद्रवदुःखतः संततिंदेहिमेपुण्यांनि
र्दुष्टांदीर्घदेहिनीम् प्रपन्नंपाहिमांभक्त्याकृपालोदीनवत्सल ज्ञानतोऽज्ञानतोवापिकृतःसर्पवधोमया जन्मांतरेतथैतस्मिन्मत्पूर्वैरथवाविभो
तत्पापंनाशयक्षिप्रमपराधंक्षमस्वमे इतिसंप्रार्थ्यनागेंद्रंस्नात्वागत्यततःपुनः क्षीराज्येनाग्निंसंप्रोक्ष्यततोव्याहृतिभिस्त्रिभिः हुतेसर्पेजले-
नाग्निमभिषिंचेत्ततःपरं नास्थिसंचयनंकुर्यात्स्नात्वाचस्वगृहंव्रजेत् ब्रह्मचर्यादिकंकार्यंत्रिरात्रान्छुद्धिरिष्यते शौनकाद्बौधायनमतेतुएकरात्रा
शौचं अन्नकर्तुरेवाशौचं आशौचंपिंडदःकुर्यान्नतुतद्बंधुगोत्रजाइतिवचनात् चतुर्थेहनिसंप्राप्तेसचैलंस्नानमाचरेत् घृतपायसभक्षैस्तु

द्विजानष्टौतुभोजयेत् कर्त्तानामपदैर्विभानर्चयेद्वक्ष्यमाणकैः सर्पस्वरूपिणेब्राह्मणायइदंतेपाद्यं अनंतस्वरूपिणो॰शेषस्वरूपिणे॰ कपिलस्व॰
नागस्वरू॰ कालिकस्वरू॰शंखपालस्वरू॰भूधरस्वरू॰ इतिपादौप्रक्षाल्याचम्य ततोभूर्भुवःस्वरिदमासनं आस्यतांसर्पस्थानेक्षणःक्रीयतांओं
तथा प्राप्नोतुभवान्प्राप्नुवानि एवंशेषादिभ्यः भोसर्पस्वरूपइदं गंधं एवंपुष्पधूपदीपवस्त्रादिदानं एवंशेषादीनामपिगंधादिदानं सर्पायइदम
न्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेर्दास्यमानंस्वाहासंपद्यतां इदंनमम एवंशेषादिभ्योप्यन्नदानं आचांतेषुविप्रेषुसर्पादिनाममंत्रैर्बलिदानंव
स्त्रादिपूजाकार्या ततोब्राह्मणानांतांबूलस्वर्णादिदक्षिणादानंच ततआचार्यादींश्चपूजयित्वास्वर्णनागदानंकार्यमितिसर्पस्यसंस्कारंकृत्वा
नागबलिंततः दत्वास्वर्णमयंनागमपराधात्प्रमुच्यतइतिवचनात् ततःकलशेस्वर्णनागमावाहनादिषोडशोपचारैःसंपूज्यप्रार्थयेत् ब्रह्मलोके
चयेसर्पाःशेषनागपुरोगमाः नमोस्तुतेभ्यःसुप्रीताःप्रसन्नाःसंतुमेसदा विष्णुलोकेचयेसर्पावासुकिप्रमुखाश्चये नमोस्तुतेभ्यःसुप्रीताःप्र
सन्नाःसंतुमेसदा रुद्रलोकेचयेसर्पास्तक्षकप्रमुखास्तथा नमोस्तुतेभ्यः॰ खांडवस्यतथादाहेस्वर्गंयेचसमाश्रिताः नमोस्तुतेभ्यः॰ सर्पसत्रेच
येसर्पाआस्तिकेनचरक्षिताः नमोस्तुतेभ्यः॰ मलयेचैवयेसर्पाःकर्कोटप्रमुखाश्चये नमोस्तुतेभ्यः॰ धर्मलोकेचयेसर्पावैतरण्यांसमाश्रिताः
नमोस्तुतेभ्यः॰ समुद्रेचैवयेसर्पावैतरण्यांसमाश्रिताः नमोस्तुतेभ्यः॰ येसर्पाःपार्वतीयेषुदरीसंधिषुसंस्थिताः नमोस्तुतेभ्यः॰ ग्रामेवायदि
वारण्येयेसर्पाःप्रचरंतिहि नमोस्तु॰ पृथिव्यांचैवयेसर्पायेसर्पाबिलसंस्थिताः नमोस्तुतेभ्यः॰ रसालयेचयेसर्पाअनंताद्यामहाबलाः नमोस्तु॰

एवंस्कृत्वातुनागेंद्रमाचार्यायनिवेदयेत् देशकालौसंकीर्त्य कृतस्यसर्पसंस्कारकर्मणः सांगतासिद्ध्यर्थं इमंहेममयंनागंसकलशंसवस्त्रंस
दक्षिणांतुभ्यमहंसंप्रददे अनेनस्वर्णनागदानेनअनंतादयोनागदेवताःप्रीयंतां ततआचार्यायगोदानंदेयं इमांगांसवत्सांस्वर्णशृंगींरौप्यखु
रींताम्रपृष्ठींकांस्यदोहांसवस्त्रांसदक्षिणांतुभ्यमहंसंप्रददे अनेनानंतादयःप्रीयंतां आचार्यायततोदद्यात्कृष्णांगांवृषभेणाहि वस्त्रालंकर
णैः पूज्य ब्राह्मणंब्राह्मणींतथा यस्यस्मृत्याचनामोक्त्येति ॰ मयायत्कृतंसर्पसंस्कारारव्यंकर्मतद्भवतांब्राह्मणानांवचनात्श्रीपरमेश्वरप्रसा
दात्सर्वंपरिपूर्णमस्तु तथास्त्वितितेब्रूयुः पूजयेद्द्विधिवद्भक्त्याब्राह्मणांश्चैवतोषयेत्कृत्वासर्पस्यसंस्कारमनेनविधिनानरः विरोगोजा
यतेक्षिप्रंसंततिंलभतेशुभां सोपद्रवविनिर्मुक्तोभवेत्सर्पप्रसादतः ततः पूर्वकृतंकर्मयातिनाशंमहामते क्षीणपापोविशुद्धात्माविष्णुलोके
महीयते ततः सांगतासिद्ध्यर्थंब्राह्मणभोजनंकार्यम् इतिनागबलिविधानंसमाप्तम् एवंनागबलिंकृत्वाजातोर्ध्वदेहिकतयानिर्णी
तस्यतत्कार्यं गयाश्राद्धंचैतादृशस्यगयाश्राद्धमेवकार्यम् एवमपिफलासिद्धौमहार्णवोक्तोविधिःकार्यः सयथावायुपुराणे चतुर्विधाचया
वंध्याभवेद्वत्सवियोजनात् वक्ष्येतस्याःप्रतीकारंतत्स्वरूपंनिबोधय हिरण्येनयथाशक्त्यासवत्सांकारयेद्दृढां धेनुंपलेनवत्संच पादेनगुरु
रब्रवीत् हिरण्येनयथाशक्त्येति पलेनवातदर्धेनतदर्धेनापिवापुनरितिपारिभाषोक्तप्रकारेणकुर्यादित्यर्थः धेनुंरूप्यखुरांरत्नंतस्याः
पुच्छेनियोजयेत् घंटांगलेनिबध्नीयात्सवत्सांप्राङ्मुखःसुधीः चंदनागरुकर्पूरगंधमाल्यैःसुशोभनैःउपचारैःषोडशभिर्नैवेद्यंपाय

संभवेत् मोदकंचनथापूपंगुडंलवणमेवच जीरकंचस्फाविस्तीर्णेश्शूर्पेवेणुमयेदृढे धेनोरेकंप्रदातव्यंब्राह्मणस्त्रीषुचैवहि षडष्टौदशवाद
द्यात्तदनंतरमेवच उपचारैःषोडशभिःपूजयेद्विविशेषतः मोदकादिभिःपरिपूरितमेकंशूर्पंधेनोःस्थापयित्वोक्तद्रव्यपूरितान्येवशूर्पाणि
षडष्टौदशवासभर्तृकाभ्योब्राह्मणीभ्योदद्यादित्यर्थः ब्राह्मणंसर्वशास्त्रार्थकुशलंधर्मवेदिनम् विद्याविनयसंपन्नंशांतंचैवजितेंद्रियं
अलोलुपंसर्वजनप्रियंकल्मषवर्जितम् आहूयभक्त्यासंपूज्यवस्त्राद्यैर्गंधपुष्पकैः तेनैवकारयेत्पूजामादितोधेनुवत्सयोः होमंचकारयेत्तत्र
समिदाज्यचरूत्कटम् पूजायांचहोमेचमंत्रमाह सोमोधेनुमितिमंत्रंसमुच्चार्यततःपुनः अस्यगौतमऋषिस्त्रिष्टुप्पूर्विहितार्थेवि॰ॐसोमो
धेनुंसोमोअर्वंत॰१ सोमेविनियुक्तायाअप्यस्याःसंयोगपृथक्त्वन्यायेनधेनुरपिदेवताहोमस्तुल्कसंस्कारयेदित्यभिधानात् समिदादिभिः
प्रत्येकमष्टोत्तरसहस्रंकुर्यात् धेनुदानमाह प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः मंत्रेणतस्यविधिवत्पुच्छंहस्तेनिधायच दानमं
त्रमाहसार्द्धश्लोकद्वयेन धेनुर्यांगिरसांसत्रेप्रविष्टास्फरमेश्वया दुहितायातथाभानोरग्नेश्चवरुणस्यच यावैगावःप्रवर्त्ततेवनेषूपवनेषुच
प्रीणंतुताममगृहंपुत्रपौत्रप्रदाःसुखम् प्रयच्छंतुदिवारात्रमविच्छेदंतथान्वये एवंदत्वातुतद्दानंप्रणिपत्यविसर्जयेदिति इतिवंध्यात्वहर-
सुवर्णधेनुदानं यद्वासूर्यारुणसंवादोक्तंकार्यं तद्यथा निक्षेपाहरणान्नैवानपत्यःप्रजायतइत्युपक्रम्य अरुणउवाच तथाधनंगृहंधान्यमपु
त्रंजन्मनिष्फलम् ममोपरिदयांकृत्वाप्रायश्चित्तंवदस्वमे श्रीसूर्यउवाच तीर्थयात्राप्रकर्त्तव्यारेवातापीसमुद्भवा एकेनापिहिवस्त्रेणदंप-

तीर्स्नानमुत्तमम् श्रवणंहरिवंशस्य ब्राह्मणोद्वाहनंरवग अष्टोत्तरशतान्विप्रान्मिष्टान्नेनतुतर्पयेत् ईशान इतिमंत्रेणजपंकुर्यात्सहस्रकं
दशांशहोमसंयुक्तंकुर्याच्चविधिवत्ततः पद्मैरक्तलक्षसंख्याकैःशिवंसंपूज्ययत्नतः स्वर्णधेनुःप्रदातव्यासवत्साकरभिस्तथा घृतकुंभंवैनतेय
ब्राह्मणायनिवेदयेत् एवंकृतेवैनतेयद्यपत्यंजायतेकलाविति द्विविधस्याप्यस्यकर्मविपाककर्मणःकृच्छादिप्रायश्चित्तपूर्वकमेवानुष्ठेयतायां
महार्णवादिसंमतत्वात्संक्षेपेणकृच्छादिलक्षणान्युच्यंते तत्रयाज्ञवल्क्यः एकभुक्तेननक्तेन तथैवायाचितेनच उपवासेनचैवायंपादकृच्छ्रः
प्रकीर्तितः यथाकथंचित्त्रिगुणःप्राजापत्योयमुच्यते अत्रापस्तंबः सायंद्वाविंशतिर्ग्रासाःप्रातःषड्विंशतिःस्मृताः चतुर्विंशतिरायाच्याः
परेनिरशनास्मयः प्रातःपादंचरेच्छूद्रःसायंवैश्यस्यदापयेत् अयाचितंचराजन्येत्रिरात्रंब्राह्मणेस्मृतमिति पादकृच्छ्रविधावित्थंव्यवस्था-
मुक्त्वार्द्धस्यपादोनस्यच विनियोगेविशेषमाह सायंप्रातर्विनार्द्धस्यात्पादोनंनक्तवर्जितमिति याज्ञवल्क्यः अयमेवातिकृच्छ्रःस्याप्पाणिपू
रान्नभोजनः कृच्छातिकृच्छ्रःपयसादिवसानेकविंशतिम् द्वादशाहोपवासेनपराकःपरिकीर्तितः येषुनवादिनेषुभोजनंप्राप्तंतत्रपाणिपूरा
न्नंनियम्यते यत्रपुटिकादिनाग्रासपरिमाणंकृत्वा एकग्रासपर्याप्तंदुग्धमेकविंशतिदिनेष्वश्नीयात् प्राजापत्योक्तद्वाविंशत्यादिसंख्ययायाव
त्ताप्राणधारणंभवतितावद्वेतिमदनपारिजातः पयोत्रपानीयम् अब्भक्षःकृच्छ्रातिकृच्छ्र इतिगौतमोक्तेरिति भवदेवः गोमूत्रंगोमयंक्षी
रंदधिसर्पिःकुशोदकम् जग्ध्वापरेन्ह्युपवसेत्कृच्छ्रंसांतपनंचरेत् पृथक्सांतपनद्रव्यैःषडहःसोपवासकः सप्ताहेनतुकृच्छ्रोयंमहासांतप

नः स्मृतः तप्तक्षीरघृतांबूनामेकैकं प्रत्यहं पिबेत् एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः अंगिराः कपिलायास्तु दुग्धायां धारोष्णां तु पयः पि
बेत् एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् इति तिथिवृद्ध्याचरेत्पिंडान् शुक्ले शिखंडसंमितान् एकैकं ह्रासयेत्पिंडं कृष्णे चांद्रायणं
चरन् एतद्यवमध्यचांद्रायणं कृष्णादिशुक्लांतं तु पिपीलिकामध्यमित्युच्यते बोधायनस्तु चतुर्दश्यामुपोष्य केशादि वापयित्वा पर्वणि पंच
दशग्रासनियमं कृत्वा चांद्रायणमारभेतेत्याह अथ प्रत्याम्नायाः अपरार्के समिद्धुतहविर्धान्यं तिलान्वा मारुताशनः हुत्वा द्वादशसाह
स्रं गायत्र्या कृच्छ्रमाप्नुयात् द्वादशैव सहस्राणि जपेद्देवीमुपोषितः जलांते विधिवन्मौनी प्राजापत्याय मुच्यते अन्नदानं हिरण्येनह्रा दशब्राह्म-
णान् शुचीन् तर्पयेन्मारुताशी च श्रोत्रियान् कृच्छ्र उच्यते उपोष्य श्रद्धया युक्तस्तिलपात्राणि धर्मतः द्वादश ब्रह्मवादिभ्यः प्राजापत्येन तत्समम्
स्वयमाहृत्य यो मूर्ध्ना तृणभारानुपोषितः दद्याद्गोमंडले कृच्छ्रो द्वादशैव मसंशयः भारो द्विसहस्रपलपरिमितः प्राणायामशतं कृत्वा द्वावि-
शोत्तरमार्त्तिषु अहोरात्रोषितस्तिष्ठेत्प्राङ्मुखः कृच्छ्र उच्यते नमस्कारसहस्राणि द्वादशैव दृढव्रतः गोविप्रपितृदेवेषु कुर्यात्कृच्छ्रत्रयं भवेत्
कौर्मे तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमं ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम् द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतं सर्वत्र या
त्रायां कृच्छ्रसंख्यया योजनसंख्या स्यादिति उत्सर्गोक्तिः स्मृत्यर्थसारे वसिष्ठः गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् कृच्छ्रमेकाहिकं प्रो
क्तं दृष्टमंगिरसा स्वयम् निश्यासीनो दिवा तिष्ठेत्त्रिरात्रं मारुताशनः प्राजापत्यं विजानीयात्कूष्मांडैर्जुहुयाद्घृतमिति पराशरः कृच्छ्रो देव्य-

युतं चैव प्राणायामशतद्वयं पुण्यतीर्थे नार्द्रशिराः स्नानं द्वादशसंख्यये ति माधवीये प्राजापत्यं चरन्विप्रो यद्यशक्तः कथंचन अहानि पंच

विप्राग्र्यान्भोजयेत्स म्यग्गीप्सितान् एकमध्ययनं कुर्यात्प्राजापत्यमथापि वा दद्याद्द्वादशसाहस्रं गवा मुष्टिं विचक्षणः चतुर्विंशतिमते

कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् तिलहोमसहस्रं तु वेदपारायणं तथा विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च अन्या वा पावमा

नेष्टिः समान्याहुर्मनीषिणः स्मृत्यर्थसारे रुद्रैकादशिनी कृच्छ्रो द्वादशांशो निवर्त्तनात् तत्र दशहस्तेन दंडेन त्रिंशद्दंडा निवर्त्तनमिति तः

स्य द्वादशांशभूमिदानेन कृच्छ्र इत्यर्थः माधवीये प्राजापत्यक्रियाशक्तो धेनुं दद्यात्पयस्विनीं धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः मदनरत्ने

ब्राह्मे गवामभावे निष्कं स्यात्तदर्द्धं पादएव वा याज्ञवल्क्यः निष्कं सुवर्णाश्चत्वार इति एतत्परिमितं हेम रूप्यं वा अत्यशक्तौ पादार्द्धं तत्समं

धान्यादि वा दद्यादिति स्मृत्यर्थसारः षडुपवासाः प्राजापत्यः प्रत्याम्नायः एकविप्रभोजनमुपवासस्येति च पक्षिवधे नक्तं रूप्यमाषकं वा द-

द्यादिति हारीतोक्तेः रूप्यमाषकदानं नक्तस्येति शूलपाणिः षट्त्रिंशन्मते धेनुः पंचभिराद्यानां मध्यानां त्रिपुराणिका कार्षापणैकमूल्यादिक

निष्ठानां प्रकीर्तिता द्वात्रिंशत्कृष्णलपरिमितं रजतपुराणः द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेदिति च यज्ञविषयमेतदिति शूल

पाणिः कात्यायनः द्वात्रिंशत्पणिका गावः दशकार्षापणा धेनाविति षट्त्रिंशन्मते प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतं चतुर्विंश

तिमते प्राजापत्ये तु गामेकां दद्यात्सांतपने द्वयं पराकेन तथातिकृच्छ्रे तिस्रस्तिस्रस्तु ताः स्मृताः अष्टौ चांद्रायणे ज्ञेयास्तिस्रो वा शक्त्यपेक्षया

शूलपाणिः चांद्रायणंतुकुर्वाणाः कुर्युः कृच्छ्रचतुष्टयम् तथा चांद्रायणपराकाभ्यांनिष्कृतिर्योनशक्नुयात् सकरोत्यात्मशुध्यर्थंप्राजापत्य
स्यपंचकं अत्रगुरुलघुपक्षाणांगुरुलघुकृच्छ्रादिभेदेनशक्ताशक्तभेदेन वाव्यवस्थाकृच्छ्रातिकृच्छ्रे धेनुचतुष्टयमितिभवदेवः अथप्राय
श्चित्तस्वीकारप्रकारः पर्षदमुपविश्यतस्यैधेनुवृषौदत्वास्वपापंनिवदयेत् पापंविख्यापयेत्पापीदत्वाधेनुंवृषंतथेतिपराशरोक्तेः महापा
तकादिष्वधिकंकल्प्यमितिमिताक्षरायां विष्णुः पादकृच्छ्रेवरूप्रदानंकृच्छ्रार्द्धेतैलकांचनं पादहीनेतुगामेकांकृच्छ्रेगोमिथुनंस्मृतं अंगिराः
सचैलंवाग्यतःस्नात्वाक्लिन्नवासाःसमाहितः उपस्थायततःशीघ्रमार्तिमान्धरणींगतः गात्रैश्चशिरसाचैवनचकिंचिदुदाहरेत् प्रदक्षिणी
कुर्यादितिमहार्णवे सर्वधर्मविवेक्तारोगोप्तारःसकलाद्विजाः ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं
प्रसादःक्रियतांमत्थंशुभानुज्ञांप्रयच्छथ पूज्यैःकृतःपवित्रोहंभवेयंद्विजसत्तमाः मामनुगृण्हंतुभवंतइतिवदेदित्याचारः अंगिराः वृद्धाः
पृच्छंतिकिंकार्यमुपविश्याग्रतःस्थितं यदिन्वेद्रक्षसेसत्यंनियतंप्राप्स्यसेशुभं यथागतोस्यसत्येननत्वंशुध्यसिकर्हिचित् एवंतैःसमनु
ज्ञातःसर्वंब्रूयादशेषतः ततःपर्षदनुज्ञाय ब्राह्मणोब्राह्मणानांतुक्षत्रियाणांपुरोहितः वैश्यानांयाजकश्चैवप्रायश्चित्तंसमादिशेत् शृणु
ष्वपापोइदंविप्रायतआदिशतेव्रतं तत्तेयत्नेनकर्तव्यमन्यथातेवृथाभवेदिति अनेनप्रायश्चित्तेनतेशुद्धिर्भविष्यतीति ततःपर्षदंविसृज्यदे-
शकालौसंकीर्त्यामुकपापनिवृत्त्यर्थंपर्षदुपदिष्टमिदंप्रायश्चित्तंपूर्वोत्तरांगसहितमाचरिष्येइतिसंकल्प्य कर्त्तव्यमाहविष्णुः दिनांतेनख

रंभादीन्प्रवाप्यस्नानमाचरेत् भस्मगोमयमृद्वारिपंचगव्यादिकल्पितैः मलापकर्षणंकार्यंब्रह्मशौचोपसिद्धये दंतधावनपूर्वेणपंचगव्येनसं
युतम् व्रतंनिशासुखेग्रामात्यंबहिस्तारकदर्शने वपनेविशेषोपसर्के पापसंचयशिखायामिति आयुर्बलंयशोवर्चः प्रजापशुवसूनिच ब्रह्मप्र
ज्ञांचमेधांचत्वंनोदेहिवनस्पतेइतिदंतधावनं अनेनशिखाभिमंत्रणमितिकेचित् जिह्वोल्लेखनमप्याचारतः भस्मस्नानविधिर्लिंगे ईशाने
नशिरोदेशेमुखेतत्पुरुषेणतु हृदीदेशमघोरेणगुह्यंवामेनसद्यत सद्येनपादौसर्वांगंप्रणवेनतुशोधयेत् ईशानादिपादोपेतैर्मंत्रैश्चतुर्थ्यंतैरीशा
नादिनामभिर्वालेपयेदित्यर्थः गोमयस्नानंगृत्स्यपरिशिष्टे प्रातरुत्सृष्टंगोमयंत्वंतरिक्षस्थंसंगृह्यभूमिस्थंवोपर्यधश्चसंत्यक्त्वातीर्थमेत्यधौत
पाणिपादोदक्षिणभागंप्रणवेनदिक्षुनिक्षिप्योत्तरंतीर्थेक्षिप्त्वामध्यमंमानस्तोकेइत्यभिमंत्र्यगंधद्वारामित्यृचामूर्धादिसर्वांगमालिप्यप्रांजलिर्हि
रण्यशृंगेतिद्वाभ्यामवतेहेळइतिद्वाभ्यांप्रसमाजेइतिसूक्तेनप्रार्थ्य याःप्रवतइत्येतयातीर्थमभिमृश्याचगात्यद्विराचाम्य मार्जयेदिति मृत्स्नानवि
धिःशैवे अश्वक्रांतइतिस्मृत्वामंत्रेणामंत्र्यमृत्तिकां उद्धरेदुद्धृतासीतिमंत्रेणसुसमाहितः नमोमित्रस्येतिऋचादर्शयित्वाचभानवे आरुह्येतिच-
गात्राणिसमालंभ्यद्विराचमेत् वारिस्नानविधिर्ब्रह्मांडे आपोअस्मानित्युक्त्वातुभास्कराभिमुखःस्थितः इदंविष्णुर्जपित्वाचप्रतिस्रोतोनिमज्ज
ति पंचगव्यविधिर्मात्स्ये गायत्र्यादायगोमूत्रंगंधद्वारेतिवैशकृत् आप्यायस्वेतिचक्षीरंदधिक्राव्णेतिवैदधि तेजोसीतिघृतंतद्वद्देवस्यत्वेतिचोद
कम् कुशमिश्रंजपेद्विद्वान्पंचगव्यंभवेत्ततइति स्नानांगतर्पणादिविधायकर्तव्यंजाबालिः आरंभेसर्वकृच्छ्राणांसमाप्तौचविशेषतः आज्येनै

वहिशालाग्नौ जुहुयाद्व्याहृतीः पृथक् श्राद्धं कुर्याद्व्रतांते च गोहिरण्यादिदक्षिणेति होमोष्टोत्तरशतमष्टाविंशतिर्वेति महार्णवः दक्षिणामिति पाठे त्वंत एव
श्राद्धं शातातपः विधाय वैष्णवं श्राद्धं सांकल्पं निजकाम्यया धेनुं द्विजेभ्यो दद्याच्च दक्षिणां च स्वशक्तित इति आज्यहोमे पंचगव्यहोमे चेध्महवनादि
स्थालीपाकेति कर्तव्यतां केचिन्नेच्छंति आज्यहोमे पापापहा महाविष्णुर्देवतेति च वदंति ततो ब्रह्मकूर्चविधिना पंचगव्यप्राशनं व्रतं निशासु रवमित्यु
क्तव स्नेव्रतशब्दार्थत्वेन महार्णवादिभिस्तस्यैवोक्तेः मायश्चित्तसंकल्पो व्रतमिति माधवः पालाशादिपत्रे ताम्राया गोर्मूत्रं अष्टमाषप्रमाणं गाय
त्र्यादाय श्वेतगोः शकृत्षोडशमाषमितं गंधद्वारामित्यादाय पीतगोः क्षीरं द्वादशमाषपरिमितमाप्यायस्वेत्यादाय नीलगोर्दधि दशमाषमितं दधि
क्राव्ण इत्यादाय कृष्णगोर्घृतमष्टमाषमितं तेजोसि शुक्रमसीत्यादाय कुशोदकं चतुर्माषमितं देवस्य त्वेत्यादाय सप्तपत्रैरच्छिन्नाग्रैः कुशैरिरा
वतीदं विष्णुर्मानस्तोके शंवतीभिर्हुत्वा प्रणवेनालोड्य तेनाभिमंत्र्य तेनोत्सृत्य तेनैव पिबेदिति स्मृत्यर्थसारः मरीचिस्तु अग्नये स्वाहा सोमाय स्वा
हेदं विष्णुर्मानस्तोके गायत्र्या प्रजापते न त्वदेतानीत्याहुतीर्जुहुयादित्याह माधवीये प्रजापतिः अग्नये चैव सोमाय सावित्र्या च तथैव च प्रणवे
न तथा हुत्वा स्विष्टकृच्च तथैव चेति ब्राह्मे उदङ्मुखश्चिराचामेदिति जाबालिः स्त्रीणां होमो न दातव्यः पंचगव्यं तथैव च पराशरः स्त्रीशूद्रस्य
तु शुद्ध्यर्थं प्राजापत्यं समाचरेत् पंचगव्यं च कुर्वीत स्नात्वा चैव शुचिर्भवेत् स्त्रीशूद्राणां पंचगव्ये विकल्प इति महार्णवे प्राशनपक्षेपि कापिलपंचग-
व्यं स्त्रीशूद्रेणापेयं स्त्रीशूद्रौ तु विप्रैः कारयित्वा तूष्णीं पिबत इति स्मृत्यर्थसारः भवदेवीये यमः आलभ्य प्रणवेनैव तथैवाप्रणवेन तु प्रणवेन-

४०

समालोड्यप्रणवेनैवतस्मिन्वेदिति प्राशनारंभेव्रतंगृहीष्यइतिविप्रान्प्रार्थयेदितिन्द्वाः ततःप्रायश्चित्तंमुख्यविधिनोक्तप्रत्याम्नायेनवाकृत्वान्यात्
तिहोमविष्णुश्राद्धगोदानानिपूर्ववद्विधायकृतंप्रायश्चित्तंपूर्णमस्त्वितिब्राह्मणानूवाचयित्वापापापहमहाविष्णुवर्पणंकुर्यादिति अवादीत्यमनंतेनकृ
च्छ्रादेर्लक्षणादिकं देवेशःप्रीयतांतेनयस्यज्ञानमयंतपः १ इत्यनंतदेवीयेसंस्कारकौस्तुभेकृच्छ्रादिविधिः एवंकृच्छ्राद्यनुष्ठानपूर्वकंमहार्ण
वोक्तमरुणसंवादोक्तंवाकर्मकृत्वाकारयितारंसंपूज्यपूर्णतांवाचयेत् माघकृत्योक्तांपार्थिवपूजांप्रत्यहंकृत्वाऽभिलाषाष्टकजपंवासंवत्सरंकुर्यात् त
द्यथा विश्वानरउवाच एकंब्रह्मैवाद्वितीयंसमस्तंसत्यंसत्यंनेहनानास्तिकिंचित् एकोरुद्रोनद्वितीयोवतस्थेतस्मादेकंत्वांप्रपद्येमहेशं १ एकःकर्तात्वं
हिविश्वस्यशंभोनानारूपेष्वेकरूपोस्यरूपः यद्वत्प्रत्यप्स्वर्कएकोप्यनेकस्तस्मान्नान्यंत्वांविनेशंप्रपद्ये २ रज्जौसर्पःशुक्तिकायांचरौप्यंनैरःपूरस्तन्मृ
गाख्येमरीचौ यद्वत्तद्वद्विष्वगेषप्रपंचोयस्मिन्ज्ञातेतंप्रपद्येमहेशं ३ तोयेशैत्यंदाहकत्वंचवन्हौतापोभानौशीतभानौप्रसादः पुष्पेगंधोदुग्धमध्येच
सर्पिर्यत्तच्छंभोत्वंततस्त्वांप्रपद्ये ४ शब्दंगृण्हास्यश्रवास्त्वंहिजिघ्रेरघ्राणस्त्वंव्यंघ्रिरायासिदूरात् व्यक्षःपश्येस्त्वंरसज्ञोप्यजिव्हःकस्त्वांसम्यग्वेत्त्यत
स्त्वांप्रपद्ये ५ नोवेदस्त्वामीशसाक्षाद्धिवेदनोवाविष्णुर्नोविधाताखिलस्य नोयोगींद्रानेंद्रमुख्याश्चदेवाभक्तोवेदत्वामतस्त्वांप्रपद्ये ६ नोतेगोत्रंनेशना
पिजन्मापिनाख्यानोवारूपंनैवशीलंनदेशः इत्थंभूतोपीश्वरस्त्वंत्रिलोक्याःसर्वान्कामान्पूरयेस्तद्भजेत्वाम् ७ त्वत्तःसर्वंत्वंहिसर्वंस्मरारेत्वंगौरीश
स्त्वंचनग्नोऽतिशांतः त्वंवैवृद्धस्त्वंयुवात्वंचबालस्तत्किंयत्त्वंनास्यतस्त्वांनतोस्मि ८ स्तुत्वेतिभूमौनिपपातविप्रःसदंडवद्यावदतीवहृष्टः तावत्सबा

लोखिलवृन्दवृन्दः प्रोवाचप्रभूदेववरंवृणीहि ९ ततउत्थायहृष्टात्मामुनिर्विश्वानरःकृती प्रत्यब्रवीत्किमज्ञातंसर्वज्ञस्यतवप्रभो १० सर्वांतरात्माभगवान्
शर्वःसर्वप्रदोभवान् याञ्चांप्रतिनियुक्तेमांकिमीशोदैन्यकारिणीं ११ इतिश्रुत्वावचस्तस्यदेवोविश्वानरस्यह शुचेःशुचिव्रतस्याथशुचिःस्मित्वाब्रवीच्छि
शुः १२ बालउवाच त्वयाशुचेशुचिष्मत्यांयोभिलाषःकृतोहृदि अचिरेणैवकालेनसभविष्यत्यसंशयः १३ तवपुत्रत्वमेष्यामिशुचिष्मत्यांमहा-
मते ख्यातोगृहपतिर्नाम्नाशुचिःसर्वामरप्रियः १४ अभिलाषाष्टकंपुण्यंस्तोत्रमेतन्त्वयेरितं अब्दंत्रिकालपठनात्कामदंशिवसन्निधौ १५ एतत्स्तोत्रस्यपठ
नंपुत्रपौत्रधनप्रदम् सर्वशांतिकरंवापिसर्वापत्परिनाशनं १६ स्वर्गापवर्गसंपत्तिकारकंनात्रसंशयः प्रातरुत्थाययःस्नात्वालिंगमभ्यर्च्यशांभवम् १७
वर्षंजपन्निदंस्तोत्रमपुत्रःपुत्रवान्भवेत् वैशाखेकार्त्तिकेमाघेविशेषनियमैर्युतः १८ यःपठेत्स्नानसमयेलभतेसकलंफलम् कार्तिकस्यतुमासस्यप्रसा
दादहमव्ययः १९ तवपुत्रत्वमेष्यामियस्त्वन्यस्तत्पठिष्यति अभिलाषाष्टकमिदंनदेयंयस्यकस्यचित् २० गोपनीयंप्रयत्नेनमहावंध्याप्रसूतिकृत् स्त्रिया
वापुरुषेणापिनियमाल्लिंगसन्निधौ २१ अब्दंजप्तमिदंस्तोत्रंपुत्रदंनात्रसंशयः इत्युक्त्वांतर्दधेबालःसोपिविप्रोगृहंगतः २२ इतिश्रीस्कंदपुराणेकाशी
खंडेविश्वेश्वरस्तोत्रंसंपूर्णम् एवमपिफलाप्राप्तौदत्तकपुत्रस्वीकारंकुर्यात् अथदत्तकेग्राह्याग्राह्यविवेकः तत्रशौनकः ब्राह्मणानां
सपिंडेषुकर्तव्यःपुत्रसंग्रहः तदभावेऽसपिंडेषुअन्यत्रतुनकारयेदिति अत्रचसपिंडेष्वपिभ्रातृसुतोमुख्यः तदभावेसगोत्रःसपिंडोयःकश्चित् त
दभावेत्वसगोत्रःसपिंडः तदभावेत्वसपिंडःसगोत्रः तदभावेसपिंडोऽसगोत्रोपि तत्रापिभागिनेयदौहित्रवर्जं विरुद्धसंबंधासत्यापुत्रत्वबुत्पन्न

र्हभ्रातृपितृव्यमातुलवर्जं त्रयाणांवर्णानांस्वसमानवर्णएव तत्रापिदेशभेदप्रयुक्तगुर्जरत्वादिजात्यासमानजातीयएव सर्वोपिसभ्रातृकल्व ज्येष्ठभि
न्नश्च शूद्रस्यतुभागिनेयदौहित्रावपिग्राह्यौ अत्रप्रमाणंमनुः भ्रातृणामेकजातानांयद्येकःपुत्रवान्भवेत् सर्वेतेनैवपुत्रेणपुत्रिणोमनुरब्रवी दि
ति एकजातानामित्येवसिद्धेभ्रातृपदंसोदरत्वेपिभ्रातृभगिनीनांपरस्परपुत्रनियमोनभवतीतिज्ञापनार्थम् एकजातग्रहणंभिन्नोदराणामेकपितृका
णामपिसपिंडात्मलाभदशायांभ्रातृपुत्रनियमोनभवतीतिज्ञापनार्थम् नतुभिन्नोदरभ्रातृसुतस्याग्राह्यत्वज्ञापनार्थम् ब्राह्मणादित्रयेनास्तिभा
गिनेयःसुतःकश्चिदितिवृद्धगौतमस्मृतिवत्तन्निषेधस्मृतेःक्वाप्यनुपलंभात् एकइत्येकोपीत्यर्थः तेन द्वयोरपिपुत्रत्वेअन्येषामपुत्राणांनभ्रातृपुत्र
ग्रहणासंभवः पुत्रवानित्यत्रापुत्रोपुत्रावाविद्यंतेयस्येतिमतुपं स्वीकृत्येतिनत्वेकंपुत्रंदद्यादितिनिषेधस्यात्रान वकाशइतिकेचित् तन्न निषेधबा
धशास्त्रस्मृत्यंतरेक्वाप्यनुपलंभेसतिशास्त्रविरुद्धेदृशतात्पर्यवर्णनासंभावात् पुत्रवानितिमतुपाएकहानिपदेभट्टपादोक्तन्यायेनसंख्याविशेषो
दासीनपुत्रविशिष्टतामात्रप्रत्ययानाच्च नचात्रददातेरमुख्यत्वात् नोनिषेधप्रवृत्तिरितिशंक्यम् प्रकृतेर्ददातेरमुख्यतायाअनुपदमेवनिराकरिष्य
माणत्वात् पुत्रपदंचौरसपरम् जन्यपुंस्त्ववाचिनःपुत्रपदस्यतत्रैवमुख्यत्वात् तेनभ्रातृपुत्रस्यापिदत्तकादेर्भ्रातृमतोपिनग्रहणम् उत्तरार्धेते
नेत्येकवचनात् पुत्रिणइतिबहुवचनाच्च बहवोप्येकंयुगपत्प्रतिगृण्हीयुरिति युगपत्प्रतिग्रहेणद्रौपदीभार्यात्ववत् द्व्यामुष्यायणत्ववच्चलक्षणा
नेकनिरूपितपुत्रत्वफलकस्यसत्रवत् परस्परहितसर्वभ्रात्रधिकारिकस्यप्रतिग्रहविधेरिहाक्षेपइतिकेचित् तन्न भ्रातुःपुत्रोत्पत्तेःप्रागेवपुत्रप्र-

तिग्रहादिना भ्रातृपुत्रग्रहमनिच्छति कस्मिंश्चिद्भ्रातरि इच्छतोप्येकस्य भ्रातृपुत्र प्रतिग्रहानापत्तेः अन्येतु नैवात्र प्रतिग्रहविधिरनुमीयते किंत्वक्त
तस्यैव भ्रातपुत्रस्य अपुत्रपितृव्यपुत्रत्वं विधीयते तेन पुत्रवच्छ्राद्धाधिकारादिलाभः तथाच वृहत्पाराशरः अपुत्रस्यपितृव्यस्य तत्पुत्रो भ्रातृ
जो भवेत् सएव तस्य कुर्वीत श्राद्धपिंडोदकक्रियाइति वृहस्पतिरपि यद्येकजाता बहवो भ्रातरस्तु सहोदराः एकस्यापिसुते जाते सर्वेतेपुत्रिणः
स्मृताः बह्वीनामेकपत्नीनामेषएवविधिः स्मृतः एकाचेत्पुत्रिणी तासां सर्वासां पिंडदस्तु सइति अत्रसापत्नपुत्रस्यागृहीतस्यापिंडदानाधिकारित्वा
त् पितृपत्न्यः सर्वामातरः इत्यादिशास्त्राल्लौकव्यवहाराच्च पुत्रत्वं निर्विवादं तत्सहपाठाच्च भ्रातृपुत्रस्याप्यगृहीतस्यैव पुत्रत्वं विधीयत इत्युचितं
अस्तिचोक्तमनुवाक्येनापिसह पठितसापत्नपुत्रस्यागृहीतस्यापि पुत्रत्वविधायकं वाक्यांतरं सर्वासामेकपत्नीनामेकाचेत्पुत्रिणी भवेत् सर्वास्तास्ते
न पुत्रेण पुत्रिण्यो मनुरब्रवीदिति तदपि न अपुत्रस्यैव भ्रातृपुत्रस्य पुत्रत्वे त्रयोदशपुत्रापत्तेः तत्रच पुत्रान्द्वादशजानाह नृणांस्वायंभुवो मनुः
तेषां षड्बंधुदायादाः षड्दायादास्तु बांधवाइतिद्वादशसंख्याविरोधात् पत्नीदुहितरश्चैव पितरो भ्रातरस्तथा तत्सुता गोत्रजाबंधुः शिष्यः स
ब्रह्मचारिणइति याज्ञवल्कीयेवचसि भ्रातृपुत्राणां भ्रात्रनंतरस्थाननिवेशानुपपत्तेश्च तेषांपुत्रत्वे इतरपुत्रवत्पत्न्याः पूर्वमेवनिवेशौचित्यात्
व्याख्यातंच भ्रातृणामेकजातानामितिवचो विज्ञेश्वरेण भ्रातृपुत्रस्यपुत्रीकरणसंभवे अन्येषांपुत्रीकरणनिषेधार्थं न पुनः पुत्रत्वप्रतिपादना
यतत्कृता इत्यनेनाविरोधादिति कातर्ह्येतस्य वचसो गतिरिति चेत् नापुत्रस्य लोकोस्तिजायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान्जायते यज्ञेन देवे

भ्यः प्रजयापितृभ्यब्रह्मचर्येणऋषिभ्यइत्यादिशास्त्रबोधितस्याप्र जत्वप्रयुक्तदोषस्यनिवृत्तिः पुत्रकार्यभूताद्द्वादशपुत्रभिन्नेनापिभ्रातृकृतेनाः
पुत्रपितृव्यस्यभवतीतिज्ञापनार्थं संगच्छतेचैकस्यापिकृतेजातइतियद्येकःपुत्रवान्भवेदितिचजननमात्रेणसत्तामात्रेणचैतरेषांपुत्रत्वसंकीर्तनं
उचितंचैतत् स्वपुत्रेणेवभ्रातृकृतेनापिसमस्तपितृणांपिंडोदकक्रियानिर्वाहस्यवंशाविच्छेदपरिहारस्यचसंभवात् इत्थंचभ्रातृणामितिसर्वेपुत्रि-
णइतिबहुवचनंतावतोवारुणानीतिवत् एषशयनोयेनयजेरन्नितिवच्चयथासंभवप्राप्तबहुत्वानुवादः उक्तज्ञापनस्यफलंकेवलंपारलोकार्थितया-
भ्रातृपुत्रवतोपुत्रस्यदत्तकादिस्वीकारप्रवृत्तिनिराशः पत्न्यादिभ्यःपूर्वंमदीयपिंडदानरिक्थाधिकारी कश्चिद्भवेदितिकामनायांभ्रातृपुत्रस्यैवद
त्तकविधिनास्वीकारसिद्धिरप्यर्थाज्जायमानाभवतिवाक्यस्यप्रयोजनं अप्रजत्वदोषनिवर्तकतयापुत्रसदृशस्यैवपुत्रप्रतिनिधित्वेनस्वीकरण
मुचित मितिषाष्ठप्रतिनिधिन्यायादेवसिद्धेः एवंचसतिनमन्वादिवाक्येषु अश्रुतप्रतिग्रहादिक्रियाकल्पनेक्लेशः नापिमिताक्षरादिग्रंथविरोधः
नापियाज्ञवल्क्यादिवाक्येभ्रातृकृतानांपंचमस्थाननिवेशानुपपत्तिः पुत्रत्वेनाकृतानांभ्रातृकृतानांपत्न्यादिषुसत्सुपुत्रकार्यभूतपैतृकऋणा
पाकरणकारिणामपिवचनाद्रिक्थग्रहणाद्यनधिकारसंभवात् पुत्रत्वेनकृतानांतुसंभवतितदधिकारः संगच्छतेचैवंसति कालिकापुराणेशंकर
कृतयोर्वेतालभैरवयोर्नंदिवाक्येनपुत्रार्जनेप्रवृत्तयोर्मध्येभैरवेणोर्वश्यामुत्पादितपुत्रस्यतद्भ्रात्रावेतालेनापिपुत्रत्वेनस्वीकरणं ततःकदाचिदु
र्वश्यांभैरवोमैथुनंगतः तस्यांसजनयामाससकवेशंनामपुत्रकम् तमेवचक्रेतनयंवेतालोपिस्वकंकृत मिति अत्रचस्वकृतकार्यकारित्वेनतमे

वाच्यमन्यतेइतियद्यर्थः क्रियतेयदिवाप्रतिग्रहेणस्वकृतत्वंसंपादितवानिति उभयथापिएतस्मिन्मतेनक्षतिः भ्रातृकृताभावेपूर्वोदाहृतशौनकवा-
क्यादेवग्राह्यसपिंडासंभवेसगोत्रएवेतिनियममाहवृद्धगौतमः स्वगोत्रेषुकृतायेस्युर्दत्तक्रीतादयःसुताः विधिनागोत्रतांयांतिनसापिंड्यंविधीयतइ
ति गोत्रतांसंततित्वं संततिर्गोत्रजननकुला नीतित्रिकांडीस्मरणात् गोत्रापेक्षयासपिंडसगोत्रासंभवेसगोत्रः सपिंडएवग्राह्यःशौनकोक्तवचनोत्तरा
र्द्धेसपिंडाभावएवासपिंडनियमात् गोत्रापेक्षयासापिंड्यस्यप्रत्यासन्नतयातत्कृतसादृश्यस्यबलवत्वाच्चसर्वथासपिंडालाभेसमानगोत्रस्यैवग्रहणम्
अनंतरोदाहृतवृद्धगौतमवचसैवसिद्ध्यति नसापिंड्यंविधीयतइतिचतुर्थपादोक्तनिषेधस्यासपिंडसगोत्रएवसंभवात् सगोत्रालाभेऽसगोत्रोपि दत्ता
द्याअपितनयानिजगोत्रेणसंस्कृताः आयांतिपुत्रतांसम्यगन्यबीजसमुद्भवाइतिकालिकापुराणात् गोत्ररिक्थेजनयितुर्नभजेद्दत्तिमःसुतइतिमा
नवलिंगाच्च दत्तक्रीतादिपुत्राणांबीजवत्य सपिंडता पंचमीसप्तमीतद्वद्गोत्रंतत्पालकस्यचेति बृहन्मनुवाक्येसापिंड्यगोत्रयोर्व्यवस्थाविधानाच्च
असगोत्रेष्वपिभागिनेयादिनिषेधमाहशौनकः दौहित्रोभागिनेयश्चशूद्राणांविहितःसुतः ब्राह्मणादित्रयेनास्तिभागिनेयःसुतःक्वचिदिति पू
र्वार्द्धेभागिनेयस्यदौहित्रसाहचर्यात् उत्तरार्द्धेभागिनेयपदंदौहित्रोपलक्षणार्थं पुनस्त्वबुद्ध्यनर्हभ्रात्राद्युपलक्षणार्थंच समानवर्णएवग्राह्यइतिनिय
मस्तुपूर्वोदाहृतशौनकवाक्येअन्यत्रतुनकारयेदितिचरणेनब्राह्मणैर्ब्राह्मणान्येषुनकर्त्तव्यइत्यर्थः केनलभ्यतेतथा क्षत्रियाणांस्वजातौवागुरुगोत्र
समेपिवा वैश्यानांवैश्यजातीषुशूद्राणांशूद्रजातिषु सर्वेषांचैववर्णानांज्ञातिष्वेवनचान्यतइतिशौनकवचनाच्चविशेषवचनैरेवसमानवर्णनियमेसिद्धे

पुनर्ज्ञातिषु एव नत्वान्यत इत्युक्तिः गुर्जरत्वादिनापि समानजातीयत्वनियमार्थं क्षत्रियेण स्वीकर्तव्यस्य दत्तकस्य समानगोत्रस्यैव चिकीर्षायां पुरोहि
तगोत्रेणैव समानगोत्रत्वमिति ज्ञापनार्थं गुरुगोत्रेण पौराहित्यान् राजविशामित्याश्वलायनोक्तेः सप्तमात्पुरुषाद्ग्राह्य इत्यसूचितं शौनकेन नैकपुत्रं दद्यात्
प्रतिगृह्णीयाद्वा सहि संतानाय पूर्वेषामिति ज्येष्ठभिन्नो ग्राह्य इत्यपि स्मृत्यंतरे सूचितं न ज्येष्ठं पुत्रं दद्यादिति दौहित्रभागिनेयौ शूद्रेण ग्राह्यावित्याह
शौनकः दौहित्रो भागिनेयश्च शूद्राणां वापि दाप्यत इति उक्तविधदत्तकस्वीकारः पुंभिरिव स्त्रीभिरपि सधवाभिर्विधवाभिश्च कार्यः वंध्या वा मृतपु
त्रा वा पुत्रार्थं समुपोष्य चेति शौनकीयवचनस्य विशेषश्रवणात् केचित्तु अपुत्रेणैव कर्तव्यः पुत्रः प्रतिनिधिः सदेति अस्मिन् वाक्ये एवकारश्रवणा
त् पुंस्त्वश्रवणाच्च न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वान्यत्र भर्तुरनुज्ञादिति वसिष्ठवाक्ये भर्तुरनुज्ञानाभावे स्त्रीणां प्रतिग्रहनिषेधाच्च नापुत्राणां स्त्री
णां भर्तुरनुज्ञाभावे पुत्रप्रतिग्रहेधिकार इत्याहुः तदयुक्तम् अपुत्रपदार्थस्य विधेयत्वे हि तद्विशेषणे पुंस्त्वविवक्षामाश्रित्य पुंस्त्वश्रवणादिति हेतूप
न्यास उचितः स्यात् न तु तस्य विधेयकत्वं मुख्याभावे तत्कार्यकारी हि प्रतिनिधिपदार्थः एवं च न गिरा गिरेति ब्रूयादिति वाक्यबलादेव गिरापदकार्ये इरा
पदविधिबलात् गिरापदनिषेधस्य पदानुवादत्वमाश्रित्य तदाकांक्षायोग्यतया सहकृतात् पुत्रप्रतिनिधिः कार्य इत्येतावतो वाक्यादेवापुत्राधिकारिकत्वलाभा
त् अपुत्रपदं कथं नानुवादः तदर्थस्य विधेयत्वाभावे च न तथा पुंस्त्वविवक्षेति किंच विरुद्धो भवदुपन्यस्तो हेतुः एवकारश्रवणादेव पुंस्त्वस्याविव
क्षितत्वात् अश्वमेधे हि अतिदेशप्राप्ताद्विगुवचने अप्राप्तस्यापि षड्विंशतिपदस्य षड्विंशतिरित्येव ब्रूयादित्यत्र न विधिः एवकारार्थविशेषणतादि त्युक्तं

पूर्वमीमांसायां तथा अत्र त्वेवावपतीत्यत्रानंत्यत्वेषु अप्राप्तस्याप्यावापस्यततएवविधानमाश्रितम् तथोत्तरमीमांसायामप्यात्मानमेवलोकमुपासी
तेत्यादौ ततएवनोपास्यत्वेनात्मविधानमित्याश्रितंविवरणादौ एवंचैवकारार्थविशेषणसंभवात्प्राप्तिकस्याविधेयत्वेकथंतद्विशेषेणपुंस्त्वविवक्षेतिकृत्स्नबु
द्धयएवंविदांकुर्वंतु यदिपरमेकारमप्येतैरेवरश्मिभिरूर्ध्वआक्रमतइतिवत्कथंचिदयोगव्यावृत्त्यर्थंतयानुवादमाश्रित्यापुत्रपदार्थोविवक्ष्यतेततथापिम
लिनःस्यात् इत्यत्रमलिनपदमिवफलकामनाक्षेपकत्वेनाधिकारिसमर्पकमेवपुत्रपदंस्वीकार्यं ततश्चस्वर्गकामादिपदगतपुंस्त्वाविवक्षासाधकषाष्ठ
न्यायेनैवपुंस्त्वाविवक्षासिद्धिरितिप्रथमहेतुद्वयालीकत्वसिद्धिः नचापुत्रपदंविवक्षितंस्वीकृत्यशास्त्रांतरप्राप्तपुत्रप्रतिग्रहानुवादेनपुंसैवकर्तव्योनस्त्रि
येतिपरिसंख्यास्त्वितिशंक्यम् तथासतिस्त्रियाकर्तव्यंपुत्रप्रतिग्रहंप्रतिभर्त्रनुज्ञांगविधेरलीकत्वापत्तेः नापितृतीयोहेतुः निषेधवाक्यपर्यालोचन
याभर्त्रनुज्ञातस्यप्रतिग्रहांगत्वंवदद्भिर्हितदंगत्वेनतद्विधिपरत्वस्यवाक्यस्याश्रवणीयम् नचाविहितमंगंभवतीतिन्यायात् ततश्चपुत्रप्रतिग्रहायभर्त्र
नुज्ञांस्वीकुर्यादितिविधिरयमधिकारिणंप्रवर्तयन्नियमविधिनामापद्यते यश्चविधिविषयेसमर्थस्तमेवावगाहतइतिनसधवांप्रत्येवतस्यप्रवृत्तिःतस्या
मेवनियमोपजीव्यपाक्षिकप्राप्तेःसंभवात् तथैवानुज्ञास्वीकारस्यशक्यत्वाच्च स्वीकृतांहिनैवविशेषणंनियमविधित्वलाघवानुरोधेनैवविशेषविष
यत्वमुपांशुयजुषेत्यत्रद्वितीये एवंचयथा पक्षांतंकर्मनिर्वर्त्यवैश्वदेवंचसाग्निकः पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइतिवचसावैश्वदेवाधिकृतसा
ग्निकंप्रतिपिंडयज्ञांगत्वेनवैश्वदेवोत्तरकालतारूपमनुवादेयगुणनियमवत्तापिंड्येष्टाद्यविभक्तनयातदधिकृतसाग्निकस्यपिंडयज्ञाधिकारेणव्याव

४४

र्तते तथासधवांप्रत्युक्तनियमंकुर्वत्तापिशास्त्रेणविधवायाः पुत्रप्रतिग्रहेधिकारोनव्यावर्त्यतेनचानुज्ञारूपोगुणोनुपादेयोयेननापुत्रस्यलोकोस्ती-
त्यादिवचनेनावश्यकर्तव्येपिसायंकालादिवदधिकारमवच्छिंद्यादितिसुधीभिरेवालोचनीयम् अथांगत्वप्रतिज्ञांपरित्यज्यापिभर्त्रनुज्ञारहितांप्रति
प्रतिग्रहनिषेधःक्रियतइत्युच्यते तथापिनविधवाया अधिकारोव्यावर्त्तयितुंशक्यते अनुज्ञाशब्दोहिपुमभिप्रायवचनोधीष्टादिशब्दवत् एवंचजी
वतोभर्त्तुस्तादृशाभिप्रायंतज्जीवनदशायांतन्मरणोत्तरंवाज्ञातवत्याःकथंनाधिकारः त्वयापुत्रःस्वीकर्त्तव्यइतिशब्दंप्रयुज्यभर्तरिमृतेतुविधवा
याःक्रियमाणंपुत्रस्वीकरणंभर्त्रनुज्ञयैवकृतंभवतीतिस्फुटम् ब्राह्मणाःसंस्थापयतमेयज्ञमित्युक्त्वाहवनीयंप्रविष्टेयजमानेऋत्विग्भिःक्रियमाणे
सर्वस्वारसयनस्ययजमानाज्ञातत्ववत् वस्तुतस्तुनापुत्रस्यलोकोस्तीत्यादिशास्त्रेणपुत्राकरणस्यदोषहेतुत्वेभर्त्रनुज्ञारहितांप्रतिपुत्राकरणाभ्य
नुज्ञापरमदःशास्त्रंनतुनिषेधपरंशास्त्रप्राप्तनिषेधस्यान्याय्यत्वात् पर्युदासलक्षणाप्रसंगादितिसुधीभिरूह्यम् नचनस्वातंत्र्यंक्वचित्स्त्रि
याइत्यभावेज्ञातयइतिचभर्त्रभावेज्ञातिपरतंत्रत्वात् नापुत्रायाविधवायाअधिकारःपुत्रप्रतिग्रहेसिद्ध्यतीतिशंकितुमप्यर्हम् रक्षेत्कन्यांपिता
विन्नांपतिःपुत्रादिवार्धके अभावेज्ञातयस्तेषांनस्वातंत्र्यंक्वचित्स्त्रियाइतियाज्ञवल्क्यवचस्तद्व्याख्यानोपक्रमेचमिताक्षराकारेणाक्तंपा
णिग्रहणात्प्राक्पिताकन्यांअकार्यकरणाद्रक्षेदिति एवंचनिषिद्धाचरणात् स्त्रीनिवर्तनेतत्तदवस्थायांतत्तदधिकारइतिवचनस्वरसाद्व्या-
ख्यानाच्चप्रतीयतेनतुविहिताचरणप्रतिबंधेपि नचनित्यकाम्यव्रताद्याचरणेज्ञातिपारतंत्र्यकृतोविधवानामधिकारप्रतिबंधःक्वचिद्दृश्येकेरन्

पिशिष्टैर्व्यवह्रीयते पक्षद्वयावसानेतुराजाभर्तास्त्रियाइतिमिताक्षरोदाहृतवचनेननतदुक्तरीत्याज्ञातिरहितानांविधवानांराजाज्ञांविनाव्रतादावधिका
राभावःस्यात् नचव्रतादेःपुत्रप्रतिग्रहेकश्चिद्विशेषइतिमहत्यांडिंडिमाविष्कृतंधर्मशास्त्राभिज्ञानशून्यैः नचप्रतिग्रहमंत्राभावेनाधिकाराभावो-
क्तिरपिघटते अनुज्ञायांसत्यामिवासत्यामपितस्यामुक्तरीत्याधिकारनिर्णयेरथकारवन्मंत्राध्ययनकल्पनासंभवात् एतेनानुज्ञायांसत्याममंत्रकः
प्रतिग्रहइतिनिरस्तम् तस्माद्विधवायाअपिस्वीकृतःपुत्रोवृत्तिधनभाक्भवत्येवेतितादृशब्राह्मणस्यवृत्तिप्रतिबंधंकुर्वतःस्वस्यैवानर्थाययत-
ते योब्राह्मणस्यतुप्रतिकूलंसमाचरेत् विट्प्रजांतुकृमीणांस्यादेकःसंवत्सरान्बहूनितिशास्त्रादित्यलंपल्लवितेन चूडादिसंस्कारेषुकृतेषुअ
कृतेषुवापंचमवर्षात्प्रागूर्ध्वंचदत्तकोग्राह्यः यत्तु अकृतसंस्कारएवापूर्णपंचवर्षएवदत्तकःस्वीकार्यः दत्तकाद्याअपितनयानिजगोत्रेणसंस्कृ
ताःआयांतिपुत्रतांसम्यक्अन्यबीजसमुद्भवाः पितुर्गोत्रेणयःपुत्रःसंस्कृतःपृथिवीपते आचूडांतंनपुत्रःसपुत्रतांयातिचान्यतः चूडाद्याय
दिसंस्कारानिजगोत्रेणवैकृताः दत्ताद्यास्तनयास्तेस्युरन्यथादासतोच्यते ऊर्ध्वंतुपंचमाद्वर्षान्नदत्ताद्याःसुतानृप गृहीत्वापंचवर्षीयंपुत्रेष्टिं
प्रथमंचरेत् पौनर्भवंतुतनयंजातमात्रंसमानयेत् कृत्वापौनर्भवस्तोमंजातमात्रस्यतस्यवै सर्वांस्तुकुर्यात्संस्कारान्जातकर्मादिकान्नरः कृ
तेपौनर्भवस्तोमेसुतःपौनर्भवःस्मृतइतिकालिकापुराणादिति तन्न एषांवचसांबहुषुकालिकापुराणपुस्तकेष्वदर्शनान्निर्मूलत्वादितिकेचित्
अन्येतुसमूलत्वेपिआद्यश्लोकत्रयस्यासगोत्रदत्तकविषयत्वात्तत्राय पठितत्वेनांत्यश्लोकस्यापितद्विषयत्वमेवोचितं अतःसगोत्रस्यदत्तक

स्यनायंनियमइतिपरिणीतोपिदत्तकोभवेदित्याहुः वस्तुतस्तुनासगोत्रेष्वप्युपनयनांतसंस्कारोत्तरंदत्तकत्वसामान्यनिषेधः कर्त्तुंशक्यः पुरा
णवचोभिर्वैदिकलिंगविरुद्धस्मृतिवचसांप्रामाण्यसंभवस्यबलाबलाधिकारणवार्त्तिककरणकसिद्धत्वात् उक्तपौराणिकवाक्यानांचवक्ष्यमाणब्रा
ह्मणविरोधात् तथाहिदत्ताद्याइतिताक्कृत्रिमादीनामपिग्रहणंइतिनिर्विवादं ततश्चसगोत्रेणसंस्कृतः स्वयंदत्तोपिपुत्रोनभवतीतिप्रतीयते ब्रा
ह्मणेचशुनःशेपोविश्वामित्रपुत्रः स्वयमभवदितिस्फुटमुक्तम् अथहशुनःशेपोविश्वामित्रस्यांकमाससादसहोवाचाजीगर्तःसौयवसि
र्ऋषेपुनर्मेपुत्रंदेहीतिनेतिहोवाचविश्वामित्रोदेवावाइमंमत्थमरासतेतिसहदेवरातोवैश्वामित्रआसेति अथभाष्यं शुनःशेपइत्यूर्ध्वंकस्य
पुत्रोस्त्वितिविचारेसतितदीयेच्छैवनियामिकेतिमहर्षीणांवचःश्रुत्वाशुनःशेपः स्वेच्छयाविश्वामित्रपुत्रत्वमंगीकृत्यसहासादनीयमंक
माससादेतिनचासावनुपनीतःतादृशस्यवेदाध्ययनसंभवात् अनधीतवेदस्यचवैदिकमंत्रकरणकप्रजापत्यादिस्तुतोप्रवृत्त्ययोगात्
इदंदत्तस्तुवर्णरथप्रतिग्रहेसमंत्रकेप्रवृत्त्ययोगाच्चश्रूयतेचैषा तस्माइंद्रस्तूयमानःप्रीतोमनसाहिरण्यरथंददौतमेतयाप्रतीयायशश्व
दिंद्र इतीति प्रतीयायप्रतिजग्राहेतिव्याख्यातंभाष्ये अतःपौराणवचसांसमूलत्वेपीत्थंयोजना अन्यबीजसमुद्भवाइतिदत्ताद्या
स्तेनयाजातकर्मप्रभृतिभिःसंस्कारैर्निजगोत्रेणाचेत्संस्कृताभवेयुः तदैवप्रतिग्रहीतुःसम्यक्पुत्रतांयांति सम्यक्त्वंचसमानगोत्रत्वविशि
ष्टमसाधारण्यंतत्रयद्यपिजातकर्मादिषुसाक्षाद्गोत्राद्दिनियोगान्नश्रूयते तथापितदंतभूतंवृद्धिश्राद्धधारकोगोत्रसंबंधोबोध्यते चूडा

यांतुसासादेवनत्संबंधः तत्तद्गोत्रिणंप्रतिआर्षेयसंख्ययाशिखाकरणविधानात् शिखा अपिचकर्त्तव्याः कुमारस्यार्षसंख्ययेति अतएवद्वितीयवचनं
प्यन्यतइतितसिल्प्रत्ययंषष्ठ्यर्थेस्वीकृत्यचकारंचावधारणार्थमंगीकृत्येत्थंयोज्यम् आचूडांतंजनकगोत्रेणयः संस्कृतः सप्रतिग्रहीतुःपुत्रोभवन्नपि
नान्यस्यैवपुत्रतांयातिकिंतुद्व्यामुष्यायणोद्विगोत्रोभवतीतितथाचूडायाः प्राक्संस्कारेषुपितृगोत्रेणकृतेष्वपिचूडाप्रभृतिसंस्काराः प्रतिग्रहीत्रानिज
गोत्रेणचेत्कृतास्तदादत्ताद्यास्तेतनयानिजगोत्रेणकृताः स्युः अन्यथातु अदासतांदासवैलक्षण्यंरिक्थग्राहित्वादिनाभवति नतुस्वासाधारणगोत्र
त्वमित्यर्थकेनतृतीयवचनेनापिचूडादिसंस्काराणांनिजगोत्रानुष्ठानस्यैकगोत्रताप्रापकत्वेनतात्पर्यंचूडाद्यग्रहणाच्च तत्पूर्वसंस्कारेषुजनकगोत्रेण
कृतेष्वपिसंस्काराः प्रतिग्रहीतृगोत्रेणचेज्जाताः तदाद्व्यामुष्यायणत्वेपिनद्विगोत्रत्वम् किंतुप्रतिग्रहीतृगोत्रत्वमेवेत्युक्तंभवति यथाचप्रतिगृही
तृगोत्रेणचूडाकर्मतः समानगोत्रत्वप्रापकं तथातद्गोत्रेणतच्छाखोक्तविधिनोपनयनंतत्समानशाखीयत्वस्यापिप्रापकंभवति यथाहवसिष्ठः अन्यशा-
खोद्भवोदत्तः पुत्रश्चैवोपनायितः स्वगोत्रेणस्वगृह्योक्तविधिनास्वस्वशाखभागिति यच्चूर्ध्वंत्रित्यादिश्लोकार्धंतन्नस्वतंत्रनिषेधपरं उत्तरार्धगतपुत्रेष्टि
विधिनावाक्यभेदापत्तेः किंतु अनाहुतिजतिलाश्चगवेधुकाश्चेत्यस्यपयोहोमविधिशेषवत्पुत्रेष्टिविधिशेषत्वमस्यबोध्यं पुत्रेष्टिरुक्ता अग्नयेपुत्रवतेपु
रोडाशमष्टाकपालंइंद्रायपुत्रिणेपुरोडाशमेकादशकपालंप्रजाकामोग्निरेवास्मैप्रजांप्रजनयतिवृद्धामिंद्रः प्रयच्छतीतिप्रसिद्धा प्रथमंचरेदितिसं
स्कारेभ्यः प्रथममित्यर्थः तथान्वारंभणीयायाआरंभयोग्यतार्थत्ववत् पुत्रेष्टेः संस्कारयोग्यतार्थत्वप्रतीतेः तादृशसंततावेवपुत्रेष्ट्यपेक्षानतुद्व्यामुष्यायणेइति

सिद्धम् एवंपौनर्भवेपौनर्भवष्टोमाख्यसोमयागस्यापिसंस्कारयोग्यतासिद्धिद्वारानादृशसंततावेवोपयोगोबोध्यः अनाहिताग्नीनांतुपुत्रेष्ट्य-
संभवात्पुरोडाशस्थानेचरूःकार्यो यआहिताग्नेःपुरोडाशास्तेनाहिताग्नेश्चरवइतिशास्त्रात् अतःसंस्कारोपिपंचवर्षाधिकबालोपिदत्तकोभ
वतीतिसिद्धम् इतिग्राह्याग्राह्यविवेकः कथंग्राह्यइत्यपेक्षायामाहशौनकः शौनकोहंप्रवक्ष्यामिपुत्रसंग्रहमुत्तमम् वंध्यावा
मृतपुत्रावापुत्रार्थेसमुपोष्यच वाससीकुंडलेछत्रमुष्णीषंचांगुलीयकम् आचार्यधर्मसंयुक्तंवैष्णवंवेदपारगम् बर्हिःकुशमयंचैवपालाशंचे
ध्ममेवच एतान्याहृत्यबंधूंश्चज्ञातीनाहूययत्नतः बंधूंश्चान्नेनसंपूज्यब्राह्मणांश्चविशेषतः अग्न्याधानादियत्तंत्रंकृत्वाज्योत्स्यवनीतकम्
दातुःसमक्षंगत्वातुपुत्रंदेहीतियाचयेत् दानेसमर्थोदातास्मेयेयज्ञेनेतिपंचभिः देवस्यत्वेतिमंत्रेणहस्ताभ्यांप्रतिगृह्यच अंगादंगेत्यृचं
जप्त्वाचाघ्रायशिशुमूर्धनि वस्त्रादिभिरलंकृत्यछत्रछायागतंशिशुम् नृत्यगीतैश्चवाद्यैश्चस्वस्तिशब्दैश्चसंयुतः गृहमेत्यध्ममाधायचरुं
हुत्वाविधानतः यस्त्वाहृदेतिद्वाभ्यांचतुभ्यमग्रेत्यृचैकया सोमोददादित्येताभिःप्रत्यृचंपंचभिस्तथा स्विष्टकृतादिशेषंचकृत्वाहोमं
समापयेत् ब्राह्मणानांसपिंडेषुकर्तव्यःपुत्रसंग्रहः तदलाभेसपिंडेषुअन्यत्रतुनकारयेत् क्षत्रियाणांस्वजातौवैगुरुगोत्रसमेपिवा वै
श्यानांवैश्यजातेषुशूद्राणांशूद्रजातिषु सर्वेषांचैववर्णानांजातिष्वेवनचान्यतः दौहित्रंभागिनेयंवाशूद्राणांचापिदापयेत् नैकपुत्रेणच
कर्तव्यंपुत्रदानंकदाचन बहुपुत्रेणकर्तव्यंपुत्रदानंप्रयत्नतः दक्षिणांगुरवेदद्याद्यथाशक्तिद्विजोत्तमः नृपोराष्ट्रार्द्धमेवापिवैश्योरत्नशतद्व

यम् शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलमिति पंचभिरित्यनंतरं दद्यादिति शेषः द्वाभ्यामिति द्वाभ्यामृग्भ्यां द्वे आहुती इति केचित्
तन्न वक्ष्यमाणबोधायनसूत्रैकमूलत्वप्रयुक्तलाघवलिप्सया एकस्या एवाहुतेः स्वीकर्तुमुचितत्वात् अयं च पुत्रप्रतिग्रहविधिः बह्वृचविष
यो बह्वृचगृह्यप्रतिपादकत्वाच्छौनकस्य यजुर्वेदिनां तु पुत्रप्रतिग्रहमाह बोधायनः पुत्रप्रतिग्रहं व्याख्यास्यामः शोणितशुक्रसंभवो मातृ
पितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात् प्रतिगृण्हीयाद्वा स हि संतानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृ-
ण्हीयाद्वान्यत्रानुज्ञानाद्भर्तुः प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुंडले अंगुलीयकं चाचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममित्यथ
बंधूनाहूय मध्ये राजनि चावेद्य परिषदि वागारमध्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाथ देवयजमानोल्लेखनप्रभृत्याप्र
णीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत ददामीतीतर आनोहं परिगृण्हामि धर्माय त्वा गृण्हामि संतत्यै त्वा गृण्हामीत्यथैनं वस्त्रकुंडला
भ्यामंगुलीयकेन चालंकृत्य परिधानप्रभृत्याग्निमुखान्कृत्वा पक्वान्नं जुहोति यस्त्वाहृदा कीरिणा मन्यमान इति पुरोनुवाक्यामनूच्य यस्मै त्वं सुकृ
ते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानाद्दक्षिणां ददात्येव ते वाससी परिधाय एते कुंडले एतच्चांगु-
लीयकम् यद्येवं कृत्वौरसः पुत्र उत्पद्यते तुरीयभागे प्रभवतीति ह स्माह बोधायन इति अंगुलीयकमित्यनंतरमनुषक्तेन ददातीत्यनेन कुंडलां
गुलीयदानं गृहीतं प्रतिविधीयते प्रभवत इति मातापित्रोरेव दानाधिकार इत्याशयः मध्य इति बंधुसमक्षं राजन्यावेदनमित्याशयः प्रभव

तीतितुरीयभागमेवलभतेइत्याशयः अथबव्हृचाधिकारिकःशौनकोक्तरीत्यापुत्रप्रतिग्रहप्रयोगः पूर्वेद्युःकृतोपवासः वाससीकुंडलेछत्रमु-
ष्णीषंचांगुलीयकम् आचार्यंधर्मसंयुक्तंवैष्णवंवेदपारगम् बर्हिःकुशमयंचैवमिध्मंपालाशमेवच एतान्याहृत्यबंधूंश्चज्ञातीनाहृत्ययत्नतः
पवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्यममाप्रजत्वप्रयुक्तपैतृकऋणापाकरणपुंनामनरकत्राणद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्तविधि
नापुत्रप्रतिग्रहंकरिष्ये तदंगत्वेनस्वस्तिपुण्याहवाचनमाचार्यस्यमधुपर्केणार्हणंविष्णुपूजनंबंधुवर्गब्राह्मणेभ्योन्नदानंचकरिष्ये तदादौनि-
र्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्येइतिसंकल्प्य वरणांतंकृत्वामधुपर्कांतेपितृणांकुलदेवतानांगुरूणांचप्रीत्यर्थंब्राह्मणान्बंधूंश्चभोजये-
त् ततआचार्यःदेशकालौसंकीर्त्ययजमानानुज्ञयापुत्रप्रतिग्रहांगत्वेनविहितहोमंकरिष्येइतिसंकल्प्य अग्निप्रतिष्ठापनांतंकृत्वान्वाधानं
कुर्यात् चक्षुषीआज्येनेत्यंते अत्रप्रधानमृसकृदग्निंषड्वारंसूर्यासावित्रींचवरुणाग्निंवायुंसूर्यंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादि-
अष्टाविंशतिमुष्टीन्तूष्णींनिरूप्यतावत्कृत्वःप्रोक्ष्यआज्योत्पवनांतंकृत्वाब्राह्मणैःसहदातुःसमक्षंगच्छेत् दातारंप्रत्यस्मेपुत्रंदेहीतिब्राह्मणद्वा
रयाज्ञांकारयेत् ततोदाताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपुत्रदानंकरिष्येइतिसंकल्प्य गणपतिंसंपूज्ययथा-
शक्तिचंदनादिनाप्रतिगृहीतारंसंपूज्य येयज्ञेतिपंचानांनाभानेदिष्ठोमानवऋषिःविश्वेदेवादेवताआद्याश्चतस्रस्त्रिष्टुभः पंचम्यनुष्टुप् पुत्र
दानेविनियोगः ॐ येयज्ञेनदक्षिणयासमक्ता० ऋच ५ इत्यंतेइमंपुत्रंतवपैतृकऋणापाकरणपुंनामनरकत्राणसिद्ध्यर्थंआत्मनश्चश्रीपरमे

श्वरभीत्पर्यंतुभ्यमहंसंप्रददेनममप्रतिगृण्हातुपुत्रं भवानित्यंतेप्रतिगृहीत्वहस्तेसासतंजलंक्षिपेत् ततः प्रति गृहीतादेवस्यत्वेतिमंत्रेणहस्तद्वये
नप्रतिगृह्यस्वांकेउपवेश्य अंगादंगादिति शिशुमूर्धनिआजिघ्रेत् ततोयुवंवस्त्राणीतिवस्त्रंपरिधाप्यतूष्णीमुष्णीषंबध्वाकुंकुमादिनाति
लकंकृत्वाहिरण्यरूपइत्यादिनाकुंडलाभ्यामलंकृत्यछत्रेणाच्छादितंबालंनृत्यगीतवाद्यैःस्वस्तिनोमिमीतामित्यादिमंत्रैश्चगृहमानीयहस्तौपा
दौप्रक्षाल्याचम्य अग्नेःपश्चिमतोमातुरुत्संगेस्वदक्षिणतोबालमुपवेश्यआचार्यदक्षिणतःस्वयमुपविशेत् ततआचार्योबर्हिरास्तरणाद्याघार-
भागांतंकुर्यात् ततश्चरुमवदानविधिनाऽवदाय यस्त्वाहृदाकीरिणेतिद्वयोरात्रेयोवसुश्रुतऋषिःअग्निर्देवतात्रिष्टुप्छंदः पुत्रप्रतिग्रहांगहोमे
वि० ॐ यस्त्वाहृदाकीरिणा० २ ऋक्द्वयंक्रमेणपठित्वास्वाहेतिजुहुयात् यजमानःअग्नयइदं० पुनरवदाय० तुभ्यमग्रइतिमंत्रस्यसूर्यासावित्रीसू
र्यासावित्र्यनुष्टुप् पुत्रप्रतिग्रहांगहोमे० ॐ तुभ्यमग्रेपर्यवहन्० स्वाहासूर्यासावित्र्याइदं० १ पुनरवदाय सोमोददिति पंचानांसूर्यासावित्री
ऋषिःसूर्यासावित्रीदेवता आद्येद्वेअनुष्टुभौ तृतीयाजगती चतुर्थीत्रिष्टुप् पंचम्यनुष्टुप् पुत्रप्रतिग्रहांगहोमे० ॐ सोमोददद्गंधर्वाय० ऋचः ५ पुनः
पुनरवदायपंचभिर्जुहुयात् सर्वत्रसूर्यासावित्र्याइतित्यागः ततोव्यस्तसमस्तव्याहृतिभिराज्यंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यआचार्याय
धेनुंदद्यात् दशत्रीन्वाब्राह्मणान्भोजयेत् कर्मणःसंपूर्णतांवाचयित्वाईश्वरार्पणंकुर्वीतेतिशौनकोक्तपुत्रप्रतिग्रहप्रयोगः एवंयजुर्वे-
दि कर्तृकोबोधायनोक्तरीत्याप्रयोगोबोद्धव्यः ततःप्रागसंस्कृतस्यस्वस्तिवाचनंनांदीश्राद्धादिपूर्वकंजातकर्मादिसंस्कारान्करिष्येइति

विशेषः अथदत्तकस्यविवाहाद्युपयोगिगोत्रादिनिर्णयः तत्रयश्चप्रतिग्रहीत्राजातकर्मादिभिश्चूडादिभिर्वासंस्कृतस्तदेकगोत्रः
एतमभिप्रेत्यैवगोत्ररिक्थेजनयितुर्नभजेद्दत्तिमःसुतइतिशास्त्रमपिप्रवृत्तम् एतदन्यस्तुप्रतिगृहीत्रोपनयमात्रसंस्कृतस्तदुत्तरःप्रतिग्र
हीतोपादेवरातवद्व्यामुष्यायणगोत्रएवेतिव्यवस्थाप्रागवादि तथाप्येषाव्यवस्थाअभिवादनश्राद्धादिगतगोत्रनिर्देशार्था विवाहेतुदत्तकमात्रेण-
बीजि प्रतिग्रहीत्रोःपित्रोर्गोत्रप्रवरवर्जनंकार्यम् प्रवरमंजर्यादिनिबंधेषुतन्निषेधोक्तेः इतिगोत्रनिर्णयः गौतमः ऊर्ध्वंसप्तमात्
पितृबंधुभ्योबीजिनश्च मातृबंधुभ्यःपंचमादिति उक्तंच वसुदेवांगजातानकौंतेयस्यविरुध्यतइतिवार्तिकव्याख्यावसरेन्यायसु
धाकृतादत्तकविषयमेतदित्यंगीकृत्यकुंत्याजनककुलेसाप्तपुरुषंसापिंड्यमितिव्याख्यातंतद्विषयत्वेनैवसापिंड्यंमीमांसायाम् अतः
कुलद्वयेपिसाप्तपुरुषंसापिंड्यंप्रतीयते पैठीनसिस्तु त्रीन्मातृतःपंचपितृतःसप्तपुरुषानतीत्यउद्वहेदित्याह व्याख्यातमेतदपरार्के
दत्तकादिपुत्रान्पितृपक्षतोनिवृत्तपिंडगोत्रार्षेयान्प्रत्येतदुच्यतेपंचपितृतइतीति अतश्चप्रतिग्रहीतृकुलेसाप्तपुरुषंसापिंड्यंप्रतीयतेप्रतिग्रही
तृमातृपितृककुलयोस्त्रिपुरुषंसापिंड्यमितिप्राञ्चः अथात्रव्यवस्थोक्तसापिंड्यदीपिकायांदत्तक्रीतादीनांजनकगोत्रेणोपनयनेकृतेजन
ककुलेसाप्तपुरुषंसापिंड्यंप्रतिग्रहीतृमातृपितृकुलेनिर्वाप्यपिंडलक्षणंत्रिपुरुषंसापिंड्यंप्रतिग्रहीतृगोत्रेणोपनयनेतत्कुलेसाप्तपुरुषमिति
उपनयनमात्रेकृतेपंचपुरुषं जातकर्माद्युपनयनांतेकृतेसाप्तपुरुषमिति पैठीनसीवचःसाफल्यायव्याख्येयम् नकेवलंदत्तकस्यपरि-

णयनार्थमेवैषसापिंड्योपन्यासः किंतुतत्संततेस्तत्पित्रादिकुलोत्पन्नैः सहसंबंधसंभवनिर्णयार्थमपि अन्यथापार्थस्कंभद्वयोरदत्तकयोः
संबंधासंभवशंकायाअनार्यस्कंभद्वयोरदत्तकयोःसंबंधासंभवशंकायाआचार्यकर्तृकोपन्यासस्यतदुपपत्त्यैस्कंधायांगौतमीयउपन्यासस्या
लग्नकतापत्तेः यादृशदत्तकस्ययथासापिंड्यमुक्तंतत्संततेरपितथैवतद्बोध्यम् अतएवयन्मदनपारिजातोक्तम् दत्तपुत्र्याःसुतस्यमातुःप्र
तिग्रहीतृमातुःकुलेत्रिपुरुषंसापिंड्यं दत्तकपुत्रस्कृतस्यस्वजनककुलेपंचपुरुषमितितदपिपूर्वोक्तरीत्यादत्तकविशेषसंततिविषयत्वेनव्याख्ये
यम् इतिसापिंड्यनिर्णयः दत्तकपुत्रस्यजन्ममरणयोःपूर्वापरपित्रोस्त्रिरात्रम् सपिंडानामेकाहम् यद्यपिसपिंडःपुत्रीकृतः परपूर्वास्कं
भार्यास्कंपुत्रेषुकृतकेषुच भर्तृपित्रोस्त्रिरात्रंस्यादेकाहस्तत्सपिंडगइतिमाधवीयेहारीतवचनात् बैजिकादभिसंबंधादनुरुंध्यादघंत्र्यमिति
तादृशदत्तकेनपित्रादिमरणेत्रिरात्रंकार्यम् दत्तकश्चस्वयंदत्तःकृत्रिमःक्रीतएवच सूतकेमृतकेचैवत्र्यहाशौचस्यभागिनइतिशुद्धितत्वेब्राह्मण
वचनात् सपिंडस्यपुत्रीकरणेसपिंडमरणादिनिमित्तंदत्तकस्यतन्मरणादिनिमित्तंसपिंडानांदशरात्रमेवनिर्विवादंसापिंड्यंचपूर्वोक्तरीत्याव्यवस्थि
तमाशौचहेतुः इत्याशौचनिर्णयः धनस्वामिनिमृतेतदीयपत्नीदुहित्रादिषुसत्स्वपिदत्तकपुत्रएवरिक्थंलभते द्वादशविधपुत्राभावेपत्नीदु
हितरश्चेत्यादिनापत्न्यादीनांरिक्थग्रहणाधिकारप्रतिपादनात् पश्चादुत्पन्नेऔरसेसतितुतदीयंचतुर्थांशंलभते पूर्वोदाहृतबौधायनसूत्रात्
विधानमालायांतुदत्तपुत्रेयदाजातेकदाचित्त्वौरसोभवेत् पितुर्वित्तस्यसर्वस्यभवेतांसमभागिनौ अविधानंविधानंवापरिप्राप्नोतिनंदनः

विवाहविधिनाभाजं कुर्यान्न धनभाजनं तस्मिन् जाते स्कृते दत्ते न कृते च विधानके तत्सर्वस्यैव वित्तस्य सस्वामी पितुरंजसा जातेष्वन्येषु पुत्रेषु
दत्तपुत्रपरिग्रहात् पिताचेद्विभजेद्वित्तं नैवासौ ज्येष्ठभाग्भवेदिति जाते उपनयनांतजातकर्मादिसंस्कारविशिष्टतया निष्पद्यत इत्यर्थः तादृश
संस्काराला भेत्वाहविधानमिति अविधानं संस्कारविध्यलाभः नंदनः प्रकरणाद्दत्तपुत्रः विधाने सति पूर्वश्लोकरीत्यां धनलाभमभिप्रेत्यावि-
धानपक्षे आह विधाने सति तस्मिन्नौरसे दत्तविषये संस्कारविधानेन कृते स औरसः परिग्रहात् अनंतरमिति शेषः ततश्च प्रतिग्रहीत्रो पनयनां
तसंस्कारसंस्कृतस्यौरससमानांशभागित्वं दत्तकस्य तत्कर्तृक सकलतदंतसंस्कार रहितस्य तु विवाहमात्रलाभो नान्यधनलाभः सत्यौरसे क-
तिपयसंस्कारलाभे चतुर्थांशलाभ इति व्यवस्थेति दायादनिर्णयः दत्तकपुत्र्या अपि स्वीकार उक्तविधिना कार्यः वक्ष्यामि पुत्रसंग्रहमित्या
दिगतपुत्रपदस्य पुमान्पुत्र इत्यादि वैदिकप्रयोगमूलके न ह्यतिक्रदुक्तन्यायेन पुत्रीसाधारण्यात् दानप्रतिग्रहविधिषु उद्देश्यविशेषपुंस्त्वाविव
क्षायाश्च इतिहासपुराणेषु कुंत्या दत्तकत्वोक्तेश्च पत्यभावे सारिक्थं लभते दुहितृत्वात् सतां संतोषसिद्ध्यर्थमिति दत्तकदीधितिः अकार्यं नं
तदेवेन तेन तस्य सुदेस्तकसा इति श्रीमदापदेवसूनुना अनंतदेवेन कृतसंस्कारकौस्तुभे दत्तकविधिः अथ गर्भिण्या गर्भस्रावहरणं महार्णवे
वायुपुराणे यज्ञोपवीतं कुर्वीत कांचनं तु स्वशक्तितः अत्यंतवर्णयुक्तं च राजतं चोत्तरीयकम् पलार्द्धेन तदर्द्धेन तदर्द्धेनाथवा पुनः ग्रंथि-
प्रदेशे देयं तु मौक्तिकं वज्रमेव च प्रक्षाल्य पंचगव्येन गायत्र्या ताम्रभाजने द्रोणप्रमाणं तस्मिंस्तु निक्षिपेद्दधिमध्यतः आज्यस्योपरि सं

स्थाप्यसूपवीतंस्फपूजितम् गंधपुष्पाक्षतैर्धूपैर्नैवेद्यैरपिभक्तितः ततोब्राह्मणमाहूयहोमंतत्रचकारयेत् तिलैराज्येनमधुनामिश्रैरष्टोत्तरंशत
म् तस्मैहुतवतेदेयंवस्त्राद्यैःपूजितायतु मंत्रेणानेनविधिवत्प्राङ्मुखायोपवीतकम् मंत्रः उपवीतंपरिमितंब्रह्मणाविधृतंपुरा भवनौकास्य
दानेनगर्भंसंधारयेत्यहम् धनान्यपिब्राह्मणेभ्यस्तस्मिन्कालेप्रदापयेत् अनुव्रज्यातथाकार्याप्रणिपत्यक्षमापयेत् गर्भस्त्रावकराद्दोषादेवं
कृत्वाविमुच्यतइति अत्यंतवर्णयुक्तमुत्कृष्टम् एतच्चकांचनराजताभ्यांसंबध्यते यज्ञोपवीतग्रंथौमौक्तिकंउत्तरीयग्रंथौवज्रम् गायत्र्येत्यस्यप्र
क्षाल्येत्यनेनान्वयः तस्मिन्मध्यभागेद्रोणप्रमाणंदधिनिक्षिप्यतस्यमध्येद्रोणमाज्यंनिक्षिपेत् प्रस्थमाढकंद्रोणंचखारिकाचेतिद्रोणपरिमा-
णम् तस्मिन्नाज्येशोभनमुपवीतंसोत्तरीयंविन्यस्यगंधाद्युपचारैःपूजितंकुर्यादितिशेषः आज्यस्यद्रोणपरिमाणासंभवेशक्त्यनुसारिप्रमाणं
मंत्रपूजायांगायत्र्यैव होमेतुव्याहृतयोगायत्रीवा स्त्र्यधिकारंत्वेदंकर्मेतिमहार्णवः अतःपूजांभर्ताकुर्यात् तदभावेब्राह्मणःकुर्यात् होमंतुब्रा-
ह्मणएव त्यागंभर्ता तदभावेस्त्र्येवकुर्यात् आज्यमधुमिश्रैस्तिलैरष्टोत्तरशतमाहुतयः प्रधानंपूर्वोत्तरंतंत्रंस्वगृह्योक्तंकार्यम् होमांतेब्राह्मणपू
जावस्त्रादिभिःकार्या ततोब्राह्मणायप्राङ्मुखायोदङ्मुखाधिकारिणीमंत्रेणदानंकुर्यात् विधिरितिपात्रस्यनामगोत्रोच्चारणादिगर्भस्त्रावविधा
नदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं इतिफलसंकीर्तनंपात्रेणसावित्र्यादिपाठोयथाशक्तिदक्षिणादानंचेतिप्राप्यते मंत्रोनौकादुःखतरणोपाय-
भूताभवेत्यर्थः ततोब्राह्मणेभ्योयथाशक्तिदक्षिणांदत्वोपवीतप्रतिग्रहीतुरनुव्रज्य प्रणिपातक्षमापनानिकृत्वायथाशक्तिब्राह्मणान्भोजयित्वेश्वरा

र्पणंकुर्यादिति अत्रचस्रवद्गर्भा भवेत्सातुबालकंहंतियाविषैरितिमहार्णवोदाहृतहस्त्यगौतमवचनोक्तनिदानभूतबालहत्यांकृत्वेतत्कार्यंसूर्या
रुणसंवादेस्रवद्गर्भंप्रकृत्य श्रीअरुणउवाच प्रायश्चित्तंकथं स्वामिन्सत्यंवदममाग्रतः श्रीसूर्यउवाच एकवासोविधिश्चैवकुर्याच्च
विधिवत्ततः चंद्रसूर्योपरागेतुस्वर्णधेनुंप्रदापयेत् ब्राह्मणान्भोजयेत्सम्यक्प्राजापत्यचतुष्टयम् सारस्वतजपंलक्षंदशांशहोमसंयुतम् श्रवणंह
रिवंशस्यएकचित्तेनमानद शतपत्रैःशिवंपूज्यषण्मासाद्दिवासरे कलशंताम्रमयंचैवघृतेनपरिपूरितम् दातव्यंब्राह्मणेचैवसर्वकार्यार्थसि
द्धये एवंकृतेवैनलेयगर्भोनिश्चलतांव्रजेत्इति अथानपत्यत्वहरम् शातातपः विप्ररत्नायहारीतः सोनपत्यःप्रजायते तेनकार्यंविशुद्ध्य
र्थंमहारुद्रजपादिकम् आदिपदाद्ब्राह्मणोद्वाहनहरिवंशश्रवणे मृतवत्सादिकःसर्वोविधिरत्रविधीयते दशांशहोमःकर्तव्यःपालाशेनयथा-
विधि दशांशोमहारुद्रस्य अथमृतपुत्रहरम् हंतिवैकालिकंस्कंधंत्वसंजातंचमूलजम् तेनसाजायतेवंध्यामृतवत्साचनारिकी तत्पातकवि
नाशायतथाकार्यंप्रयत्नतः सौवर्णबालकंकृत्वादद्याद्दोलासमन्वितम् अनड्वाहंततोदद्याद्वस्त्रद्वयसमन्वितम् तत्पातकविनिर्मुक्ताप‍श्चाद्भव
तिपुत्रिणी एवंगर्भस्थैर्येपिकन्यानामेवोत्पत्तौपुत्रार्थंपुत्रकामेष्टिप्रयोगः ऋतुकालात्षष्ठेदिनेभार्ययासहकृताभ्यंगोयजमानःअलंकृतः
प्राणानायम्यदेशकालौसंकीर्त्यपुत्रकामःपुत्रकामेष्टिंकरिष्येइतिसंकल्प्यतदंगस्वस्तिवाचनमातृकापूजननांदीश्राद्धानिकृत्वास्थंडिलाद्यग्नि-
प्रतिष्ठांतंकृत्वासमिद्द्वयमादायान्वाधानंकरिष्येऽस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाऽत्रप्रधानं अग्निंपंचवारं वरुणंपंचवारं

विष्णुंपृथिवींविष्णुंसोमंसूर्यांसावित्रींच एताःप्रधानदेवताः पायसद्रव्येण शषेणस्विष्टकृतमित्यादि पूर्णपात्रनिधानांतंकृत्वाश्वेतवत्सश्वेतगो-
क्षीरेणचरुंपक्त्वा आज्यभागांतंकृत्वाभार्ययान्वारब्धःप्रधानाहुतीर्जुहुयात् तत्रायंक्रमः आतेगर्भइति अग्निरैतुप्रथमइतिसूक्तद्वयस्यहिर
ण्यगर्भऋषिःक्रमेणाग्नीवरुणौदेवते अनुष्टुप्जगत्यौछंदसीचरुहोमेविनियोगः ॐ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिम् आवीरोजा
यतांपुत्रस्तेदशमास्यःस्वाहा अग्नयइदं॰१ करोमितेप्राजापत्येषागर्भोयोनिमैतुते अनूनःपूर्णोजायतामश्लोणोपिशाचधीतःस्वाहा अग्न॰२
पुमांस्तेपुत्रोनारितंपुमाननुजायताम् यानिभद्राणिबीजान्यृषभाजनयंतुनौस्वाहा अग्नय॰३ यानिभद्राणिबीजान्यृषभाजनयंतिनः तै
स्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभवस्वाहा अग्नय॰४ कामःसमृध्यतांमह्यमपराजितमेवमे यंकामंकामयेदेवतंमेवायोसमर्धयस्वाहा
अग्नयइ॰५ अग्निरैतुप्रथमोदेवतानांसोस्यैप्रजांमुंचतुमृत्युपाशात् तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात्स्वाहा वरुणाये
दं॰१ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः आशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियंस्वाहा व
रुणाये॰२ मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशंतु मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतीप्रजांसुम
नस्यमानास्वाहा वरुणाये॰३ अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघम् शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपाशंस्वाहा वरुणा॰४
देवकृतंब्राह्मणंकल्पमानंतेनहन्मियोनिषदःपिशाचान् क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तवजीवंतुपुत्राःस्वाहा वरुणाये॰५

नेजमेषइतितिसृणांविष्णुस्त्वष्टागर्भकर्त्ताऋषिः क्रमेणविष्णुपृथिवीविष्णवोदेवता अनुष्टुप्छंदः चरुहोमेवि० ॐ नेजमेषपरापत० स्वाहा वि
ष्णवइदं० १ यथेयंपृथिवीमत्यु० पृथिव्याइदं० २ विष्णोःश्रेष्ठेन० विष्णवइदं० ३ सोमोधेनुमित्यस्यराहूगणोगौतमऋषिः सोमोदेवता त्रिष्टुप्
छंदः चरुहोमे० ॐ सोमोधेनुंसोमोअर्वंत० सोमाये० १ इमांत्वमित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् चरुहोमेवि० ॐ इमांत्वमिंद्रमीढ्व०
स्वाहासूर्यासावित्र्याइदं० १ इतिपंचदशाहुतीर्हुत्वास्विष्टकृद्धोमंकृत्वा उभौ अपश्यंत्वेतिमंत्रयोः प्रजापतिऋषिः प्रजापतिर्देवतात्रिष्टुप्छंदः
चरुप्राशनेविनियो० ॐ अपश्यंत्वामनसाचेकि० १ अपश्यंत्वामनसादीध्या० २ इतिमंत्राभ्यांप्राश्याचम्य पिशंगेत्यस्यदैवोदासिः परुच्छेपऋषिः
इंद्रोदेवतागायत्रीछंदः नाभ्यालंभनेवि० ॐ पिशंगभृष्टि० १ इतिमंत्रेणनाभ्यालंभनंकुर्यातास् ततोयजमानःप्रायश्चित्तहोमंसमाप्यसवत्सो-
गांदत्वाब्राह्मणेभ्योरूवर्णादिदक्षिणांदत्वारात्रौदर्भसंस्तरणेशयीताम् ततःमनसायजमानःपंचहोतास्त्रियमुपेयादित्यादि वीरंबिभ०

इतिपुत्रकामेष्टिः अथपुंसवनकालः याज्ञवल्क्यः पुसवनस्पंदनात्पुरेति शौनकः व्यक्तेगर्भेतृतीयेतुमासेपुंसवनंभवेत् गर्भो-
व्यक्तस्तृतीयेचेच्चतुर्थेमासिवाभवेदिति बृहस्पतिः तृतीयेमासिकर्त्तव्यंगृष्टेरन्यत्रशोभनम् गृष्टेश्चतुर्थेमासेतुषष्ठेमास्यथवाष्टमइति सकृ-
त्प्रसूतागृष्टिःस्यादितित्रिकांडी जातूकर्ण्यः सीमंतेनसहाथवेति मदनरत्नेकालविधाने कुर्यात्पुंसवनंप्रसि-द्धविषयेगर्भेतृतीयेथवामासि-
स्फितनौतुषारकिरणेपुष्येथवावैष्णवे हित्वाकर्कटकं नृयुग्ममवलामन्येष्वरिक्तेतिथौस्पुष्टेनैधनधाम्निशुक्रशशभृद्दूमंत्रिणांवासरइति

सं॰कौ॰
५२

प्रसिद्धविषयेव्यक्ते तुषारकिरणश्चंद्रः स्फीततनुः पूर्णबलः तत्समयंलघुः प्रतिपत्पूर्वदर्शाहंमध्यबलः शीतगुः सितपक्षे संपूर्णबलः पूर्णः कृ
ष्णापंचमीयावदिति प्रतिपत्पूर्वायस्मिन् तेनशुक्लैकादशीप्रभृतिकृष्णपंचमीपर्यंतः कालः प्रशस्तइतिजायते वैष्णवः श्रवणः पुष्यासंभवेवैष्णवः
तृतीयेगर्भमासेतिष्येणोपोषितायाइतिगृह्यात् तिष्येणेतिप्राशनेनसंबंध्यतइतिव्याख्यानात् श्रवणासंभवेनक्षत्राण्याप्याहगर्गः कुर्यात्पुंस
वनाख्यंतुपुन्नामर्क्षेशुभेदिने पुंनामश्रवणंतिष्यःस्वातीहस्तपुनर्वसू मूलंप्रोष्ठपदंचानूराधामृगशिरोश्विनी नृयुग्मंमिथुनम् अबलांकन्याम्
अन्येषुएतत्त्रितयभिन्नलग्नेषु अत्रविशेषंबृहस्पतिः कन्यायांनप्रशंसंतिशुभदृष्टेयुतेपिन्वेति विशेषनिषेधेनान्ययोःप्रतिप्रसवोगम्यते सी
मंतेनसहानुष्ठानेकन्यायाएवनिषेधइत्यपिकालविधाने अरिक्तेतिथावितिसामान्येननिषेधेपिनवमीसर्वथैववर्ज्या रिक्ताश्चपर्वनवमींत्यक्त्वा
पुंसवनेशुभाइतिस्मृत्यंतरेनवम्याःपुनरुपादानात् नैधनधामाष्टमस्थानम् तस्मिन्शुद्धेग्रहहीने वित्बुधः पारिजातेबृहस्पतिः गुरुशुक्रबु
धेंदूनांद्रेष्काणादिवसांशकाः तेषामुदयहोराचपुंसवेशुभावहाः तथा मासप्रयुक्तकार्येषु मूढत्वंगुरुशुक्रयोः नदोषकृदितितथा वृद्धिर्दास्यं
पुंसवाद्यंप्रेतकर्मानुमासिकम् नित्यंमास्यधिकइतिद्रेष्काणोराशेस्तृतीयांशः तद्यथा मेषलग्नेतृतीयांशरूपद्रेष्काणाधीशोगुरुः तेनतस्मिन्का
र्यम् एवमूह्यम् पुंसवनेनसहानवलोभनस्यकार्यत्वात्तुल्यस्तिथ्यादिनिर्णयः अथसीमंतोन्नयनकालः याज्ञवल्क्यः षष्ठेष्टमेवासीमं
तइति आश्वलायनः चतुर्थेगर्भमासेसीमंतोन्नयनमिति बैजवापः सीमंतोन्नयनंचतुर्थेपंचमेषष्ठेवापीति अत्रिः आधानादष्टमेमा

५२

सिसीमंतोन्नयनंभवेत् नवमेमासिवाकुर्याद्यावद्गर्भविमोचनमिति बृहस्पतिः सौरेणैवचतुर्थेस्यान्मासेषष्ठेष्टमेपिवेति वसिष्ठः चतुर्थेसा
वनेमासिषष्ठेवाप्यथवाष्टमइति अथसौरसावनमानयोर्विकल्पः मदनरत्नेगार्ग्यः यदिसीमंततः पूर्वंप्रसूतास्यात्तुभामिनी तदानींपेटकेगर्भं-
स्थाप्यसंस्कारमाचरेदिति तत्रैवसत्यव्रतः स्त्रीयदाकृतसीमंताप्रसूयेतकदाचन गृहीतपुत्राविधिवत्पुनःसंस्कारमर्हतीति बृहस्पतिः पूर्वप
क्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकंविनेति कृष्णपक्षेत्रयोदश्यादित्रयमतिदुष्टमित्यर्थः पक्षच्छिद्रांचरिक्तांचविनापंचदशींशुभाः चतुर्थीचकदा
चित्स्युस्तिथयश्चशुभप्रदाइति षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः पंचदशी अमावास्या कदाचिदितिचतुर्थ्यावर्ज्यत्वंपाक्षिकमितिज्ञायते शुभसं
स्थेनिशानाथेचतुर्थीचचतुर्दशीम् पौर्णमासींप्रशंसंतिकेचित्सीमंतकर्मणीतिशास्त्रांतरात् व्यासः पुरुषग्रहवाराःस्युःशुभाःसीमंतकर्मणि म
ध्यौस्त्रीग्रहवारौतुवर्जयेत्तुनपुंसकाविति पुंग्रहाः रविभौमगुरवः स्त्रीग्रहौसोमभृगू नपुंसकौशनिबुधौ नक्षत्राण्याहबृहस्पतिः रौहिण्यैंदव
मादित्यपुष्यहस्तोत्तरात्रयम् पौष्णंचवैष्णवंचैवसीमंतेतुदशस्मृताइति ऐंदवंमृगशिरः आदित्यः पुनर्वसुः पौष्णंरेवती वैष्णवंश्रवणः जयंत-
स्तु पुंनामाश्रवणस्तिष्योहस्तश्चैवपुनर्वसुः अभिजित्प्रोष्ठपाच्चैवअनुराधातथाश्वयुक् इत्येतेषुनक्षत्रेषुकालविद्भिरस्यप्राशस्त्यमित्युक्तंयन्न
क्षत्रंतस्यनक्षत्रस्यमध्यमारूढेचंद्रमसिकर्मकुर्यात् तत्रादावंतेचपंचदशनाडिकाअग्राह्या अपनीयमध्यमास्त्रिंशन्नाडिकागृहीतव्याः अ
त्रापिशोभनेमुहूर्तेकुर्यादित्याह कारिकायामपिऋक्षस्यमध्यमेपादद्वयेकर्मेदमिष्यतइति कालविधाने सिंहालीवर्जयित्वाशुभबहुलफला

राशयोप्यंशकानिश्रेष्ठानीति अलिर्हश्चिकः इदंचकर्मसकृदेवकार्यं स्त्रीसंस्कारत्वान्नप्रतिगर्भमावर्ततइतिवृत्तिकाराद्युक्तेः यत्तुविष्णुः सीमं
तोन्नयनंकर्मनस्त्रीसंस्कारइष्यते केचिद्गर्भस्यसंस्कारात्प्रतिगर्भंप्रयुंजतइति तत्कात्यायनविषयम् सीमंतोन्नयनंकार्यंषष्ठेमास्यथवाष्टमे गर्भसं
स्कारएवायंकार्कोपाध्यायसंमतादितितदीयरेणुकाकारिकोक्तेः पुंसवनानवलोभनयोः पतिःकर्तातदभावेदेवरादिः सीमंतोन्नयनेतुस्वयमेव-
कर्त्ता अथप्रयोगः तत्राकृतगर्भाधानोद्विजायगांदत्वापुंसवनादिकुर्यात् गर्भाधानस्याकरणात्तस्यांजातस्तु दुष्यति अकृत्वागांद्विजेदत्वा
कुर्यात्पुंसवनंपतिरितिपारिजातेआश्वलायनवचनात् तत्रपूर्वेद्युः समानरूपवत्सायागोरन्यस्यावाक्षीरेणदधिसंपाद्यमाषषट्कंयवत्रयंमंडला
गारच्छायामंगारमानडुहंचर्मअजीर्णदूर्वापुंजंकुमार्याद्दृषदुपलाभ्यांपिष्टीकृतंशक्लवसनांचलबद्धंचसंपाद्यसीमंतेपिकर्तव्येऔदुंबरापक्वयु-
ग्मफलवत्स्तबकोतदभावेजयंतोत्त्यातादृशपत्रंतादृशप्रसूनानिस्तबकोवात्रिश्वेतशललीत्रीणिकुशपिंजूलानिचसंपाद्यहविष्येणकृतेकल्भो
जनयाभोजनभार्ययापरेद्युःकृतमंगलस्नानयापरिहिताहतवस्त्रयालंकृतयादक्षिणतउपविष्टयायुक्तोदेशकालकीर्तनांतेममास्यांभार्याया
मुत्पत्स्यमानगर्भस्यबैजगार्भिकदोषपरिहारपुंरूपताज्ञानोदयप्रतिहारद्वारापुंसवनमनवलोभनंचतंत्रेणकरिष्येइति पृथक्प्रयोगे संकल्पः
सीमंतोन्नयनस्यत्वेत्थम् ममास्यांभार्यायांगर्भाभिवृद्धिपरिपंथिपिशितरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षेमसकलसौभाग्य
निदानभूतमहालक्ष्मीसमावेशनद्वाराप्रतिगर्भंबीजगर्भसमुद्भवैनोनिबर्हणद्वाराचस्त्रीसंस्काररूपंसीमंतोन्नयनाख्यंकर्मकरिष्यइतिसंक

ल्यः त्रयाणांसहकरणेतु अनवलोभनमित्यंतंपूर्वसंकल्पवाक्यमुक्त्वाममास्यामित्याद्युत्तरवाक्यांतेकर्मचकरिष्येइतिब्रूयात् तदंगत्वेन
स्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये तदादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंचकरिष्ये इतिसंकल्प्य क्रमेणकुर्यात्
अनयोः पुंसवनानवलोभनकर्मणोःपुण्याहं एतेषांपुंसवनानवलोभनसीमंतोन्नयनकर्मणांपुण्याहमितियथार्थंवक्तुःप्रयोगः उक्तकर्म
भ्यांस्वस्ति उक्तकर्मभ्यःस्वस्ति ऋत्ध्यंतामित्येवंप्रत्युक्तिवाक्यम् नांदीश्राद्धेक्रतुदक्षसंज्ञकाविश्वेदेवाः पृथक्त्वेपुंसवनाद्यर्थंमौपासनंपव
मानसंज्ञंप्रतिष्ठापयेत् केवलसीमंतेत्रयाणांसहत्वेवामंगलनामानंप्रतिष्ठापयेत् अविद्यमानाग्नेःसर्वाधानिप्रभृतेरग्न्युत्पत्तिःपूर्ववत्
अस्मिन्पुंसवनानवलोभनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्येइतिद्वयोः पृथक्त्वे एषुपुंसवनानवलोभनसीमंतोन्नयनहोमेषुदे
वतापरिग्रहार्थमन्वाधानंकरिष्यइतित्रयाणांसहत्वेसीमंतस्यस्वातंत्र्येतु अस्मिन्सीमंतोन्नयनइतिचक्षुषीआज्येनेत्यंतेप्रजापतिंचरुणा-
शेषेणेतिपृथक्त्वे सहत्वेतुचरुणेत्यंतेस्वतंत्रसीमंतेचक्षुषीआज्येनेत्यंतेधातारंधातारंराकांराकांविष्णुंविष्णुंविष्णुंप्रजापतिंचाज्येनशेष
णेत्यादिपात्रासादनात्पूर्वंस्वस्यदक्षिणतःप्राग्ग्रीवास्तरणं प्रणयनांतेप्रजापतयेत्वाजुष्टंनिर्वपामीतिचतुरोमुष्टीन्निरूप्यहविरासादनांते
स्वस्यदक्षिणदेशेप्राग्ग्रीवआनडुहेचर्मणिउत्तरलोमास्तीर्णेबहिरग्न्यंतसलिलापत्नींतीर्थेनप्रविष्टामात्मानमग्निंचांतरेणानीयोपवेश्य तया
न्वारब्धआज्यभागांतंकृत्वाप्रत्यग्ग्रीवेउपविष्टायास्तस्याःक्षालितप्रसृतीकृतदक्षिणपाणावंतर्जानुस्थितेप्रसृतिमितंतद्दधिनिक्षिप्यतत्रप्रा-

गर्भंयवंतस्याश्वहृदयेनिधाय पत्नींकिंपिबसीतित्रिःपृच्छेत् सापुंसवनमितित्रिरुक्तासायवमाषंतन्निःशेषंपीत्वाबहिराचामेत् पुनरेवंद्विःकार्यम्
आचमनांतं एतत्पुंसवनम् अथपूर्वसंकल्पितंसवत्संदूर्वापिंडमादायमंडलागारच्छायायामुपविष्टायाःप्राङ्मुख्याःपत्न्याःपश्चिमतस्तिष्ठन्
वदेत् आतेगर्भोयोनिमैतुपुमान्बाणइवेषुधिम् आवीरोजायतांपुत्रस्तेदशमास्यः करोमितेप्राजापत्यमागर्भोयोनिमैतुते अनूनःपूर्णोजाय
तामश्लोणोपिशाचधीतः पुमांस्तेपुत्रोनारितंपुमाननुजायताम् यानिभद्राणिबीजान्यृषभाजनयंतुनौ यानिभद्राणिबीजान्यृषभाजनयंतिनः
तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव कामःसमृध्यतांमह्यमपराजितमेवमे यंकामंकामयेदेवतंमेवायोसमर्धयइति प्रजावत्सूक्तम् अग्नि
रैतुप्रथमोदेवतानांसोस्यैप्रजांमुंचतुमृत्युपाशात् तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् इमामग्निस्त्रायतांगार्हपत्यःप्रजाम
स्यैनयतुदीर्घमायुः अशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियम् मातेगृहेनिशिघोषउत्थादन्यत्ररुद्रुदत्यःसंविशंतु
मात्वंविकेश्युरआवधिष्ठाजीवत्पत्नीपतिलोकेविराजपश्यंतीप्रजांसुमनस्यमाना अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाद्यम् शीर्ष्णःस्रजमि
वोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपाशम् देवकृतंब्राह्मणंकल्प्यमानंतेनहन्मियोनिषदःपिशाचान् क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तव
जीवंतुपुत्राः इदंजीव पुत्रसूक्तम् वामहस्तेनतदाननमुन्नमय्यपत्न्यादक्षिणेनासापुटेस्वांगुष्ठाग्रेणमंत्रांतेदूर्वारसंतथासिंचेत् यथोदर-
पर्यंतंगच्छति ततोदेशांतरेआचांतयातयास्पृष्टस्रुवमवदानविधिनावदाय वामहस्तांल्हदिधारयन् ॐ प्रजापतयेस्वाहेतिजुहुयात् प्रजाप

तयइदं० १ यत्तेसुशीमइतिमंत्रस्यहिरण्यगर्भःप्रजापतिरनुष्टुप् भार्याहृदयालंभनेवि० ॐ यत्तेसुशीमेहृदयेहितमंतःप्रजापतौ मन्येहंमांत
द्विद्वांसंमाहंपौत्रमघन्नियामितिभार्याहृदयंपाणितलेनस्पृशेत् ततःपाणितलेनास्याहृदयंसंस्पृशेत्सति रितिशौनकोक्तेः अथ प्राग्ग्रीवेउपवि
ष्टयान्वारब्धोजुहुयात्स्रुवेण धातादधात्विति मंत्रद्वय स्यहिरण्यगर्भऋषिः धातादेवता आद्यानुष्टुप् द्वितीयात्रिष्टुप् सीमंतोन्नयनप्रधानाज्य
होमे० ॐ धाताददातुदाशुषेप्राचींजीवातुमक्षिताम् वयंदेवस्यधीमहिसुमतिंवाजिनीवतःस्वाहा धात्रइदं० १ धाताप्रजानामुतरायईशेधा
तेविश्वंभुवनंजजान धाताकृष्टीरनिमिषाभिचष्टेधात्रइत्हाव्यंघृतवज्जुहोतस्वाहा धात्रइदं० २ राकामहमितिमंत्रद्वयस्यगृत्समदोराका-
जगती सीमंतोन्नयनप्रधानाज्यहोमेवि० ॐ राकामहंसुहवांसुष्टुतीहुवे० ऋक् स्वाहा राकायाइदं० १ ॐ यास्तेराकेसुमतयःसुपेशसो० ऋक्
स्वाहा राकायाइदं० २ नेजमेषइत्यादिमंत्रत्रयस्यहिरण्यगर्भोविष्णुरनुष्टुप् सीमंतोन्नयनप्रधानाज्यहोमेवि० ॐ नेजमेषपरापत० स्वाहा वि
ष्णवइदं० १ ॐ यथेयंपृथिवी० विष्णवइदं० २ ॐ विष्णोःश्रेष्ठेन० विष्णवइदं० ३ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् सीमंतोन्नयनप्र-
धानाज्यहोमेवि० ॐ प्रजापतेनत्व० स्वाहा प्रजापतयइदं० १ शौनकजयंतमतेराकादेवत्याहुतिद्वयांतेउक्थंस्वाहेत्याहुतिरेकातदनुसार्यन्वा
धानंचकार्यम् एवंस्रुवाहुतीर्हुत्वा पत्न्याःपश्चिमतःप्राङ्मुखस्तिष्ठन् पूर्वकल्पितस्तबकद्वयेशलली पिंजूलत्रयसहितंपाणिनादाय पत्न्याः के
शललाटसंधिमारभ्यमूर्धमध्यमपर्यंतं ॐ भूर्भुवःस्वरोमितिमंत्रंप्रत्युन्नयनमावर्तयं स्त्रिश्चतुर्वासीमंतमुन्नयेत् मंत्रस्यप्रजापतिःप्रजापति

बृहती सीमंतव्यूहनेवि॰ सगोधूमामौदुंबरफलमालांतत्कंठेनिधायसामगानकुशलौवीणागाथिनौअन्योवासंशास्तिसोमंराजानंसंगायेता
मिति कुशलो सोमोनोराजावतुमानुषीः प्रजानिविष्टचक्रागंगेइतिसन्निहितनदीनामसंबुद्ध्यंतंवदंतौवीणयासामगायेताम् तदभावेअन्योसं
बुद्ध्यंतनामयुक्तंवाक्यमेवपठेतोत्रिः ततउपस्तीर्यचरोराज्यस्यावदायद्विरभिघार्यस्विष्टकृदादिहोमशेषंसमापयेत् ब्रह्मणेऋषभंदद्यात्तदभावे
सन्निहितेभ्योब्राह्मणेभ्योदद्यादिति यद्यपिवृत्तिकारादिभिरुक्तम् तथापिदद्यात्तथावृषभंविदुषेब्राह्मणायेतिशौनकोक्तेरनियमाभिप्रायंबहुव
चनम् अतः सन्निहितानांमध्येविदुषेब्राह्मणायदद्यात् ऋषभासंभवेतन्मूल्यंवृषेषट्कार्षापणकाइतिप्रसिद्धंदद्यात् शौनकप्रयोगाद्वृषभोवृ
षभोवृषकोशाच्चवृषर्षभयोरभेदात् पुंसवनसीमंतोन्नयनयोः शतंशतंअनवलोभनस्य दशप्रत्येकंदशवा त्रीन्स्त्रीन्ब्राह्मणान्भोजयेत्

इतिश्रीमदापदेवसूनुना अनंतदेवेन कृतेसंस्कारकौस्तुभेत्रयाणांसहप्रयोगः पृथक्प्रयोगेतुहृदयालंभनांतेप्रत्यग्ग्रीवाजिनएवासीन
यान्वारब्धश्चरोरेवस्विष्टकृतंहुत्वातंत्रंसमाप्यब्राह्मणान्भोजयेत् स्वतंत्रसीमंतेतुप्रागग्रीवएवासीनयान्वारब्धआज्येनैवस्विष्टकृतंहुत्वावृ
षभदानंब्राह्मणभोजनांतंकुर्यात् अत्र भुक्तवतः प्रायश्चित्तं पारिजाते धौम्यः ब्रह्मौदनेन्वसोमेचसीमंतोन्नयनेतथा जातश्राद्धेतथा
भुक्त्वाभोक्ताचांद्रायणंचरेदिति तत्रैवऋग्विधाने अराइवेजपेन्मंत्रंशतवारंनसंशयः सीमंतेचयदाभुंक्तेमुच्यतेकिल्बिषात्तदेति अत्राधा
नांगब्रह्मौदनांगभोजनमिवसीमंतांगभोजनमेवनिमित्तत्वेनविवक्षितम् अतस्तद्दिनेतद्गृहेभोक्तुः प्रायश्चित्तमितिपारिजातोक्तिः परास्ता

परिशिष्टेतु पुंसवनानवलोभने अन्ययोक्ते उक्तं तृतीये पुंसवनं चतुर्थे ऽनवलोभनं ब्रह्मणाग्निः संविदान इति षट् प्राजापत्यः स्थालीपाकस्य हुत्वाः
क्षीभ्यां तेनासिकाभ्यामिति प्रत्यृचमाज्यलेपनां गान्यभिमृशेत् व्याख्यातं सीमंतोन्नयनं प्रथमे गर्भे अनवलोभनं व्याख्यास्यामश्च न दूयं कुर्वी
तेति प्राजापत्यं पौरुषं च हिरण्यगर्भः सम वर्ततागृइति षट् प्राजापत्ये सहस्रशीर्षेति द्वितीये गुर्विण्याः कुक्षिमभिमंत्रयेताग्युष्यमिति सूक्तेन ब्राह्म-
णान् भोजयित्वा स्वस्त्ययनं वाचयीतेति द्वितीये च रो सूक्तस्य विनि॰ सूक्तं सूक्तादौ हीने पाद इति पारिभाषाया गृत्य इव तत्परिशिष्ट प्रवृत्ते ः अयं-
प्रकारश्च न भाष्य वृत्तिकारादिभिरादृतः उक्तं हि भाष्ये प्राजापत्यं प्रकृत्य उभयोः कर्मणारयं साधारणः स्थालीपाक इति जयंतकारिकादौ
च नाम्नैव होम उक्तः अतः शिष्टै रप्यनादृत इति च न तत्प्रयोगो लिख्यते इति पुंसवनानवलोभनसीमंतोन्नयनानि अथ सूतिकागृहं
पारिजाते वसिष्ठः ऐंद्रे तु विक्रमस्थानमाग्नेय्यां पचनालयः वारुण्यां भोजनगृहं नैरृत्यां सूतिकागृहमिति तत्प्रवेशकालं गर्गः रोहिण्यैंद
वपौष्णेषु स्वातीवारुणयोरपि पुनर्वसौ पुष्यहस्त धनिष्ठास्वुत्तरासु च मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् गृहे तु कूले राशौ तु रिक्ताषष्ठ्य
ष्टवर्जिते सर्वे वा ऽथ शुभाः केंद्रे पापाश्च त्रिषडायगाः शुभांशे सुभदृष्टौ तु सूतिकावेशनं शुभमिति तद्विधिः पाद्मे प्रविशेत् सूतिकासंज्ञं कृत
रसं समंततः सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः प्राक्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् विप्रपु-
ण्याहशब्देन शंखवाद्यरवेण च प्रसूता बहवस्तत्र तथा क्लेशक्षमादयः हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च ता एरंडमूलचूर्णेन सघृतेन त-

थैवताम् सुखप्रसवनार्थाय पश्चात्कार्येतुतत्क्षिपेदिति प्रसवनिर्बंधेतन्निवर्तकमृग्विधाने प्रसंदिनेकचंत्वेतांजपेद्गर्भप्रमोचनीम् इंद्रेंचम
नसाध्यायेन्नारीगर्भप्रमुंचनीति तथाविजिहीष्ववनस्पतेतदिदंव्याख्यानेस्मृतम् प्रच्यावयतुकामस्त्याच्यावयेत्तमिदंजपन् स्त्रियंगर्भप्रसू
दांवापाययेदनुमंत्रितम् उदकच्यावनेनैवगर्भोधश्च्यवतेसुखम् इति अथपुत्रजन्मनिकर्तव्यंवसिष्ठः जातमात्रकुमारस्यमुखमस्यावलो
कयेत् पिताऋणाद्विमुच्येतपुत्रस्यमुखदर्शनादिति ज्योतिर्वसिष्ठः श्रुत्वाजातंपितापुत्रंसचेलंस्नानमाचरेत् उत्तराभिमुखोभूत्वानद्यांवादेव
खातकइति अत्रासन्निधौश्रवणानंतरंस्नानं सन्निधौमूलाद्यजातस्यमुखदर्शनानंतरंस्नानमितिबोध्यम् पूर्ववाक्येमात्रपदेनजन्मानंत
रंमुखावलोकनेव्यवधाननिषेधात् एतच्चरात्रावपिकार्यम् नैमित्तिकंतुकुर्वीतस्नानंदानंचरात्रिषु पुत्रजन्मनियात्रायांशर्वर्यांदत्तमक्षयमि-
तिव्यासोक्तेः रात्रौनद्यादिगमनाशक्तंप्रत्याहसांख्यायनः दिवायदात्ततंतोयंकृत्वास्वर्णयुतंतुतत् रात्रिस्नानेतुसंप्राप्तेकुर्यादनलसंनिधाविति
आशौचांतरमध्येपुत्रजन्मनिनैमित्तिकेस्नानादावस्त्येवाधिकारः सूतकेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् कर्तुस्तात्कालिकीशुद्धिरितिप्रजा
पतिवचनात् पुत्रजन्मनिनिमित्तशुद्धेरप्यवधिंजैमिनिः यावन्नछिद्यतेनालंतावन्नाप्नोतिसूतकम् छिन्नेनालेततःपश्चात्सूतकंतुविधी-
यतइति नैमित्तिकाधिकारसंपादकसंध्यावंदनादेःपूर्णतार्थमुत्तरार्द्धम् जाबालिः जन्मनोनंतरंकार्यंजातकर्मयथाविधि दैवादतीतका-
लंचेदतीतेसूतकेभवेत् अच्छिन्ननाभिकर्तव्यंश्राद्धंवैपुत्रजन्मनि हेमश्राद्धंप्रकुर्वीतितिनैमित्तिकक्रममाहाचार्यः जातंकुमारंतंदृष्ट्वा-

स्मात्वानीयगुरून्पिता नांदीश्राद्धावसानेतुजातकर्मसमाचरेदिति जातकर्मोत्तरमपितदहःकर्त्तव्यमाहहारीतः जातेकुमारेपितॄणामामो-
दात्पुण्यंतदहस्तस्मात्तिलपूर्णानिपात्राणिसहिरण्यानि ब्राह्मणानाहूयपितृभ्यःस्वधांकुर्यात्प्राजापतयेचेति ब्राह्मे देवाश्चपितरश्चैवपुत्रेजा
तेद्विजन्मनाम् आयांतितस्मात्तदहःपुण्यंपूज्यंचसर्वदा तत्रदद्यात्सुवर्णंचभूमिंगांतुरगंरथं छत्रंचगंधमाल्यंचशयनंचासनंगृहमिति वृ
द्धयाज्ञवल्क्यः कुमारजन्मदिवसेविप्रैःकार्यःप्रतिग्रहः हिरण्यभूगवश्वादिधान्यशय्यासनादिषु तत्रसर्वंप्रतिग्राह्यंपक्वान्नंतुविवर्जयेत्
भक्षयित्वातुतन्मोहाद्द्विजश्चांद्रायणंचरेत् सूतकेतुसकुल्यानामदोषोमनुरब्रवी दिति पितुःपातित्यादौविशेषमाहाश्वलायनः पत्यौमृते
वापतितेसंन्यस्तेवाविदेशगे तद्गोत्रजेनश्रेष्ठेनकार्याःपुंसवनादयः दीक्षांतेदीक्षितोभर्त्ताजातकृत्यादिकंचरेत् पुंसवनादीनिकर्माणित्रीणि
श्रेष्ठेनकारयेत् अकृतेन्यकृतेकर्माण्यापत्सुस्वास्थ्यमागतः दानैर्ब्राह्मणवाक्यैश्चपुत्रकर्मोत्तरंचरेदिति श्रेष्ठेनेतितादृशएवप्रतिनिधिरि-
त्येवमर्थम् दीक्षितेनतुदीक्षाकालेस्वयमपिजातकर्म नकार्यं नापितत्प्रतिनिधिनान्येन किंत्ववभृथांतेविसृष्टदीक्षःस्वयमेवकुर्यादित्यर्थः
श्रेष्ठःकनिष्ठहस्तेनपुंसवनादीनिनकारयेदित्युक्त्या जातकर्मतुकारयेदितिसूच्यते अकृतइतिनिषिद्धप्रतिनिधिनाकृतमित्यकृततामापन्नं
कर्मातिक्रांतंकेनापिनिमित्तेनकंचित्कालंस्वयंकर्त्तुअसमर्थोपिनान्येनकारयेत् स्वास्थ्योत्तरंदानसहितब्राह्मणाशीर्भिःसोत्कर्षंपुत्रसंस्का
रंकुर्यादित्यर्थः महारोगार्त्तस्तुसत्यपिसामर्थ्येस्वयंजातकर्मनकुर्यात् रोगार्दितस्तुतत्कालंस्पृशन्नन्येनकारयेत् यावत्स्वास्थ्यंभवेत्ताव

न्नाचरेज्जातकक्रियामित्याश्वलायनवचनात् जातकर्मानंतरंकर्त्तव्यमाहवसिष्ठः दत्वागोभूहिरण्यादिततोलग्नंनिरीक्षयेत् लग्नमेवप्रशंसं
तिज्योतिःशास्त्रविदोजनाः अरिक्तपाणिर्दैवज्ञात्शृणुयात्पुत्रजन्मनीति ततश्चदैवज्ञोक्तदुःस्थानस्थितग्रहप्रीत्यर्थंशक्त्युचितदानानिकुर्या
त् अशक्तः संकल्पपूर्वकंजपपूजादौब्राह्मणान्नियुंजीतेति अथजातकर्मप्रयोगः पुत्रेजातमात्रेमूलज्येष्ठादौअनुत्पन्नस्यतस्यमुखं
कुलदेवताकुलवृद्धप्रणामपूर्वकंआलोक्यनद्यादावुदङ्मुखः स्नायात् तदसंभवेगृहेवात्तप्ताभिःशीताभिःस्वर्णपूताभिरद्भिःस्नायात् रात्रावन
लसन्निधौ ततोद्विराचम्यप्रागकृतसंध्यावंदनश्चेत्पूर्णसंध्योपासनंकुर्यात् अथश्वेतवस्त्रमाल्यादिभिरलंकृतःपवित्रपाणिःअकृतनालच्छे
दंअपीतस्तन्यंअन्यैरस्पृष्टंक्षालितमलंकुमारंमातुरुत्संगेप्राङ्मुखंकारयित्वास्वयंप्राङ्मुखोदेशादिकीर्तनांते अस्यकुमारस्यगर्भांबुपानजनि
तसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये तदादौस्वस्तिपुण्याहवाचनंमातृ
कापूजनंचकरिष्ये हिरण्येनजातकर्मांगभूतंपुत्रजन्मनिमित्तकंचाभ्युदयिकंतंत्रेणकरिष्ये तदादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्ये
इतिसंकल्प्यगणपतिपूजनंकुर्यात् अस्यजातकर्मणःपुण्याहंभवंतोब्रुवंत्वित्यादिप्रयोगः आन्द्धेनयुग्मब्राह्मणभोजनपर्याप्तंहिरण्यंस्वाहा न
ममेतिप्रयोगः ततोमधुसर्पिषीविषममाने मिश्रितेशिलायांनिक्षिप्ययथातयोःसुवर्णरजःसंसर्गोभवतितथासुवर्णसंघृष्यसौवर्णादि-
पात्रेसौवर्णेराजतेवापिपात्रेकांस्यमयेथवा मधुसर्पिर्निषिच्याथहिरण्येनावघर्षयेत् प्राशयेत्तंहिरण्येनकुमारंमधुसर्पिषीति आश्वलायनस्मृतौ

अत्रक्रमोविवक्षितइतिबहवः एनत्संभृत्यप्रतेददामीतिमंत्रस्यहिरण्यगर्भःसवितात्रिष्टुप् कुमारेणमधुसर्पिःप्राशनेवि॰ ॐ प्रतेददामिमधुनोघृतस्य
वेदंसवित्राप्रसूतंमघोनाम् आयुष्मान्गुप्तोदेवताभिःशतंजीवशरदोलोके अस्मिन् इतिमंत्रांतेतेनैवहिरण्येनकुमारंपाययित्वा तद्धिरण्यंप्रक्षाल्यस्व
यमाचम्यतद्धिरण्यंकुमारस्यदक्षिणकर्णेनिधाय मेधांतइतिमंत्रस्यहिरण्यगर्भःसवितासरस्वत्यश्विनावनुष्टुप् कुमारस्यदक्षिणकर्णेजपेवि॰ कर्णस
मीपेमुखंनीत्वाजपेत् मेधांतेदेवःसवितामेधांदेवीसरस्वती मेधांतेअश्विनौदेवाबाधत्तांपुष्करस्रजाविति हिरण्यंसव्यकर्णेनिधायतथैव-
नामृचंजपित्वाशिशोरंसौदक्षिणेनपाणिनायुगपदभिमृशेत् ॐ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव वेदोवैपुत्रनामासिसजीवशरदःश
तं इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् कुमारांसाभिमर्शनेवि॰ ॐ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे पोषंरयीणामरिष्टिंतनू-
नांस्वाद्मानंवाचःसुदिनत्वमन्हाम् अस्मेप्रयंधीत्यांगिरसोघोरइंद्रस्त्रिष्टुप् कुमारांसाभिमर्शनेवि॰ ॐ अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायो-
विश्ववारस्यभूरेः अस्मेशतंशरदोजीवसेधा अस्मेवीरान्छश्वतइंद्रशिप्रिन् ततोरक्षायुरभिहृत्यर्थं अंगादंगात्संभवसिहृदयादधिजायसे आ
त्मावैपुत्रनामासिसजीवशरदःशतम् इतिमूर्धानंत्रिराजिघ्रेत् इतिबहवःपारिजातोदाहृतंरक्षायुषोभिहृत्यर्थमाजिघ्रति पितासुतंतावन्नाम-
स्मरेत् तस्यतंमाताप्यथपाययेदिति आचार्यवचोनुसरंतः वृत्तिकृज्जयंतादयस्तु प्रवासादागनस्यैवसूत्रानुसारेणत्रिराघ्राणमित्याहुः
तत्रेत्थं प्रवासादेत्यगृहद्वारिस्थित्वागृहमवेक्षेतगृहान्माबिभीतेति अथप्रविशेद्गृहानहंसुमनसःप्रपद्यइति अथशिवंशग्ममितिमंत्रंसकृदुक्त्वा

त्रिरनुवीक्षमाणः मपद्यद्भूतात्वमनोनेकपुत्रश्चेज्ज्येष्ठानुपूर्व्येणशिरःसर्वतोगृहीत्वात्रिराघ्रायजपेत् अंगादंगादितिमंत्रं प्रतिपुत्रंशिरोग्रहणादिज
पांतावृत्तिः एकपुत्रःसकृदेवजपांतंकुर्यात् पूर्वमतानुसारेणजातकर्मांतेपिक्रियमाणघ्राणमित्थमेवशिरोग्रहणादिजपांतंकर्तुमुचितं ततोनानाना-
मभ्योभूयसींदक्षिणांपूर्वोक्तदेयांतराणिचदत्वारिक्तपाणिर्देवज्ञपूजनपूर्वकंजन्मलग्नगतग्रहावधारणंकृत्वाप्रतिकूलग्रहानुकूल्यसित्यर्थंविशिष्ट
दानानिकुर्यात् जपादिकर्मणिवाहूतब्राह्मणान्नियुज्यनालछेदंकारयित्वाहिरण्योदकेनमातुर्दक्षिणस्तनंप्रक्षाल्यमात्राकुमारंपाययेत् इमांकु
मारोजरांधयतुदीर्घमायुःप्रजीवसे अस्यैस्तनोप्रयुंजानाआयुर्वर्चोयशोबलमिति केनापिब्राह्मणेनपठितमंत्रेण तमर्बंतमितिब्राह्मणाआशी-
र्वादमंत्रंवदेयुः गृह्यपरिशिष्टेतु अथजातकर्मपुत्रेजातेपुरान्यैरालंभादग्निरिंद्रःप्रजापतिर्विश्वेदेवाब्रह्मेत्यनादेशदेवताहुत्वाप्राक्स्विष्टकृतः
सर्पिर्मधुप्राशनादिकुर्यादिति परिशिष्टांतरेतु कुमारस्यतुजातस्यअरणींषोडशांगुलाम् आहृत्यचोत्तरामर्णींताभ्यामग्निंतुमंथयेत् जुहुयात्
जातकर्मादिपित्र्येऔपासनेपिवा तस्मिन्कुमारकर्माणिविवाहांतानिकारयेत् सगृह्यश्चातऊर्ध्वंस्याद्विधिनानेनसंस्कृतइत्युक्तम् तस्मिन्मंथ
नीसन्ने अपिवेत्यस्योत्तरार्द्धेनान्वयः होमपक्षेनांदीश्राद्धांतेजातकर्मांगभूतंहोमंकरिष्येइतिसंकल्प्यारणिपरिग्रहपूर्वकंमथितमग्निंलौकि
कमग्निंवाव्याहृतिभिःप्रतिष्ठाप्यास्यान्वाधानेचक्षुषीआज्येनेत्यंतेग्निमिंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणमितिप्रधानदेवताआज्येन शेषे-
णस्विष्टकृतमित्यादिआज्यभागांतंकृत्वास्रुवेणाग्नयेस्वाहेत्येवंपंचाहुतीर्हुत्वामधुसर्पिःप्राशनादिअंसाभिमर्शनांतंमूर्धाघ्राणांतंवाकृत्वा

स्विष्टकृदादिकुर्यादितिक्रमः कुमार्या अपि एतज्जातकर्मामंत्रकंकार्यम् आवृतैवकुमार्याइतिसूत्रात् तूष्णीमेताःक्रियाःस्त्रीणांविवाह-
स्तुसमंत्रकइतिस्मृतेश्चेतिकौस्तुभेजातकर्मप्रयोगः अथजन्मदेवतानांपूजनादिव्यासः सूतिकावासनिलयाजन्मदानामदेवताः तासां
योगनिमित्तात्तुसुद्भिर्जन्मानिकीर्तितेति जन्मनिमित्ताचाशौचेसत्यपीत्यर्थः प्रथमेहनिषष्ठेवादशमेचैवसर्वदा त्रिष्वाशौचंनकुर्वीतसूत-
केपुत्रजन्मनीति चकारात्पंचमाष्टमयोरपि तत्रप्रथमेनैमित्तिकश्राद्धादौ दशमेबलिदानान्नदानयोः इतरत्रतुजन्मदेवतापूजादौ बलिदानं
तुदशमेत्यन्नदानंप्रशस्यतइति अन्नदानंचसगोत्रेभ्यः अथपूजाप्रयोगः पंचमादिरात्रेःप्रथमयामेकुमारस्यपित्रादिरानमनादिदेशका
लसंकीर्तनांतेऽस्यबालस्यसमातृकस्यायुरारोग्यसकलारिष्टशांतिद्वाराश्रीपरमे॰त्यर्थंस्कंदस्यराकादीनांजन्मदानांजीवंतिकायाश्चपूजनंकरिष्ये
तदादौविघ्नेशपूजनंकरिष्येइतिसंकल्प्यगणेशपूजांषोडशोपचारैःकृत्वाप्रार्थयेत् लंबोदरमहाभागसर्वोपद्रवनाशन त्वत्प्रसादादविघ्नेश
चिरंजीवतुबालकइति ततःकुड्यादिलिखितप्रतिमासुतंदुलपुंजेषुवाजन्मदाः जीवंत्यपरनाम्नीं षष्ठीं स्कंदंशाकांसिनीवालीं कुहूं खड्गादिषु
भगवतींचषोडशोपचारैःपूजयेत् जन्मदाभ्योनमइतिनाममंत्रेणजन्मदानामावाहनादि आयाहिवरदेदेविमहाषष्ठीतिविश्रुते शक्तिभिःस
हबालंमेरक्षजागरवासरे इतिषष्ठ्यावाहनम् शक्तिस्त्वंसर्वदेवानांलोकानांहितकारिणी मातर्बालमिमंरक्षमहाषष्ठीनमोस्तुते इतिचा
पराणांतस्यैसमर्पणम् क्षेत्रपालनमस्तुभ्यंसर्वशांतिफलप्रद बालस्यविघ्ननाशार्थंगृहाणेमंबलिंशुभम् क्षेत्रपालबलिंदद्याज्जीवंतिप्री

त्यर्थंबलिंदत्वा भूतप्रेतपिशाचाद्यागंधर्वारक्षसांगणाः शुभंकुर्वंतुतेसर्वेममगृण्हंत्विमंबलिम् नवग्रहबलीन्दद्यात् ततस्तस्याःप्रार्थना जननीसर्वभूतानांबालानांचविशेषतःनारायणीस्वरूपेणबालंमेरक्षसर्वदा भूतप्रेतपिशाचेभ्योडाकिनीयोगिनीषुच मातेवरक्षबालंमेश्वापदेपन्नगेषुच गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा तथाममाप्ययंबालःषष्ठिकेरक्ष्यतांनमइति उक्तदिनेषुपूजितदेवताप्रीत्यर्थंब्राह्मणेभ्योयथाचारंतांबूलंदक्षिणांदद्यात् पक्वान्नभिन्नदानप्रतिग्रहयोर्नदोषः इतिजन्मदादिपूजनं अथाशौचकर्तव्यनिर्णयः भारद्वाजः सूतकेमृतकेकुर्यात्प्राणायाममंत्रकम् तथामार्जनमंत्रांस्तुमनसोच्चार्यमार्जयेत् गायत्रींसम्यगुच्चार्यसूर्यायार्घ्यंनिवेदयेत् मार्जनंतुनवाकार्यमुपस्थानंनचैवहीति पैठीनसिः सूतकेसावित्र्याजलंप्रक्षिप्यप्रदक्षिणंकृत्वासूर्यंध्यायन्नमस्कुर्यादिति प्राप्तायाःसावित्र्याःपुनर्वचनंस्पष्टोच्चारणार्थम् विष्णुः आशौचेहोमदानप्रतिग्रहस्वाध्यायानिवर्तंते नाशौचेकस्यचिदन्नमश्नीयादिति अत्रहोमोवैश्वदेवाख्यः पंचयज्ञविधानंतुनकुर्यान्मृतिजन्मनोरितिस्मृत्यंतरात् नतुअग्निहोत्रोपासनाख्यः वैतानोपासनाःकार्याःक्रियाश्चश्रुतिचोदिताइतियाज्ञवल्क्योक्तेः कर्मवैतानिकंकार्यंस्नानोपस्पर्शनात्त्वयं इतिहारीतोक्तेश्च वैतानिकग्रहणमौपासनहोमोपलक्षणार्थम् तस्यापिश्रौतत्वेनमिताक्षरोक्तेः स्नानाचमनेचतात्कालिके अग्निहोत्रस्यहोमार्थंशुद्धिस्तात्कालिकीभवेदितिगोभिलोक्तेः स्थालीपाकपिंडपितृयज्ञादिस्मार्ततु आशौचेप्यन्यद्वाराकारयेत् नत्यजेन्नापिस्वयंकुर्यात् सूतकेतुसमुत्पन्नेस्मार्तंकर्मकथंभवेत् पिंडयज्ञंचरुंहोमंसगोत्रेणकारयेत् इति एतच्चप्रथमारंभोत्तरं

होमऔपासनहोमः सगोत्रेणापिकारणीयइत्याशयेनतदुक्तिः नतुतत्रापिनियमः अग्निहोत्रतुल्यत्वात् अन्येतुस्थालीपाकादिवत्औपा-
सनहोमेप्यन्यकर्तृत्वनियमंमन्यंते काम्यस्यापिप्रतिप्रसवंपुलस्त्यः सद्यःशौचमित्यनुवृत्तौ सान्निहित्यमुपस्पृश्यराहुग्रस्तेदिवाकरे सत्र
धर्मप्रवृत्तस्यदानकर्मफलैषिणइतिसन्निहिततीर्थेस्नात्वाराहूपरागेकाम्यदानंकुर्यात् तथानसप्रवृत्तोपिइतिव्याख्यातंपारिजाते तथाबृहस्प
तिः कन्याविवाहेसंक्रांतौसूतकंनकदाचनेति जमदग्निः सूतकेमृतकेवापिजान्हव्याःसलिलेस्थितः नाभिमात्रेजलेस्थित्वाकुर्याद्ध्यानजपा-
दिकमिति एतदुभयंकाम्यविषयमपीत्यपितत्रैवोक्तम् अथसूतिकाशुद्धिः द्विजातेःसूतिकायास्याद्दशाहेनतुशुध्यति त्रयोदशेन्हि
संप्राप्तेशुद्धाशुध्यत्यसंशयमिति अशुद्धाशूद्रा अस्पृश्यनिवृत्तिरत्रोच्यते कर्मानधिकारस्तु तत्तद्वर्णोचिताशौचांतेसर्वेषांनिवर्तते द्विजा
तिस्त्रीणांतुपुत्रप्रसूनांविंशतिरात्रांतेकन्याप्रसूनांतुमासांतइतिसंक्षेपः इत्याशौचकर्तव्यादिनिर्णयः अथजननशांतयः तत्रादौगोप्र
सक्लच्यते गर्गः पित्रारिष्टेस्वतारिष्टेमात्ररिष्टेतथैवच प्रायश्चित्तंततःकुर्यात्तत्तद्दोषस्यशांतये तादृशनक्षत्रोत्पत्त्यासूचितेपित्राद्यरिष्टेतत्त
द्दोषशांत्यैतत्तत्प्रायश्चित्तंकुर्यादित्यर्थः पूषाश्विनीगुरौसार्पमघाचित्रेंद्रमूलभे एषुऋक्षेषुजातस्यकुर्याद्गोजननंतथा जन्मर्क्षेवात्रिजन्मर्क्षेशुभ
भवारेशुभेदिने कृत्वाभ्यंगादिकंसर्वंगृहालंकारपूर्वकम् गोमयेनोपलिप्याथगृहस्येशानभागके पंकजंकर्णिकायुक्तंरजोभिःश्वेतवर्णकैः
व्रीहिंस्तत्रविनिक्षिप्ययथावित्तानुसारतः नवशूर्पेतुतन्मध्येरक्तवस्त्रंप्रसारयेत् स्थापयित्वाशिशुंतत्रपुनःसूत्रेणवेष्टयेत् प्राङ्मुखंतमवाप्य

दंतिलगर्भगतंशिशुकम् गोमुखंदर्शयित्वातुपुनर्जातंतुगोमुखात् विष्णुर्योनिमितिसूक्तेनगव्येनस्नापयेच्छिशुकम् गवामंगेषुमंत्रेणगवामंगेषुसं
स्पर्शेत् विष्णोःश्रेष्ठेनमंत्रेणगोप्रसूतंतुबालकम् आचार्यस्तंसमादायपश्चान्मात्रेददेत्तदा मातांजघन्यभागस्थांशिशुकमानीयतन्मुखात् ततःपित्रे
तदाददद्यात्ततोमात्रेप्रदापयेत् वस्त्रेनवंचसंस्थाप्यपुत्रस्यमुखमीक्षयेत् गोमूत्रंगोमयंक्षीरंदधिसर्पिश्चसंयुतम् आपोहिष्ठादिभिर्मंत्रैरभिषिंचे
ततःशिशुम् मूर्ध्निचाघ्रायतंपुत्रंतन्मंत्रेणतदापिता अंगादंगात्संभवसित्हृदयादधिजायसे आत्मावैपुत्रनामासिसंजीवशरदःशतमिति मूर्ध
निचावघ्रायतंशिशुंसंस्थापयेत्ततःपुण्याहंवाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः दारिद्र्यायार्थविप्रायतांगामभ्यर्च्यदापयेत् गोवस्त्रस्वर्णधान्यानिदद्या
दर्कादितःक्रमात् यथाशक्तिधनंदद्याद्ब्राह्मणेभ्यस्तदापिता ततोहोमंप्रकुर्वीतस्वस्वशाखोक्तमार्गतः उल्लेखनंततःकुर्यादाज्यभागांतमेवच हो
मस्यैशानदिग्भागेधान्योपरिशुभंघटम् पंचगव्यंघटेस्थाप्यतिलांस्तत्रविनिक्षिपेत् क्षीरद्रुमकषायांश्चपंचरत्नानिनिक्षिपेत् वस्त्रयुग्मानि-
संछाद्यगंधादिभिरथार्चयेत् विष्णुंवरुणमभ्यर्च्यप्रतिमांचविधानतः प्रतिमांयक्ष्मणः अग्रेतद्देवत्ये होमविधानात् चकाराच्चेतिकेचित्
तन्न विष्ण्वादिपूजायांप्रतिनियमसंभवे अपूर्वपूजांतरविधिकल्पनस्यान्याय्यत्वात् चकारस्यविधानशब्दोक्ततत्तद्दुचितेतिकर्त्तव्यनिरूपित
समुच्चयार्थत्वात् यतइंद्रादिभिर्मंत्रैःकुंभंस्पृष्ट्वाभिमंत्रयेत् दधिमध्वाज्ययुक्तेनहोमंकुर्याद्विधानतःआपोहिष्ठेतितिसृभिरप्सुमेसोमइत्य-
य तद्विष्णोःपरमंपदमक्षीभ्यांतेतिसूक्ततः ऋग्भिराभिःप्रत्यृचंचाष्टाविंशतिसंख्यया अशक्तश्चाऽष्टसंख्यंवादधिमध्वाज्यसंयुतम्

आदित्यादिग्रहाणांचहोमंकुर्यात्समंत्रकम् इतिगोप्रसवविधिः अथप्रयोगः बालस्यजन्मर्क्षेतदारभ्यगणनेनदशमेकोनविंशयोर्वारनक्षत्र
योस्तदसंभवेदेवनक्षत्रादियुक्तेशुभदिनेवाकृताभ्यंगस्नानोगृहमुपलेपनादिनालंकृत्यसभार्योऽस्यबालकस्याशुकदुष्टकालोत्पत्तिसूचितारिष्टनि
वृत्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगोमुखप्रसवाख्यांशांतिंकरिष्यइतिसंकल्प्यतदंगत्वेनगणेशपूजांकरिष्येइतिसंकल्प्यतंसंपूज्याचार्यवरणंतत्पूजनं
चकुर्यात् आचार्योयदत्रसंस्थितमितिसर्षपविकिरणंशुचीवइतिपंचगव्येनापोहिष्ठेत्यद्भिश्चदेशप्रोक्षणंस्वस्त्ययनंतार्क्ष्यमितिप्रार्थनंचविधाय
गृहस्येशानभागेगोमयेनोपलिप्यश्वेतरजोभिःकर्णिकायुक्तंपंकजंकृत्वातत्रव्रीहीन्निक्षिप्यतेषुशूर्पंतस्मिन्रक्तवस्त्रंप्रसारितंतत्रतिलविकिर
णंचकृत्वाप्राङ्मुखमवाक्पादंशिशुंनिधायसशिशुंशूर्पंसूत्रेणवेष्टयित्वातस्मिन्गोमुखसान्निध्यंकृत्वाविष्णुर्योनिमितिसूक्तस्यत्वष्टाविष्णुरनु-
ष्टुप् सूक्तेनचिंतनंकृत्वातेनैवावृत्त्यापंचगव्येनशिशुंस्नापयित्वा गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रचे
तिगोःसर्वांगेषुवामांगेष्वेववास्पृशेत् ततआचार्योविष्णोःश्रेष्ठेनेतिशिशुंगृहीत्वामात्रेदद्यात् मातातुबालमादायगोमुखसमीपेबालंनीत्वापु-
नरादायगोपुच्छदेशेपित्रेदद्यात्ततआचार्यःपितृहस्तेनमात्रेदापयेत् नवेवस्त्रेशिशुंस्थाप्याच्छादनमपसार्य्यपुत्रमुखेक्षणंकुर्यात् ततःपंच
गव्येनाचार्यःशिशुंप्रोक्षयेत् आपोहिष्ठेतितिसृभिरासांसिंधुद्वीपआंबरीषआपोगायत्री अभिषेकेवि० ॐ आपोहिष्ठामयोभुवः० ऋचः३
ततःपिताहस्तद्वयेनपरिग्रहणपूर्वकंअंगादंगादितिमंत्रेणशिशोर्मूर्धनित्रिरवघ्रायस्थानेशिशुंस्थापनंकृत्वा शाखाध्यायिभिःस्वशाखोक्त-

विधिना पुण्याहवाचनं कुर्यात् ततआचार्यो गौर्दरिद्रस्य ब्राह्मणस्य पूजनपूर्वकं तस्मै तद्दानं विधिना कारयेत् ततोयजमानोवस्त्रस्वर्णधान्यानियथाशक्त्यार्कादिप्रीत्यर्थं आचार्यायदत्वान्येभ्योब्राह्मणेभ्योभूयसीं दक्षिणां दद्यात् ततआचार्यः गोमुखप्रसवशांतिहोमं करिष्ये इति संकल्प्य स्थंडिलाद्यग्निप्रतिष्ठापनांते ऽर्कादिग्रहाणामावाहनं कृत्वान्वाधानं कुर्यात् चक्षुषी आज्येनेत्यंते अत्र प्रधानं अपः द्वादशोत्तरसंख्याभिर्दधिमध्वाज्याहुतिभिर्द्वात्रिंशत्संख्याभिर्वा विष्णुं अष्टाविंशतिसंख्याभिर्दधिभिः अष्टाभिर्वा यक्ष्मग्रहणं अष्टषष्ठ्यधिकशतसंख्याभिर्दधिभिः अष्टचत्वारिंशत्संख्याभिर्वा अर्कादीन् प्रत्येकं अष्टाविंशतिसंख्याभिर्दधिभिः प्रत्येकमष्टाभिर्वा शेषेणेत्याद्याज्यभागांते स्थंडिलस्यैशानदिशि ग्रहपीठोत्तरतो मही द्यौरित्यादि विधिना धान्योपरि घटस्थापनं कृत्वा तस्मिन् पंचगव्यं तिलान् क्षीरद्रुमकषायान् पंचरत्नानि क्रमेण निःक्षिप्य वस्त्रयुग्मेन संछाद्य गंधपुष्पादिभिः कलशमभ्यर्च्य कृताग्न्युत्तारणप्रतिमयोर्विष्णुवरुणौ पूजयेत् तद्विष्णोरिति मेधातिथिर्विष्णुर्गायत्री तत्त्वायामि शुनःशेपो वरुणस्त्रिष्टुप् गोप्रसवप्रधानपूजने वि॰ ॐ इदं विष्णुर्विच॰ ऋक् ॐ तत्त्वायामि ब्रह्मणा॰ ऋक् पूजांते कुंभं स्पृष्ट्वाभिमंत्रयेत् यतइंद्रेति षण्णां भर्ग इंद्रो बृहती कुंभाभिमंत्रणे वि॰ ॐ यतइंद्र भयामहे॰ ऋचः ६ ततः आचार्यः स्रुवेण दधिमध्वाज्यहोमं कुर्यात् आपोहिष्ठेति तिसृणां सिंधुद्वीप आपो गायत्री गोप्रसवप्रधानहोमे॰ सत्यपि वरुणहोमस्य वारुणत्वे ऽद्भ्य इत्येव त्यागः पार्वणहोमे पूर्णमासायेदमितिवत् अपक्रमे॰ ऋष्यादिपूर्ववत् अतएवानुष्टुभो ग्रहणं तद्विष्णोरिति मेधातिथिर्विष्णुर्गायत्री गोप्रसवप्रधानहोमे॰ ॐ तद्विष्णोः॰ विष्णावइदं॰ अक्षीभ्यांतइतिष

ण्णां विव्रहायक्ष्महात्रुष्टुप् गोप्रसवप्र० ०ॐ अक्षीभ्यांतेनासिकाभ्यां०१ग्रीवाभ्यस्त०२ आंत्रेभ्यस्ते०३ ऊरुभ्यांते०४ मेहनाद्वनं०५ अंगादंगा
ल्लो०६ यक्ष्म हणइद० ततःआकृष्णेनेत्यादिभिर्दध्यादिहोमः सवित्रेसोमायेदमितित्यागः सर्वत्रप्रत्यृचं अष्टाविंशतिरष्टौवा हुतयः प्रणी
ताप्रणयनसंस्थाजपांते परिस्तरणविसर्जनादि आचार्यायथाशक्तिदक्षिणांदत्वास्थापितदेवतानामुत्तरपूजाविसर्जनांते तत्प्रतिमां आचा
र्यहस्तेप्रतिपाद्याग्निंसंपूज्यविभूतिधारणांतेगच्छगच्छेतितंविसृज्य दशत्रीन्वाब्राह्मणान्भोजयेत्कर्मणःसंपूर्णतांवाचयित्वेश्वरार्पणंकुर्यात्
इतिगोप्रसवप्रयोगः अथकृष्णचतुर्दशीजननशांतिः गर्गः कृष्णपक्षेचतुर्दश्यांप्रसूतेःषड्विधंफलं चतुर्दशींचषड्भागांकुर्यादादौशुभं-
स्मृतम् द्वितीयेपितरंहंतितृतीयेमातरंतथा चतुर्थेमातुलंहंतिपंचमेवंशनाशनम् षष्ठेतुधनहानिःस्यादात्मनोवंशनाशनम् तस्मात्सर्वप्र
यत्नेनशांतिंकुर्याद्विधानतः आचार्यंवरयेद्धीमान्पुत्रदारसमन्वितम् ब्राह्मणानृत्विजश्चैवस्वस्तिवाचनपूर्वकम् रुद्राधिदेवतातस्याःक
र्षमात्रसुवर्णतः तदर्धार्धेनवाकुर्याद्वित्तशाठ्यविवर्जितः प्रतिमांकारयेच्छंभोःसर्वलक्षणसंयुताम् वृषभेचसमासीनांवरदांशूलपाणि
नीम् शुद्धस्फटिकसंकाशांश्वेतमाल्यांबरान्विताम् त्र्यंबकेनमंत्रेण पूजांकुर्याद्विधानतः स्थापयेच्चतुरःकुंभांश्चतुर्दिक्षुयथाक्रमम् पुण्यती-
र्थजलोपेतान्धान्यस्योपरिविन्यसेत् तन्मध्येस्थापयेत्कुंभंशतच्छिद्रसमन्वितम् पंचमृत्संचरत्नानिपंचत्वक्पंचपल्लवान् पंचधान्यंसुवर्णंचतत्त-
न्मंत्रैर्विनिक्षिपेत् शतौषधानिनिक्षिप्यश्वेतवस्त्रेश्चवेष्टयेत् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः

आवाहयेद्वारुणैर्मंत्रैरनेनचविधानतः इमंमेवरुणेत्यनयातत्त्वायामीत्यृचानथा त्वंनोअग्नइत्यनयासत्वन्नइतिमंत्रतः आग्नेयकुंभमारभ्यपूजांकु र्याद्यथाक्रमात् आनोभद्रारव्यसूक्तंच भद्राअग्नेश्चसूक्तकम् जप्त्वापुरुषसूक्तंचकद्रुद्रेतिक्रमाज्जपेत् ईश्वरस्याभिषेकंच ग्रहपूजांचकारयेत् ई- श्वरस्यरुद्रस्य पूजाकर्मसमाप्य निर्वर्त्यहोमंकुर्याद्विधानतः ग्रहस्येशानदिग्भागेकुंडंकुर्याद्विधानतः विस्तारायामखातंच अरत्निद्वयसंमितम् कुंडकंठंपरित्यज्य समंताद्द्व्यंगुलंक्रमात् मेखलोच्छ्रायविस्तारौ चतुस्त्रिद्व्यंगुलंक्रमात् पश्चिमेमध्यभागेतुयोनिंकुर्याद्विधानतः एवंक्रमेणहो तव्यम् समिदाज्यचरूंश्चैवतिलमाषांश्चसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशमी‍ः अष्टोत्तरसहस्रंवा अष्टोत्तरशतंतुवा अष्टाविंश तिर्मंतेभ्यहोमंकुर्यात्पृथक्पृथक् त्र्यंबकेनमंत्रेणतिलान्व्याहृतिभिःक्रमात् ग्रहाणांचैवहोतव्या अस्मदुक्तविधानतः एवंक्रमेणहोतव्यंहो- मशेषंसमापयेत् सर्वालंकारयुक्तानांत्रयाणामभिषेचनम् त्रयाणांमातृपितृबालकानाम् चतुर्भिःकलशैरद्भिर्ब्रह्मकुंभसमन्वितम् धौतां बराणिधृत्वाथकुर्यादाज्यावलोकनम् पूर्णाहुतिंचजुहुयाद्यजमानःसमाहितः तत्सर्वंपरयाभक्त्याईश्वरायनिवेदयेत् सर्वालंकारसंयुक्तां सवत्सांगांपयस्विनीम् प्रतिमांवस्त्रयुग्मंच आचार्यायनिवेदयेत् ईश्वरप्रीतयेशक्त्याकुर्याद्ब्राह्मणभोजनम् अन्येषांचैवसर्वेषांकुर्याद्ब्रा- ह्मणभोजनं तस्मादनेनविधिनावित्तशाठ्यविवर्जितः एवंयःकुरुतेशांतिंसर्वपापैःप्रमुच्यते सर्वान्कामानवाप्नोतिस्थिरजीवीसुखीभवेत् इति अथकृष्णचतुर्दशीजननशांतिप्रयोगः देशकालौसंकीर्त्य अस्यशिशोःकृष्णचतुर्दश्यांअमुकांशजननसूचितसर्वारिष्टनिरसन

द्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां कृष्णचतुर्दशीजननशांतिं करिष्ये तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं आचार्यऋत्विग्वरणं च
करिष्ये वृतानां पूजनं अग्न्युत्तारणं आचार्यः कर्म करिष्ये इति संकल्प्य यदत्र संस्थितमित्यादि स्वस्त्ययनं तार्क्ष्यमित्यंते स्थंडिल पूर्वभागे
मही द्यौरित्यादिमंत्रावृत्त्या पदार्थानुसमयेन मध्ये शतच्छिद्रं तस्य आग्नेयादिविदिक्षु चतुरः कलशांश्च स्थाप्य शतच्छिद्रे स्योना पृथिवी पंचमृ
दः अश्वत्थे व इति पंचपल्लवान् सहिरत्नानीति पंचरत्नानि रुबतिर्भीमो वृषभस्तविष्ययेति पंचत्वचः ओषधयः समिति पंचधान्यानि
हिरण्यरूप इति सुवर्णं या ओषधीरिति सर्वौषधीः शतावरीं निक्षिप्य युवासुवासा इति वस्त्रेः संवेष्ट्य पूर्णादर्वीति पूर्णपात्रनिधानं ततो रुद्र
प्रतिमां कर्षतदर्धतदर्धान्यतरपरिमितहेमनिर्मितां वराभयांकितहस्तद्वयां वृषभारूढां स्थापयित्वा त्र्यंबकं वसिष्ठो रुद्रोनुष्टुप् रुद्रपूजने
विनि० ॐ त्र्यंबकं यजामहे० ऋक् १ शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरावृतम् ध्यात्वा एकादशिन्यभिषेकघटितोपचारैः रुद्रं संपूज्य आग्ने
य्यादिचतुर्षु कलशेषु गंधद्वारामिति गंधम् ओषधय इति यवान् अश्वत्थे व इति पंचपल्लवान् कांडात्कांडादिति दूर्वाः सहिरत्नानीति पंचरत्नानि हिर
ण्यरूप इति हिरण्यं याः फलिनीरिति फलम् युवासुवासा इति वस्त्रवेष्टनं पूर्णादर्वीति पूर्णपात्रनिधानं एतावत्कांडानुसमयेन कृत्वा इमं मे वरु
ण इति सर्वेषु समुद्रा इति च समुद्रादिसहितं वरुणमावाहयेत् इमं मे वरुणः शुनःशेपो वरुणो गायत्री वरुणावाहने वि० ॐ इमं मे वरुण० समु
द्रादिसहितं वरुणं संपूज्य उत्तरकलशेष्वपि समुद्रादिसहितवरुणपूजने क्रमेण तत्त्वायामि त्वं नो अग्ने० स त्वं नो अग्ने० इत्यादयो मंत्राः

तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॐ तत्त्वायामि॰ ऋक्१त्वंनोअग्नेइत्यस्यगौतमोवामदेवो ग्नीवरुणौत्रिष्टुप् पूजनेवि॰ ॐ त्वंनोअग्ने॰ ऋक् १
सत्वंनोअग्नइत्यस्यवामदेवोग्नीवरुणौत्रिष्टुप् पूजने॰ ॐ सत्वंनोअग्नेवमोभवो॰ ऋक्१सर्वपूजांतेदेवदानवइतिप्रतिकलशंप्रार्थना तत्तत्क्रमेण-
चतुर्षुकलशेषुसूक्तजपः आनोभद्राइतिदशर्चस्यसूक्तस्यराहूगणोगौतमोविश्वेदेवादेवता आद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थानाशेषा
स्त्रिष्टुभः जपेविनियो॰ ॐ आनोभद्राःक्रतवोयंतु॰ ऋचः१॰ भद्राअग्नेरितिद्वादशर्चस्यवाध्र्यश्वःसुमित्रोग्निर्देवता आद्येद्वेजगत्यौ अंत्यास्त्रिष्टु
भः जपेविनि॰ ॐ भद्राअग्नेर्वध्र्यश्वस्य॰ ऋचः१२ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यपुरुषोनारायणोदेवता अनुष्टुप्छंदः जपेवि॰ ॐ सहस्र
शीर्षा॰ ऋचः१६ कद्रुद्रायेत्यस्यसूक्तस्यघोरःकण्वोरुद्रोगायत्री जपेवि॰ ॐ कद्रुद्रायप्रचेतसे॰ इतिसूक्तम् ततोग्निंवेद्यांग्रहांश्चप्रतिष्ठा-
प्यान्वाधानंकुर्यात् समिद्धूयमादायात्रप्रधानम् आदित्यादिग्रहान्अष्टाष्टसंख्याभिःअर्कादिजातीयसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुति
भिश्च अधिदेवताप्रत्यधिदेवताद्याग्रहपीठदेवता एकैकसंख्याकाभिःसमिच्चर्वाज्याहुतिभिः रुद्रंप्रत्येकमष्टोत्तरशतसंख्याकाभिरश्वत्थप्ल
क्षपलाशखदिरजातीयसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुतिभिस्तिलमाषसर्षपाहुतिभिश्च अग्निवायुसूर्यप्रजापतींस्तिलाहुतिभिःशे
षेणस्विष्टकृतमित्याद्याज्यभागांतेकृतेयजमानःयथादैवतंत्यागंकुर्यात् तदनंतरंहोमांतेस्विष्टकृदादिनवाहुत्यंतेबलिदानंपूर्णाहुतिभिःप्र
णीतानि नयनांतंसस्त्रीजपःदंपत्योरभिषेकः धौतवस्त्रचंदनादिधारणं आज्यंरूपंरूपमित्यवलोक्यसदक्षिणंदत्वापूर्णाहुतिंहुत्वाकृतंकर्म

रुद्रार्पणंकृत्वाआचार्यायवस्त्रयुग्मसहितोपस्करगोनिष्क्रयदानम् ऋत्विग्भ्यःहिरण्यनिष्क्रयदानम् स्थापितदेवतानांपूजनमुविसर्जनं
आचार्यहस्तेप्रतिपादनंचअग्नेःपूजनविसर्जने यथाशक्तिब्राह्मणभोजनस्यसंकल्पःभूयसीदानस्यचविष्णुस्मरणंतदर्पणंचकुर्यात इ
तिकृष्णचतुर्दशीजननशांतिः अथसिनीवालीकुहूशांतिविधिः प्रयोगपारिजातेगार्ग्यः सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा
गजाश्वामहिषीचैवशक्रस्यापिश्रियंहरेत् येसंतिसकलाश्चान्येस्वप्रसादोपजीविनः वर्जयेत्तानशेषांस्तुपशुपक्षिमृगादिकान् कुहूप्रसूति
रत्यर्थंसर्वदोषकरास्मृता यस्याप्रसूतिरेतेषांतस्यायुर्धननाशनम् सर्वगंडसमस्तत्रदोषस्तुप्रबलोभवेत् शांतिंविनाविशेषेणपरित्यागो-
विधीयते परित्यागात्तत्रशांतिंकुर्यादिमांविचक्षणः तत्फलंतल्लक्षणार्द्धेनपुनरेवानुपालनम् नत्यजेत्पंडितोमोहादर्थेनज्ञानतोपिवा तयो-
र्नाशयेत्किंचित्स्वयंवानाशमश्नुते कल्पोक्तशांतिःकर्त्तव्याशीघ्रंदोषापनुत्तये रुद्रःशक्रश्चपितरःपूज्याःस्युर्देवताःक्रमात् कर्षमात्रसुव
र्णेनतदर्धार्धेनवापुनः अथवाशक्तितःकुर्याद्वित्तशाठ्यविवर्जितः प्रतिमांकारयेच्छंभोश्चतुर्भुजसमन्विताम् त्रिशूलखड्गवरदाभयहस्तां
यथाक्रमात् श्वेतवर्णांश्वेतपुष्पांश्वेतांबरवृषस्थिताम् त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि इंद्रश्चतुर्भुजोवज्रांकुशचापससायकः रक्त
वर्णोगजारूढोयतइंद्रेतिमंत्रतः पितरःकृष्णवर्णाश्चचतुर्हस्ताविमानगाः यष्ट्यक्षसूत्रकमंडल्वभयस्यैवधारिणः येचेहेतिचमंत्रेणपूजां-
कुर्यादनंतरम् आग्नेयींदिशिमारभ्यकुंभान्कोणेषुविन्यसेत् तन्मध्येस्थापयेत्कुंभंशतच्छिद्रसमन्वितम् तेष्वेवपंचगव्यादींस्तत्तन्मंत्रैश्च

निक्षिपेत् कल्पोक्तशांतिः कर्तव्याकुर्याच्छ्रीग्रंस्वशक्तितः गोदानंवस्त्रदानंच सुवर्णंचोर्वरांशकम् दशदानानिचोक्तानि क्षीरमाज्यंगुडस्तथा आ
ज्यावेक्षणमेतानितत्तन्मंत्रैश्चकारयेत् समिदाज्यचरोर्होमः स्तिलमाषैश्चसर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः अष्टोत्तरशतं-
सुरव्यं प्रत्येकंजुहुयाद्द्विजः त्र्यंबकेनमंत्रेणतिलान्व्याहृतिभिः पुनः चतुर्भिः कलशैर्युक्तंबृहत्कुंभसमन्वितम् शांतिवत्सकलंकार्यमभिषेकंच-
कारयेत् पितृमातृशिशूनांच अभिषिंचेत्तुवारुणैः शंकरस्यभिषेकंचकुर्याद्ब्राह्मणभोजनम् अन्येषांचैवसर्वेषांब्राह्मणानांचतर्पणम् यथाश
क्त्यनुसारेणद्विजवाचनपूर्वकमिति अथप्रयोगः कर्त्ताऽस्यकुमारस्यसिनीवालीजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं
सिनीवालीजननशांतिंकरिष्ये इतिसंकल्प्यगणेशपूजनादिवरणांतंकुर्यात् कुहूजनने कुहूजननसूचितेत्यूहः वेदद्वयरहितोदर्शः ततआचा
र्यः सर्षपविकिरणादिप्रार्थनांतंकृत्वोक्तप्रतिमाग्न्युत्तारणंकृत्वा स्थंडिलपूर्वभागेविदिक्षु आग्नेयीमारभ्य महीद्यौरित्यादिमंत्रैः पदार्थानुसमयेन
चतुरः कुंभानासाद्य मध्येशतच्छिद्रंसंस्थाप्यचतुर्षुजलसेचनगंध क्षेपांते तत्सवितुरित्यादिभिः पंचगव्यानिस्योनापृथिवीतिपंचमृदः सहिरत्ना-
नीतिपंचरत्नानि रुवतीतिपंचत्वचः ओषधयः संवदंतइतिपंचधान्यानि हिरण्यरूपइतिहिरण्यंप्रक्षिप्य पंचस्वपिपूर्णादर्वीतिपूर्णपात्रनिधानांतेम
ध्यमेयथाशक्तिनिर्मितांसुक्तलक्षणांरुद्रप्रतिमांनिधाय त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् रुद्रावाहनेवि॰ ॐ त्र्यंबकंयजा॰ इतिमंत्रेणरुद्रंश्वेतगंधपुष्पा
दिभिः संपूज्य तद्दक्षिणतोयतइंद्रेतिभर्गइंद्रस्त्रिष्टुप् इंद्रावा॰ ॐ यतइंद्र॰ इतिइंद्रंसंपूज्य येचेहेतिशंखः पितरस्त्रिष्टुप् पित्रावा॰ ओं येचेह

पितरो॰ इत्युत्तरतः पितॄन्संपूज्य चतुर्थकुंभेषु वरुणं संपूज्य आनो भद्रा इति पठेदृग्वेदी यजुर्वेदी नमोवान्वइति गवामंगेष्विति गां दद्यात् शरण्यं सर्व
लोकानां लज्जायारक्षणं परम् सुवेषधारि वस्त्रत्वमतः शांतिं प्रयच्छ मे इति वस्त्रम् हिरण्यगर्भगर्भस्थमिति सुवर्णम् सर्वभूताश्रयाभूमिर्वराहेण
समुद्धृता अनंतसस्यफलदा अतः शांतिं प्रयच्छ मे इति उर्वरां ततो दशदानानि गोभूतिलहिरण्याज्यवासोधान्यंगुडानि च रौप्यंलवणमित्याहुर्द-
शदानानि पंडिताः गां भुवं चोक्तमंत्राभ्यां पुनर्दत्वा तिलान्दद्यात् महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः तस्मादेषां प्रदानेन मम पापं व्यपोह-
त्विति उक्तमंत्रेण पुनर्हिरण्यं दत्वाज्यं दद्यात् कामधेनुषु संभूतं सर्वक्रतुषु संस्थितम् देवानामाज्यमाहारमतः शांतिं प्रयच्छ मे उक्तमंत्रेण वासः पुन
र्दत्वा धान्यं दद्यात् सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् प्राणिनां जीवनोपायमतः शांतिं प्रयच्छ मे इति यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः सा
मवेदस्तु वेदानां महादेवस्तु योगिनाम् प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा तथा रसानां प्रवरः सदैवेक्षुरसो मतः मम तस्मात्परां शांतिं दत्वा
गुड सर्वदेति गुडम् प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा शिवनेत्रोद्भवं रूप्यमतः शांतिं प्रयच्छ मे इति रूप्यम् यस्मादन्नरसाः सर्वे नोत्कृष्टा
लवणं विना शंभोः प्रीतिकरं नित्यमतः शांतिं प्रयच्छ मे इति लवणम् इति दशदानानि ततः क्षीरं दद्यात् क्षीरजातास्तथा शंखाः क्षीराद
मृतसंभवः क्षीरात्क्षीरोदवत्कीर्तिः क्षीरे प्राणस्य संभवः तस्मात्क्षीरप्रदानेन अतः शांतिं प्रयच्छ मे इति आज्यगुडावुक्तमंत्राभ्यां पुनर्दत्वाज्यपू
र्णे कांस्यपात्रे रूपं रूपमिति सहकुटुंबः प्रतिरूपं वीक्ष्य दद्यात् आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् आज्यं सुराणामाहार आज्ये देवाः प्रति-

स्थिताइति सुवोमानंगोचर्म तिलानांद्रोणः स्रुवर्णरजतयोः स्रुवर्णतदर्द्धतदर्द्धान्यतरत् आज्यस्यपलानिचत्वारिंशत् वाससस्त्रित्वम् धान्य
स्यपंचद्रोणाः एवंगुडलवणयोः सप्तहस्तेनदंडेनत्रिंशद्दंडानिवर्त्तनम् दशतान्येवगोचर्म अत्रगवादीनांदक्षिणात्वात्सदक्षिणमनड्वाहमिति बहु
वचनाभावाद्यज्ञियदक्षिणात्मकगोधान्यादेरखिलदक्षिणांतरापेक्षा नचैवंदक्षिणादानकालेदानापत्तिः अग्निगतदीक्षणीयादिगोचरन्यायेनप्रत्य
क्षपाठबलीयस्त्वात् अस्मिन्नप्यवसरेक्रियमाणदानेननर्विगानतिरूपप्रयोजनसंभवाच्च आकरेदशदानोत्तरमुक्तक्षीरादिदानस्यहोमोत्तरकर्तव्य-
तोक्तिस्तुकिंमूलेतिनविद्मः आचार्योग्निंप्रतिष्ठाप्यग्रहानावाह्यसंपूज्यान्वाधानंकुर्यात् चक्षुषीआज्येनेत्यंतेऽत्रप्रधानम् ग्रहानर्कादिसमि
दाज्याहुतिभिः विवक्षितसंख्याभिः त्र्यंबकम् अश्वत्थप्लक्षपालाशखदिरसमिदाहुतिभिः प्रत्येकमष्टोत्तरशतसंख्याभिराज्याहुतिभिश्चर्वाहुति
भिः सर्षपतिलमाषाहुतिभिश्च प्रत्येकंतावतीभिः इंद्रंपितृंश्च प्रत्येकमष्टाविंशतिसंख्याभिरष्टसंख्याभिर्वोक्तद्रव्याहुतिभिः त्र्यंबकमितिमंत्रेण
तिलाहुतिभिः प्रजापतिंतिलैः शषेणेत्यादियथान्वाधानंत्यागेकृतेप्रायश्चित्तहोमांतेबलिदानम् धामंतइतिपूर्णाहुतिश्च ततोग्रहकुंभसहि
तचतुःकुंभजलस्रुतशतच्छिद्रेणमातृपितृशिशूनामभिषेकः तत्त्वायामीतित्रिभिरेषांशुनःशेपोवरुणस्त्रिष्टुप् अभिषेके॰ ॐ तत्त्वायामि॰ ऋ
चः३ ततोविभूतिधारणांतेषोडशोपचारैरुद्रस्येतरेषांपंचोपचारैः पूजनम् विसृज्यताःप्रतिमाआचार्यहस्तेप्रतिपाद्याऽग्निंसंपूज्यविसृज्ययथा
शक्तिद्विजाज्ञ्ज्ञया ब्राह्मणानन्यांश्चांधपंग्वादीन्भोजयेदिति इतिसिनीवालीकुहूशांतिः अथदर्शशांतिः नारदः अथालोदर्शजाता-

नांमातापित्रोर्दरिद्रता तद्दोषपरिहारार्थंशांतिंवक्ष्यामितेसदा पुण्याहंवाचयित्वादौक्रतुसंकल्पपूर्वकम् कुंडंवामंडलंकुर्यात्तद्देशेस्थापयेद्बुधः
मंडलंसर्वतोभद्रम् तत्कुंभंनिक्षिपेद्द्रव्यंदधिक्षीरघृतादिकम् आदिशब्दाद्गोमूत्रगोमये न्यग्रोधोदुंबरोश्वत्थस्तचूतानिंबकास्तथा एतेषांवृक्ष
मूलानित्वगादीन्पल्लवांस्तथा एवंरत्नानिनिक्षिप्यवस्त्रयुग्मेनवेष्टयेत् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाःआयांतुयजमानस्यदुरितक्षय
कारकाः आपोहिष्ठात्र्यचेनाथकयानश्चित्रइत्यृचा यत्किंचेदमृचाचैवसमुद्रज्येष्ठाइत्यृचा अभिमंत्र्योदकंपश्चादग्नेःपूर्वप्रदेशके उदकम-
भिमंत्र्यपश्चाद्दर्शदेवताःस्थापयेत् इत्याशयः मंडलंकुर्यादितियदुक्तंतदाह हारिद्रंरक्तकंचैवकृष्णंश्वेतंचनीलकम् एतेषांतंडुलैश्चैवसर्वतो
भद्रमुद्धरेत् दर्शस्यदेवतायाश्चसोमसूर्यस्वरूपकाम् प्रतिमांस्वर्णजांनित्यंराजतींताम्रजांतथा दर्शदेवतापितरस्तद्रूपांप्रतिमांस्थापयेत् इ
त्यभेदेनान्वयः कुंभाअपितत्वात्तत्रापीदं सर्वतोभद्रमध्येचस्थापयेद्दर्शदेवताम् ग्रहवर्णवस्त्रयुग्मंतद्वर्णश्वेतपुष्पकम् आप्यायस्वेतिमंत्रे
णासवितापश्चातात्तथैवच उपचारैःसमाराध्यततोहोमंसमाचरेत् कृत्वावन्हिंप्रतिष्ठाप्यक्रतुसंकल्पमीदृशं आयुरारोग्यसिद्ध्यर्थंसर्वा-
रिष्टप्रशांतये पुत्रस्यदर्शजननदोषनिर्हरणायच मातापित्रोःकुमारस्यसर्वारिष्टप्रशांतये तेषामायुःश्रियेचैवशांतिहोमंकरोम्यहम्
समिधश्चचरुद्रव्यंक्रमेणाजुहुयाद्बुधः जुहुनेत्सवितृमंत्रेणसोमोधेनुंचमंत्रतः एतैर्मंत्रैश्चप्रत्येकंजुहुनेदष्टोत्तरशतम् एतैरितिबहुवचनंप्रणव-
स्वाहाकारसाहित्याभिप्रायेणअनुवादः अतएवाह दर्शस्यदेवताहोमस्त्वष्टाविंशतिसंख्यया होममेवंतुकृत्वाथविदध्याच्चाभिषेचनं

श्रीसूक्तमायुष्यसूक्तं समुद्रज्येष्ठा इत्यृचा एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा ततः स्विष्टकृदादिः स्याद्धोमशेषं समापयेत् हिरण्यं र-
जतं चैव कृष्णां धेनुं स दक्षिणाम् अन्येभ्योपि यथाशक्ति दातव्या दक्षिणा तथा ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनम् इति नारदोक्ता
दर्शशांतिः अथ प्रयोगः कर्ता कृतनित्यक्रियः पवित्रपाणिः सपत्नीकः स्वासने उपविश्य देशकालसंकीर्तनांते अस्य बालस्य दर्शज
ननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शजननशांतिं करिष्ये अखंडाभाजनने इत्थं संकल्पः अमायाः खंडतिथित्वे-
उत्तरवित्थाभाजनने कुहूजननशांतिं करिष्ये इति संकल्पे विशेषः ततो गणेशपूजनपुण्याहवाचनाचार्यर्त्विग्वरणाचार्यादिपूजनानि कुर्या
त् ततआचार्यो यदत्र संस्थितमित्यादिस्वस्त्ययनं तार्क्ष्यमिति प्रार्थनांतं कुर्यात् ततआचार्यः कुंडात्स्थंडिलाद्वा पूर्वे सर्वतोभद्रपर्याप्तं-
स्थलमतिक्रम्य महीद्यौरित्यादिना कुंभस्थापनादिजलसेचनांतं कृत्वा तत्र आप्यायस्वेत्यादिमंत्रैः क्षीरदधिघृतानि प्रक्षिप्य गायत्र्या गंध
द्वारामिति च गोमूत्रगोमये प्रक्षिप्य न्यग्रोधोदुंबराश्वत्थचूतनिंबमूलानां त्वचो रुवतिफीमइति तत्सह्लवानश्वेत्थेवइति पंचरत्नानि सहि
रत्नानीति निक्षिप्य युवासुवासाइति वस्त्रयुग्मेनावेष्ट्य सर्वे समुद्राः सरितः स्तीर्थानि जलदा नदाः आयांतु यजमानस्य दुरितक्षयकारकाः
इति समुद्रादिदेवतासहितं वरुणमावाह्य संपूज्य कलशोदकं आपोहिष्ठे तितृचेन कयानश्चित्रइत्यृचा यत्किंचेदमिति समुद्रज्येष्ठाइति-
चक्रगम्यां च अभिमंत्र्यतत्पश्चिमे अग्नेः पूर्वभागे कृष्णनीलरक्तादिवर्णतंडुलैः यथोचितं पूरितं शृंखलावल्लीभद्रादिगर्भं सर्वतोभद्रं संव

त्सरकृत्यांतर्गतानंतव्रतोद्यापनोक्तरीत्याकृत्वातत्रब्रह्मादिप्रसिद्धदेवतापूजांतेमध्येस्वर्णप्रतिमायांपितॄनावाहयेत् येचेहेतिशंखः पितर
स्त्रिष्टुप् पित्रावाहने० ॐ येचेहपितरो० १ दक्षिणतः रजत प्रतिमायांसोमम् उत्तरतः ताम्रप्रतिमायांसूर्यंचावाहयेत् आप्यायस्वगौतमः
सोमोगायत्री सोमावा० १ सवितापश्चातादितिनाभागः सवितात्रिष्टुप् सूर्यावाह० ॐ सवितापश्चातात्० ऋ० १ ततोदेवतात्रयंसंपूज्याऽ
ग्निं प्रतिष्ठाप्यसर्वतोभद्रस्यैशान्यांग्रहप्रतिष्ठापनादिवरुणपूजांतंकृत्वाऽन्वादध्यात् चक्षुषीआज्येनेत्यंते आदित्यादिग्रहान्चिकीर्षितसं-
ख्याभिः समिच्चर्वाज्याहुति भिः पितॄनष्टाविंशतिसंख्याकाभिः समिच्चर्वाज्याहुतिभिः सोमंसूर्यंच प्रत्येकं अष्टोत्तरशतसंख्याकाभिः
तदाहुतिभिः शेषेणस्विष्टकृतमित्यादि ततः आज्येनसहचरोः पर्यग्निकरणादि कालेकुर्यात् आज्यभागांते आयुशरोग्यमितिमंत्राभ्यांयज
मानेनहोमसंकल्पपूर्वकंत्यागेकृतेसर्त्विगाचार्यःप्रधानहोमंकुर्यात् तदंतेस्विष्टकृतः पूर्वं हिरण्यवर्णामिति आयुष्यंवर्चस्यमितिसूक्ताभ्यां-
ससुहृज्ये ष्ठाइत्यृचाच्च सबालौपितरावभिषिच्य स्विष्टकृदादिकुर्यात् ततोबलिदानपूर्णाहुतीकृत्वा होमशेषंसमापयेत् ततोयजमानः हि
रण्यरजतेसदक्षिणांकृष्णांधेनुंच आचार्यायदत्वाऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदत्वा स्थापितदेवतोपस्थापनक्रमेण उत्तरपूजाविसर्ज-
नेकृत्वाप्रतिमा आचार्यायप्रतिपाद्य अग्निंसंपूज्यगच्छगच्छेतिविसृज्य शांतीः पाठयित्वाब्राह्मणान् भोजयित्वातेभ्योदक्षिणादानांतेस्वस्ति
भवंतोब्रुवंत्विति वाचयेत् तेचस्वस्तीति वदेयुः इतिदर्शशांतिः इतिसंस्कारकौस्तुभेदर्शतिथिशांतिप्रयोगः इतितिथिशांतयः

अथनक्षत्रशांतयः अथमूलशांतिविधिः अथातःसंप्रवक्ष्यामिमूलजातहितायच मातापित्रोर्धनस्यापिकुलशांतिहितायच त्यागो-
वामूलजातस्यस्यादष्टाब्दात्प्रदर्शनम् अभुक्तमूलजातानांपरित्यागोविधीयते ज्येष्ठांत्यघटिकानैकामूलादौघटिकाद्वयम् अभुक्तमूलमि
त्याहुर्जातंपुत्रींविसर्जयेत् अदर्शनाद्वापिपितुःसतुतिष्ठेत्समाष्टकं एवंचदुहितुर्दोषंमूलजातफलंबुधैः अन्यत्रतु नबालाहंतिमूलर्क्षेपितरं
मातरंतथा मूलजाश्वश्रुरंहंतिव्यालजाचतदंगनाम् माहेंद्रजाग्रजंहंतिदेवरंतुद्विदैवजा शांतिर्वापुष्कलास्याच्चेत्तर्हिदोषोनविद्यतेइति
व्यालआश्लेषा माहेंद्रंज्येष्ठा द्विदैवंविशाखा मुख्यकालंप्रवक्ष्यामिशांतिहोमस्ययत्नतः जातस्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने समाष्ट
केद्वादशाहेकुर्याद्वाशांतिमादरात् उत्तरार्द्धेसमाष्टकेद्वादशाब्देइतिमदनरत्नपाठः स्वसमेपुण्यदेशेतुमंडपंकारयेद्बुधः पुण्यगर्भिर्मंत्रितैस्तो
यैःप्रोक्षितायांक्षितौततः तत्रोदकुंभंसुश्लक्ष्णंरक्तंव्रणविवर्जितम् अकृष्णमूलंनिर्णिक्तंपूरयेन्निर्मलांभसा वस्त्रावगुंठितंकुर्यात्पूरयेत्ती-
र्थवारिणा कूर्चहेमसमायुक्तंचूतपल्लवशोभितम् स्वस्तिकोपरिविन्यस्यक्षीरिद्रुमसपल्लवैः द्रोणव्रीहींश्चनिक्षिप्यईशान्यांचनिधापयेत्
पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वितम् अर्चितंगंधपुष्पाद्यैःश्रीरुद्रंचस्पृशन्जपेत् षडंगसहितंसम्यक्तंजपेद्रुद्रसंख्यया बव्हृचारुद्रसूक्तं
वाछंदोगारुद्रसामगैः एकादशाष्टत्रिंशद्वेकसंख्यायथाशक्तितोजपेत् तत्रप्रतिरथंसूक्तंशतरुद्रानुवाककम् रक्षामंत्रंतथापुण्यंरक्षोघ्नंचास्पृ
शन्जपेत् त्र्यंबकंचजपेत्सम्यक्अष्टोत्तरसहस्रकम् एकवारंतथान्येपिपावमानीःस्पृशन्जपेत् संस्थाप्यपंचकुंभांश्चद्वयंवातदलाभतः

श्रीरुद्रस्यैककुंभे न्वसर्वसूक्तानितत्रतु तथान्यंचयक्ष्मंकुंभंपूर्वोक्तैर्लक्षणैर्युतम् चतुःप्रस्रवणंकुर्यात्संचवक्रंतथैवच वस्त्रावगुंठितंकुर्यात्पूरये त्तीर्थवारिणा पंचरत्नसमायुक्तमाम्रपल्लवसंयुतम् गजाश्वरथ्यावल्मीकसंगमात्ह्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् कुंभ स्यनैर्ऋतेदेशेहोमस्थानंप्रकल्पयेत् गोमयालेपितेदेशेकुर्यात्स्थंडिलमुत्तमम् कृत्वाग्निमुखपर्यंतमुल्लेखादिस्वशाखतः पूर्णपात्रनिधानांतंकृ त्वापूजांसमारभेत् नक्षत्रदेवतारूपंसुवर्णेनप्रयत्नतः निष्कमानेनवार्धेनपादेनाथस्वशक्तितः प्रतिमांलक्षणेनैवकारयित्वाविचक्षणः यद्वा मूल्यंसुवर्णस्यस्थापयित्वाप्रपूजयेत् सुवर्णंसर्वदैवत्यंसर्वदेवात्मकोऽनलः सर्वदेवात्मकोविप्रःसर्वदेवमयोहरिः संस्मरेन्निर्ऋतिंश्यामंसुमुखं नरवाहनं रक्षोधिपंखड्गहस्तंदिव्याभरणभूषितम् प्रतिमापूजनार्थायवस्त्रयुग्मंप्रकल्पयेत् पंकजंकासेद्रूमोरक्ताभैर्व्रीहितंडुलैः चतुर्विंशद् लोपेतंशंक्तैर्वाकर्णिकान्वितम् तस्योपरिन्यसेत्पात्रंस्वर्णवारौप्यमृन्मयम् शुद्धवस्त्रेणसंछाद्यतत्रमूलानिनिक्षिपेत् मूलानिशतमूलानितद लाभेविष्णुक्रांतासहदेवीतुलसीतुशतावरी मूलनामानिगृण्हीयाच्छताभावेविशेषतः स्थापयेत्कर्णिकामध्येवस्त्रगंधाद्यलंकृतम् कूर्चहेमज लोपेतंकुंभमोषधिसंयुतम् कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदेवताम् अधिप्रत्यधिदेवौच्चदक्षिणोत्तरदेशयोः अधिदेवंजपेदादौज्येष्ठानक्षत्रदेव ताम् तथाप्रत्यधिपाद्यंचपूजयेद्देवतांशुभां उत्तराषाढऋक्षाद्याअनुराधांतमर्चयेत् ऐंद्रादीशानपर्यंतंपूजयेत्स्वस्वनामतः स्वस्वलिंगोक्तमं त्रैश्चप्रधानादिप्रपूजयेत् पंचामृतेनसंस्नाप्यआवाह्यायसमर्चयेत् आवाह्येतिल्यबलोपेपंचमी अथेतिपूर्णपात्रनिधानांतंकृत्वेत्युक्तानंतर्यानु

वारः अतएवाह उपचारैःषोडशभिरिति आवाहनमारभ्यार्चनविवरणम् उपचारैःषोडशभिर्यद्वापंचोपचारकैः रक्तचंदनगंधाद्यैःपुष्पैःकृष्ण
सितादिभिः मेषशृंगादिधूपैश्च घृतदीपैस्तथैवच कृशापोलिकमांसाद्यैर्नैवेद्यैर्भोजनादिभिः मत्स्यमांसकृशरादीनिब्राह्मणानांविवर्जयेत्
कृशरास्थानेप्रदातव्यंक्षीरंसैंधवमिश्रितम् पायसंलवणोपेतंमांसस्थानेप्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्पयेत् पुष्पांतंतुसमभ्य
र्च्यहोमंकुर्याद्यथोदितम् निर्वापप्रोक्षणादीन्चरोःकुर्याद्यथाविधि हविर्गृहीत्वाविधिवन्मंत्रैस्तैर्वरूचाहुनेत् पायसंघृतसंमिश्रंहुनेदष्टोत्त
रंशतम् विधिवदिति पायसन्चर्वोरवदानधर्मविधेःप्रतिप्रसवः अन्यथानर्थक्यात् समिदाज्यचरून्पश्चाच्छक्तितःसंख्ययाहुनेत् पश्चात्पा
यसहोमोत्तरम् अधिदैवतयोश्चैवंजुहुयात्स्वस्वमंत्रतः चतुर्थ्यंतैर्नमोंतैश्च स्वाहांतैःस्वस्वमंत्रकैः नक्षत्रदेवताभ्यश्चपायसेनतुहोमयेत्
कृणुष्वेतिपंचदशभिर्जुहुयात्कसरंततः गायत्र्याजातवेदसेत्र्यंबकमितिक्रमात् सीरायुंजंतितामग्निंवास्तोष्पत्यग्निमेवच क्षेत्रस्यपतिनागृ
णानाग्निंदूतंपुरोदधे श्रीसूक्तेनतथाविद्वान्समिदाज्यचरून्क्रमात् अष्टोत्तरशतैर्वाथअष्टाविंशतिभिःक्रमात् अष्टाष्टसंख्ययावापिजु-
हुयाच्छक्तितोबुधः त्वंनःसोमेनपायसंजुहुयात्तुत्रयोदश चतुर्गृहीतमाज्यंचयातेरुद्रेतिमंत्रतः स्रुवेणजुहुयादाज्यंमहाव्याहृतिभिःक्रमा-
त् हुत्वास्विष्टतंपश्चात्प्रायश्चित्ताहुतीर्हुनेत् आचार्योयजमानोवाअग्नौपूर्णाहुतिंहुनेत् समुद्रादूर्मिसूक्तेनप्राजापत्यमृचाथवा पूर्णादर्वीसप्त
तेतिमंत्रैःपूर्णाहुतिंहुनेत् होमशेषंसमाप्याथवन्हिमारोपयेद्बुधः कुंभाभिमंत्रणंकुर्यात्दक्षिणेनाभिमर्शयेत् मृत्युप्रशमनार्थायजपेत्त्र्यंब

कंशतम् रुद्रकुंभोक्तमार्गेणरुद्रमंत्रंस्पृशन्जपेत् धूपंदीपंचनैवेद्यंकुंभयुग्मंनिवेदयेत् प्रसादयेत्ततोदेवमभिषेकार्थमादरात् तस्मिन्कालेग्र
हातिथ्यंकर्तव्यंस्मृतिमिच्छता पृथक्प्रशस्तंतेनैवनक्षत्रेष्यासहैववा अभिषेकविधिंवक्ष्येसर्वाचार्यैरुदीरितम् भद्रासनोपविष्टस्ययजमान
स्यऋत्विजः दारपुत्रसमेतस्यकुर्युःसर्वेभिषेचनम् अक्षीभ्यामितिसूक्तेनपावमानीभिरेवच आपोहिष्ठेतिनवभिरापइद्वाद्वयेनच सहस्त्रा-
क्षत्र्चेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवक्ष्यमाणैश्चमंत्रकैः योसौवज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापि-
त्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः सप्तजिव्हश्चदेवोग्निर्मूलदोषंव्यपोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः मूलजा
तशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंगंडांतसंभवम् योसौपाशधरोदेवोवरुण
श्चजलेश्वरः नक्रवाहःप्रचेताश्चोमूलोत्थाघंव्यपोहतु योसौदेवोजगत्प्राणोमारुतोमृगवाहनः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः यो
सौनिधिपतिर्देवःखड्गभृद्वाजिवाहनः मातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु योसौपशुपतिर्देवःपिनाकीवृषवाहनः आश्लेषामूलगंडांत
दोषमाशुव्यपोहतु विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदाः तच्छंयोरभिषेकंतुसर्वदोषोपशांतिदम्
सर्वकामप्रदंदिव्यंमंगलानांचमंगलम् वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः यजमानोदक्षि
णाभिस्तोषयेदृत्विगादिकान् धेनुंपयस्विनींदद्यादाचार्यायसवत्सकाम् निर्ऋतिप्रतिमांवस्त्रंकुंभंहेमचदापयेत् ग्रहार्थंवस्त्रप्रतिमात

तदुक्ताश्चदक्षिणाः श्रीरुजापिनेदेयो कृष्णोनड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमास्तस्मैदद्यात्प्रयत्नतः इतरेभ्योपिविप्रेभ्यः शक्त्यादद्या-
च्चदक्षिणाम् उक्तालाभेततोदद्यादाचार्यब्रह्मऋत्विजाम् तत्तन्मूल्यंप्रदातव्यंशक्त्यावाथप्रदापयेत् आचार्यायचयद्दत्तंतदर्द्धंब्रह्मणेददेत्
सदस्यायब्रह्मणोर्धमृत्विग्भ्यश्चतदर्द्धकम् आशीश्चतेभ्योगृण्हीयात्प्रणम्याथसमापयेत् दद्यादन्नंपायसादिब्राह्मणान्भोजयेच्छतम्
अलाभेसतिपंचाशद्दशकंतदभावतः सर्वशांतेश्चपठनंब्राह्मणैराशिषस्तथा गृहीक्षमापयेद्विद्वान्निर्ऋतिःप्रीयतामिति विधानेनदरितेगस्मिं
स्कृतेततःशांतिर्भवेद्ध्रुवम् गंडांतेप्येवंकर्तव्यंपुष्यार्द्धेतद्वदेवतु समाप्तेकेद्वादशाहेकुर्याद्वाशांतिमादरात् इत्युक्तंमनुनासम्यकमूलजातहि
तायच मातापित्रोर्धनस्यापिबंधुशोकापनुत्तये अथैतदनुसारीप्रयोगः अभुक्तमूलोत्पत्तौवर्षाष्टकसहितद्वादशाहांतेवर्षाष्टकांतेद्वादं-
शाब्दांतेवातदन्यमूलोत्पत्तौतुद्वादशाहे अव्यवहितागामिमूलनक्षत्रयुतेशुभदिनेवागोप्रसवशांतिसुक्तविधिनाकृत्वादेशकालकीर्तनांतेस्य
कुमारस्यमूलप्रथमचरणजन्मसूचितसकलारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्तप्रकारांसग्रहमखांशांतिंकरिष्ये इतिसंकल्प्य
गणपतिपूजादिऋत्विग्वरणांतंकुर्यात् द्वितीयादिचरणोत्पत्तौसंकल्पोहोवोत्थव्यः ब्रह्मसदस्यौकृताकृतौ ऋत्विजश्चाष्टौद्वादशषोडश
वा ब्राह्मणाःश्रोत्रियाश्चाष्टौद्वादशत्वथषोडशेतिकश्यपोक्तेःअत्यंताशक्तौचत्वारोपि यथाशक्तिवस्त्रालंकारमधुपर्केणान्यथावातेषां
पूजनम् ततआचार्यःपवित्रपाणिःप्राणानायम्ययथाचारंसंकल्प्यशुभसमीकृतपुण्यदेशेयदत्रसंस्थितमितिसर्षपान्विकीर्यएतोन्विंद्रंस्तवा

मेतितिसृभिर्ऋग्भिर्जलमभिमंत्र्यतेनापोहिष्ठेतितृचेनतांभूमिंप्रोक्ष्यमंडपपक्षेमंडपदेवतापूजनंमाधकृत्योक्तविधिनाकुर्यात् ततःप्रतिमा
भ्युत्तारणंकृत्वामंडपस्यतदग्रावेप्रोक्षितभूमेर्वाऐशान्यांस्वस्तिकंविरच्यमहीद्यौरितिक्ष्मांसंस्पृष्ट्वा ओषधयःसमितिद्रोणपरिमितव्रीहीन्प्र-
क्षिपेत् यथोक्तलक्षणंकलशंप्रक्षालितवस्त्रावगुंठितंयुवासुवासाइतिकृत्वातीर्थवारिणेमंमेगंगेइत्यापूर्यशरासःकुशरासइतिहिरण्यरूप
इति कूर्चंहेमसमायुक्तंविधायचूतपल्लवैःसंयुक्तंस्वस्तिकेव्रीहिषुविन्यस्यसपल्लवाःक्षीरद्रुमशाखाअश्वत्थेवइतिनिक्षिप्यसहिरत्नानीतिपंच
रत्नानियाओषधीरितिसर्वौषधीःगंधद्वारामितिगंधंयाःफलिनीरितिपुष्पफलेओषधयइतियवान्कांडात्कांडादितिदूर्वाःस्योनेतिमृदःआ
पोहिष्ठेतितृचेनपंचगव्यंनिःक्षिप्यपूर्णादर्वीतिपूर्णपात्रंनिधायतस्मात्कलशाच्चतुर्दिक्षुमहीद्यौरित्यादिमंत्रावृत्त्याचतुर्णांकलशानांपूर्णपा
त्रनिधानांतंकृत्वामध्यकलशेस्थितसाष्टदलवाससिहेमप्रतिमायांयातेरुद्रेतिमंत्रस्यकश्यपोरुद्रःस्वराडनुष्टुप् तेनमंत्रेणरुद्रमावाह्यतेनैव-
संपूज्यचतुर्षुवरुणमावाह्यपंचोपचारैःसंपूज्य यजुर्वेदीयजमानश्चेत्कंचिदृत्विजंमध्यकुंभेषडंगैकादशिनीजपेयोजयेत् सचरुद्रकलशंस्पृ
शन्जपेत् बह्वृचोयजमानश्चेद्रुद्रसूक्तजपेकंचिद्योजयेत् छंदोगश्चेद्रुद्रसामजपेसामगांस्त्रीन्योजयेत् तेपिकलशंस्पृशंतोजपेयुः सूक्त
सामजपयोरेकादशाष्टद्वित्र्येकसंख्यानांविकल्पः कद्रुद्रायेतिनवर्चस्यघोरःकण्वोरुद्रोगायत्री इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रो
नवजगत्योंत्येत्रिष्टुभौ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् सर्वेषांजपेविनियोगः ॐ कद्रुद्रायप्रचेतसे० ऋचः१ॐइ

मारुद्रायतवसेकपर्दिने॰ ऋच॰ ११ ॐ आतेपितर्मरुतांसुम्नमेतु॰ ऋच॰ १५ सूक्तांतरेसत्येपिनतज्जपः बहुवचनस्यत्रिष्टुपपत्तेः आवोराजानमि
तित्रयाणांसाम्नांवामदेवोरुद्रआद्यस्यत्रिष्टुप्द्वयोर्गायत्रीजपेवि॰ ॐ आवोराजानमध्वरस्यरुद्रं॰ ऋचः ३ चतुर्णामन्येषामपितत्रैवजपः तत्रत्य
जपसंदंशपाठात् आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यैंद्रोप्रतिरथइंद्रः चतुर्थ्याबृहस्पतिस्त्रिष्टुप् अंत्यानुष्टुप् तमग्नेरुद्रइत्यनुवाक-
स्यहव्यवाड्ऋषिः अग्न्यात्मारुद्रोदेवता जगतीछंदः रक्षाणोअग्नेइत्यस्यवामदेवोग्निस्त्रिष्टुप् रक्षोहणमितिपंचविंशर्चस्यसूक्तस्यआंगिरसः
पायुरग्निस्त्रिष्टुप् चतस्रोंत्याअनुष्टुभः सर्वेषांजपेविनियोगः अत्राऽपिशक्त्यापूर्वोक्तसंख्यास्वीकारः ततस्त्र्यंबकमंत्रस्याऽष्टोत्तरश
तसंजपंतत्रैवकश्चित्कुर्यात् पावमानीनांतिसृणामृचांच आसांमधुच्छंदाः पवमानसोमोगायत्री अन्येषुकलशेषुशांतिजपमृत्विजः कु-
र्युः यद्वाकुंभ पंचकस्थानेकुंभद्वयंसंस्थाप्य तत्रैकादिमरुद्रकुंभेरुद्रादिसर्वजपः अन्यकुंभेतदुत्तरस्थेवरुणमावाह्य शांतिजपः यद्वा
चतुःप्रस्रवणएकवक्त्रकुंभः पंचकुंभस्थानेस्थापनीयः तत्रमुखेमध्यमकुंभकार्यंचतुर्षुप्रस्रवणेषुकुंभचतुष्टयकार्यंकर्तव्यमितिव्यव
स्था ततःस्थापितकुंभोत्तरतोरक्तवर्णैःशुक्लैर्वाव्रीहितंडुलैश्चतुर्विंशद्दलोपेतंसकर्णिकंपंकजंविधाय तत्कर्णिकायांमहीद्यौरितिभूमिंस्पृ
ष्ट्वा ओषधयःसमितिव्रीहीन्निःक्षिप्य सौवर्णंराजतंमृन्मयंवापूर्वोक्तमंत्रेणसुन्दरवस्त्रवेष्टितंकृत्वा तत्रेमंमेगंगेइतितीर्थजलमानीयब-
हिःशिखादीनिशतमूलानितदभावेविष्णुक्रांतासहदेवीतुलसीशतावरीर्निःक्षिप्योक्तमंत्रैर्यवादिप्रक्षेपंकृत्वागंधाद्यलंकृतंकूर्चहेमोपेतंकुं

कुंभसर्वौषधिसंयुतंविधाय आकलशेष्विति कर्णिकायांस्थापयेत् ततः पूर्ववत् याओषधीरित्यादिमंत्रैर्यवादिप्रक्षेपंकृत्वा पूर्णादर्वी
तिनिहितपूर्णपात्रे साष्टदलवस्त्रंनिधाय निष्कतदर्धतदर्धान्यतरमान हेमनिर्मितांनिर्ऋतिप्रतिमांप्रतिमांतराणि पंचामृतेन प्रक्षाल्य तत्रवस्त्रे
निर्ऋतिप्रतिमांतद्दक्षिणतउत्तरतश्चेंद्रप्रतिमामपांप्रतिमांपूर्वादिदलेषु विश्वेदेवप्रतिमास्तदभावे फलानि तंडुलपुंजान्वानिधाय प्राच्यादिस्था
नेषुलोकपालप्रतिमाः फलादिवानिधाय प्रतिमासुदेवता आवाहयेत् तद्यथा मोषुणोघोरः कण्वोनिर्ऋतिर्गायत्री निर्ऋत्यावा० इंद्रंवोम
धुच्छंदाइंद्रोगायत्री इंद्रावा० अप्सुमेमेधातिथिरापोनुष्टुप् अबावाह० विश्वान्देवानावाहयामि विष्णुं० वसून्० वरुणं० अजैकपदं०
अहिर्बुध्न्यं० पूषणं० अश्विनौ० यमं० अग्निं० प्रजापतिं० सोमं० रुद्रं० अदितिं० बृहस्पतिं० सर्पान्० पितॄन्० भगं० अर्यमणं० सवितारं त्व-
ष्टारं० वायुं० इंद्राग्नी० मित्रं० इत्यावाहनांतेग्रहमखरीत्यालोकपालानावाह्य नैर्ऋतिप्रदेशेस्थंडिलाद्यग्निस्थापनांतंकृत्वास्थापितकुंभे
शानदेशेग्रहानावाह्यसंपूज्य तदैशान्यांकलशप्रार्थनांतंकुर्यात् ततोऽन्वाधानम् चक्षुषीआज्येनेत्यंते आदित्यादिनवग्रहान् प्रत्येकं अ-
र्कादिजातीयसमिच्चर्वाज्याहुतिभिरेतत्संख्याभिरधिदेवताप्रत्यधिदेवताविनायकादिक्षेत्रपालांताः लोकपालांश्च पूर्वोक्ताहुतिभिरेतत्सं
ख्याभिः निर्ऋतिं प्रत्येकं अष्टोत्तरशतसंख्याभिर्घृतसंमिश्रपायससमिदाज्यचर्वाहुतिभिः समिदाद्याहुतीनांशक्तितोन्यूनसंख्याकरणप-
क्षेतथैवनिर्देशः इंद्रमपश्च प्रतिद्रव्यमष्टाविंशतिसंख्याभिरुक्ताहुतिभिर्विश्वेदेवाद्याश्चतुर्विंशतिदेवता अष्टाष्टसंख्याभिः पायसाहु-

तिभिः रक्षोहणमग्निं विंशत्यधिकशतसंख्याभिः कृसराहु॰ सवितारं दुर्गां त्र्यंबकं कवीन्दुर्गां वास्तोष्पतिमग्निं क्षेत्राधिपतिं मित्रावरुणावग्निं
च एताः देवताः प्रत्येकमष्टाष्टसंख्याभिः कृसराहुतिभिः श्रियं प्रतिद्रव्यं विंशत्यधिकशतसंख्याभिः समिदाज्यचर्वाहुतिभिः सोमं त्रयोदश
वारं पायसाहुतिभिः रुद्रं स्वराजं चतुर्गृहीताज्येन अग्निं पृथिवीं महांतं वायुमंतरिक्षं महांतं आदित्यं दिवं महांतं चंद्रमसं नक्षत्राणि दिशो म
हांतं चाज्येन शेषेणेत्यादि पात्रासादने पायसचरुकृसरार्थस्थालीनां स्रुवाणामाज्यस्थालीनां शूर्पाणां चासादनादि प्रणीतास्थापनांतं
कृत्वा निर्ऋत्यादीनां वक्ष्यमाणतत्तन्मंत्रैः पूजां कुर्यात् निर्ऋतये वस्त्रयुग्मं रक्तचंदनं कृष्णासितादिपुष्पाणि मेषशृंगधूप आज्यदीपः पौ
लिकौदनकृसरमांसात्मकं पुरुषाहारपर्याप्तं नैवेद्यं तत्र ब्राह्मणेन कृसरास्थाने सैंधवमिश्रं क्षीरं मांसस्थाने लवणमिश्रं पायसं देयम् अन्यैः
संभवे सुरव्यमेवोभयम् पुष्पांजल्यंते पूजने कृते निर्ऋतिमिदं मपश्चोद्दिश्य शूर्पयोः पायसार्थं चर्वर्थं च द्वादश मुष्टीन् तूष्णीं निरूप्य पायसार्थे
निरुप्ते षण्णवतिमुष्टीन् तूष्णीं निरूप्य पुनः शूर्पांतरे कृसरार्थं चतुश्चत्वारिंशत्संख्यान् मुष्टीन् निरूप्य चर्वर्थे पुनश्चतुरः पायसार्थे द्विपंचा
शन्मुष्टीन् निरूप्य तत्तत्संख्यया प्रोक्ष्य क्रमेणावहत्य पात्रत्रये हविस्त्रयं श्रपयेत् ततो यथान्वाधानं त्यागः तद्यथा एतत्संख्याहुतिपर्या
प्तं समिद्द्रव्यं चरुराज्यं च आदित्याय सोमायेत्यादि एवमधिदेवतादिभ्यस्त्यागः ततोऽष्टोत्तरशतसंख्याहुतिपर्याप्तं घृतसंमिश्रपायसं नि
र्ऋतये समिदादिषु सैव संख्यान्यूनसंख्या वा या पूर्वसंकल्पिता तदनुसारी त्यागः इयदाहुतिपर्याप्तं समिदाज्यचर्वात्मकं द्रव्यत्रयं निर्ऋतये॰ अष्टाविंशत्या

हुतिपर्याप्तंउक्तद्रव्यंचतुष्टयंइंद्राय॰ एवमग्रः ॰अष्टाष्टसंख्याहुतिपर्याप्तंपायसंविश्वेभ्योदेवेभ्यः॰विष्णवे॰ वसुभ्यो॰ वरुणाय॰अजैकप
दे॰ अहयेबुध्नियाय॰पूष्णे॰अश्विभ्यां॰ यमाय॰ अग्नये॰ प्रजापतये॰ सोमाय॰रुद्राय॰ अदितये॰ बृहस्पतये॰ सर्पेभ्यो॰ पितृभ्यो॰ भगाय॰अ
र्यम्णे॰ सवित्रे॰ त्वष्ट्रे॰ वायवे॰ इंद्राग्निभ्यां॰ मित्राय॰ विंशत्यधिकशताहुतिपर्याप्तंकृसरंहविः॰ रक्षोघ्नेभ्यये अष्टाष्टसंख्याहुतिपर्याप्तंकृसर
द्रव्यं॰ सवित्रे॰ दुर्गायै॰ त्र्यंबकाय॰ कविभ्यो॰ दुर्गायै॰ वास्तोष्पतये॰ अग्नये॰ क्षेत्राधिपतये॰ मित्रावरुणाभ्यां ॰अग्नयेच॰ विंशत्यधिकशतसं
ख्याहुतिपर्याप्ताः समिधः तावदाज्यंतावांश्चरुः श्रियैत्रयोदशाहुतिपर्याप्तंपायसं॰ सोमंचतुर्गृहीताज्यं॰ रुद्रायस्वराजेएकैकाहुतिपर्याप्तमा-
ज्यं॰ अग्नयेपृथिव्यैमहते॰ वायवेंतरिक्षायमहते॰ आदित्यायदिवेमहते॰ चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतेच॰ एवंत्यागेकृतेसाचार्याकृत्विज
स्तथैवजुहुयुः तत्रादित्यादिभ्योरजोदर्शनशांत्युक्तरीत्याहोमः मोषुणोघोरः कण्वोनिर्ऋतिर्गायत्री होमेविनि॰ ॐ मोषुणः परापरा॰ इंद्रंवो-
मधुच्छंदाइंद्रोगायत्री होमे॰ अप्स्कमेमेधातिथिरापोनुष्टुप् होमेवि॰ एतैर्मंत्रैः प्रणवादिस्वाहांतैः यज्ञियतरुसमिधः संकल्पानुसारिसंख्या
दधिमधुघृताक्ता होतव्याः पायसचरूंश्चतुरवत्ताद्यवदानविधिनाहविर्गृहीत्वाजुहुयात् विधिवदित्याकारोक्तेः पायसहोमेसमाप्तेसमिदादि
होमारंभः ततः ॐ विश्वेभ्योदेवेभ्योस्वाहेत्येवंउक्तचतुर्विंशतिनाममंत्रैः प्रत्येकमष्टाष्टसंख्ययापायसहोमः कृणुष्वेतिपंचदशर्चस्यगोतमो-
वामदेवोरक्षोहाग्निस्त्रिष्टुप् कृसरहोमेवि॰ ॐ कृणुष्वपाजः प्रसितिं॰ ऋचः १५ प्रत्यृचमष्टाष्टसंख्ययाहोमः गायत्र्याप्यष्टोतदाहुतयः जात

सं॰कौ॰
७२

वेदसेकश्यपोदुर्गात्रिष्टुप् कृसरहोमे॰ ॐ जातवेदसे॰ १ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् कृसरहोमे॰ ततः सीरायुंजंतीत्यस्यबुधः सौम्यः कवयोगायत्री
कृसरहोमे॰ ॐ सीरायुंजंति॰ ८ तामग्निवर्णांसोभरिर्दुर्गात्रिष्टुप् कृसरहो॰ ॐ तामग्निवर्णांतपसाज्वलंतीं॰ ८ वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रि-
ष्टुप् कृसरहो॰ ओं वास्तोष्पतेप्रति॰ ८ ततः अग्निंकाण्वोमेधातिथिरग्निर्गायत्री कृसरहोमे॰ ॐ अग्निंदूतं॰ ८ क्षेत्रस्यपतिनावामदेवः क्षेत्राधिप
तिरनुष्टुप् कृसर॰ ॐ क्षेत्रस्यपतिनावयं॰ ८ गृणानाजमदग्निर्मित्रावरुणौगायत्री कृसर॰ ॐ गृणानाजमदग्निना॰ ८ ततः अग्निंदूतंपुरोदधइत्यां
गिरसोविरूपोग्निर्गायत्री कृसरहोमे॰ ओं अग्निंदूतंपुरोदधे॰ ८ ततः हिरण्यवर्णामिति पंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासु-
ताऋषयः श्रीर्देवता आद्यास्तिस्रोनुष्टुभः चतुर्थीप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याप्रस्तारपंक्तिः होमेविनियो॰
ॐ हिरण्यवर्णांहरिणीं॰ ऋचः १५ प्रत्यृचं समिदाज्यचरून् अष्टसंख्ययाजुहुयात् त्वंनः सोमविश्वतइत्यस्यप्रगाथः सोमस्त्रिष्टुप् पायस-
होमे॰ ॐ त्वंनः सोमविश्वतो॰ १३ यातेरुद्रेत्यस्यकश्यपोरुद्रः स्वराडनुष्टुप् आज्यहोमे॰ ॐ यातेरुद्रशिवा॰ अनेनचतुर्गृहीतंहुत्वास्रुवेणच
तस्य आज्याहुतीर्जुहुयात् भूरग्नयेचपृथिव्यैचमहतेचस्वाहा भुवोवायवेचांतरिक्षायचमहतेचस्वाहा स्वरादित्यायचदिवेचमहतेच॰
भूर्भुवः स्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चस्वाहेति ततः स्विष्टकृत्पायसाज्यचरूणां सकृत्सकृदवदायाज्यं द्विर्गृहीत्वा॰ यदस्येति॰ ततः
प्रायश्चित्तहोमांतेकृते दिक्पालग्रहविनायकादिभ्यो रुद्रायनिर्ऋतये इंद्रायान्धश्वसदीपमाषभक्तबलिदानंकार्यं आचार्योयजमानोवा पूर्णाहु

७२

तिंजुहुयात् समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् अंत्याजगती पूर्णाहुतिहोमेवि० ॐ समुद्रादूर्मिर्मधुमांउदार०
ऋच०११ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् पूर्णाहुतिहोमे० ॐ प्रजापतेन० ऋक् १ पूर्णादर्वीतिविश्वेदेवाःशतक्रतुरनुष्टुप् पूर्णाहुति०
ॐ पूर्णादर्विपरापत० ऋक् १ सप्ततेअग्नेसप्तानग्निर्जगती पूर्णाहुतिहोमे० ॐ सप्ततेअग्ने० १ अग्नयेप्रजापतयेशतक्रतवेसप्तवतेअग्नये० त
तःप्रणीतानिनयनसंस्थाजपपरिस्तरणाविसर्जनपरिसमूहनपर्युक्षणानिकृत्वा गृत्याग्नौएतच्छांतिकरणेपक्षेतत्समारोपः ततोरुद्रकलशंद
क्षिणतःस्पृशन् त्र्यंबकमितिमंत्रंशतकृत्वोजपेत् यजमानस्ययाजुषत्वादिनिमित्तकंचपूर्ववद्रुद्रैकादशिन्यादिजपमपि अत्रापिसंख्याविकल्पः
पूर्ववत् अथरुद्रकुंभनिर्ऋतिकुंभगतदेवताःपंचोपचारैःसंपूज्यभवत्प्रसादेनयजमानाभिषेकंकरिष्यइतिताःप्रार्थयेत् अस्मिन्समयेस्मृ
तिमिच्छताग्रहपूजनंकार्यम् सर्वकलशोदकंक्वचित्पात्रेआदायविनायकशांतिवत्स्वस्तिकचर्मपीठेनिर्मितेभद्रासनेउपविष्टंधृतनववस्त्रंसर्वौ
षध्यनुलिप्तांगंयजमानंतद्वामभागोपविष्टांतादृशींसापत्यांपत्नींचसर्लिंगाचार्योभिषिंचेत् कश्यपोक्तंशतच्छिद्रधारणंकृताकृतम् अभिषे
केमंत्राः अक्षीभ्यामितिषण्णांकश्यपोविवृहायक्ष्मनाशनोनुष्टुप् अभिषेकेवि० ओं अक्षीभ्यांतेना सिका० ऋचः६ त्रिभिष्ट्वंदेवेतिसप्ता
नांवसिष्ठऋषिःआद्यानांत्रयाणामग्निश्चतुर्णांविश्वेदेवाः आद्यागायत्रीद्वितीयानुष्टुप्तिस्रोगायत्र्यांत्येद्वेनुष्टुभौ अभिषेके० ओंत्रिभि
ष्ट्वंदेवसवित० ऋचः७ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्री अंत्येद्वेनुष्टुभौपंचमीवर्द्धमानासप्तमीप्रतिष्ठा अभि

षेके॰ ओं आपोहिष्ठामयो॰ ऋचः ९ आपइद्वेतिद्वयोः सप्तर्षयोविश्वेदेवाअनुष्टुप् अभिषेकेवि॰ ॐ आपइद्वाउभेषजी॰ ऋचौ २ सहस्रा
क्षेति तृचस्य प्राजापत्योयक्ष्मनाशनोयक्ष्महात्रिष्टुप् अभिषेके॰ ॐ सहस्राक्षेणशतशारदे ॰ ऋचः ३ देवस्यत्वेतित्रिभिर्याजुषैः यज्जाग्रत
इतिषण्णांप्रजापतिर्मनस्त्रिष्टुप् अभिषेके॰ ओं यज्जाग्रतो॰ ६ अथ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमाता
पित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः सप्तजिव्हश्चदेवोग्निर्मूलदोषंव्यपोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः
मूलजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंगंडांतसंभवम् योसौपाश
धरोदेवोवरुणश्चजलेश्वरः नक्रवाहः प्रचेतानोमूलोत्थाघंव्यपोहतु यासौदेवोजगत्प्राणोमारुतोमृगवाहनः प्रशामयतुमूलोत्थंदोषं
बालस्यशांतिदः योसौनिधिपतिर्देवः खड्गभृद्वाजिवाहनः मातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु योसौपशुपतिर्देवः पिनाकीवृष
वाहनः आश्लेषामूलगंडांतदोषमाशुव्यपोहतु विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदाइतिमंत्रैः स्फ-
रास्त्वामित्यादिभिश्चाभिषिंचेत् तच्छंयोः शंयुर्विश्वेदेवाः शाक्करी अभिषेके॰ ॐ तच्छंयोरावृणीमहे॰ ततोवस्त्रवेष्टितसुखाभ्यांनै
र्ऋतिकुंभाभ्यांअभिषिक्तोयजमानः शुक्लवस्त्रगंधमाल्यधरः सपत्नीकः सापत्योविभूतिधारणंकृत्वानिर्ऋतिरुद्रकलशस्थदेवताःसंपू
ज्यविसृज्यग्रहाणामुत्तरपूजांविसर्जनंचकृत्वा आचार्यादींश्चंदनादिनासंपूज्य आचार्यायसवत्सांपयस्विनींगांदद्यात् निर्ऋतिप्रतिमां

सोपस्करां तत्कलशं तथाग्रहप्रतिमाग्रहप्रीत्यर्थं दक्षिणाश्च ततो रुद्रजापिने कृष्णोनड्वान्देयः रुद्रप्रतिमाः सोपस्करास्तत्कुंभांश्च इतरे
भ्योपि यथाशक्ति दक्षिणां दद्यात् धेन्वनड्डहोरसंभवे दशकार्षापणा धेनावष्टावनडुहि स्मृता इति मूल्यं देयम् तदसंभवे यथाशक्ति दद्या
त् तत्राचार्यदत्तार्द्धं ब्रह्मणे तद्दत्तार्द्धं सदस्याय तद्दत्तार्द्धं प्रत्येकमृत्विग्भ्यो देयम् ततस्तेभ्यो मूलजननसूचितसर्वारिष्टनिवृत्तिरस्त्वित्याशिषं
गृहीत्वा प्रणम्य क्षमापयेत् ततः पायसादिना शतं तदर्द्धं दश वा ब्राह्मणान्भोजयेत् तैश्च ब्राह्मणैः सर्वशांतिपाठपूर्वकं शुक्लाशिषो देयाः यज
मानो निर्ऋतिः प्रीयतामिति तान् क्षमापयेत् तत ईश्वरार्पणं कुर्यादिति मूलशांतिः मंडलादिष्वाग्नेयमैंद्रादिति परिभाषावशात् कृणु
ष्वेति सूक्ते रक्षोहाग्निर्देवता गुणस्य विशेष्यं प्रतिसाक्षेपत्वाच्च यत्तु कैश्चिदुक्तं ऋत्विक्सूक्तानि वेत्यनुक्रमणिकोक्तेः सीरायुंजंतीत्यस्य ऋत्वि
क्सूक्तानि देवतेति तन्न सूक्ते मंत्राप्रकाश्यत्वेन सूक्तत्कपन्यासस्य सूक्तानि विषये देवतात्वद्योतनार्थत्वात् तथा च समुद्रादूर्मिरित्यं का दशाग्नेयं
जगत्यं तं सौर्यं वा पंचगव्यं वा घृतसूक्तानि वेत्यनुक्रमणिकामनुसृत्याह वेदभाष्यकारः अग्निः सूर्यो ब्गो घृतानामन्यतमा देवतेति तथा यच्चिद्धि त्वे
ति सूक्ते उच्छिष्टं चम्वोर्भरेत्येतदृग्विषया मंत्याच्चर्मप्रशंसा वेति तामनुसृत्याह सः अधिषवणचर्म देवतेति तथाश्वस्य धांग सूतामि गुर्विनिसु
क्तसूक्त गोचरशमानो द्व्यधिकाश्वस्तुतिरित्येवं रूपां तामेवानुसृत्य स एवाह अश्वस्य स्तूयमानत्वात् यातेनोच्यते सा देवतेति न्यायेनाश्वो देवते
ति ऋत्विक्सूक्ते देवतात्वे तत्तुल्यन्यायतयोक्तविषयेषु घृतसूक्तानि चर्मप्रशंसाश्वसूक्तीनामेव देवतात्वं भाष्यकारो ब्रूयान्न घृतादीनाम् किंच

पितुन्वन्नस्तुतिरित्यनुक्रमणीव्याख्यावसरे तद्भाष्यकारेणोक्तम् अन्नस्तुतिरन्नमस्य देवतेत्यर्थ इति युक्तं चैतत् यातेनोच्यते सा देवतेति अ-
नुक्रमणीपरिभाषोक्तेः तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते सैषा देवतोपपरीक्षा यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमि-
च्छन्स्तुतिं प्रयुंक्ते तद्दैवतः स मंत्रो भवतीति निरुक्ताच्च स्तुतिं प्रयुक्ते येन मंत्रेण सा प्राधान्यस्तुतिभाक् तस्य देवतेति अत्र व्याख्याद्वयेपि स्तुति-
भागेव देवता स्तुतिरिति स्फुटं प्रतीयते अत्र भाष्यं यमर्थं सिंधुकामयमान ऋषिर्यस्यां देवतायां अभिष्टुतायामार्थपत्यमर्थपतिभावमा-
त्म न इच्छन् अमुष्या देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुंक्ते तद्दैवत एव स मंत्रो भवति एतेन
लक्षणेन सर्वमंत्रेषु देवतोपलक्ष्या अथवास्यार्थस्येयं देवता दातुं समर्थेति जानीयस्तुतिं प्रयुंक्ते येन मंत्रेण सा प्राधान्यस्तुतिभाक् तस्य देवते-
ति अत्र व्याख्याद्वयेपि स्तुतिभागेव देवता न स्तुतिरिति स्फुटं प्रतीयते अत एव ऋत्विक्स्तुतिर्वेति वा शब्दो विश्वेदेव देवतार्थाक्षिप्त तत्स्तु-
त्या विकल्पार्थः वैश्वदेवं तु त्रिष्टुबंतमुदुत्यध्वं बुधः सौम्य ऋत्विक्स्तुतिर्वेति पठितो हि ग्रंथे पूर्वसूक्ते देवतात्वेनोक्ता विश्वेदेवा उदुत्यध्वमि-
ति सूक्ते ऽनुवर्तंते तु हि हवैतच्छब्दविशिष्टान्यृषि देवच्छंदांसि द्वित्रिचतुःपंचषट्सूक्तभांजीति परिभाषानुसारिणा तुशब्देन तद्द्योतमानात्
नन्वेवमन्वाधानादौ विश्वेदेवशब्दस्य ऋत्विक्शब्दस्य वा निर्देशेन भवितव्यं न कविशब्द निर्देशेनेति वाच्यम् तद्यानि नामानीति निरुक्तेन
योयं नामार्थः प्राधान्येन मंत्रे स्तुत्यत्तया प्रतीयते तन्नाम्ना निर्दिश्यमानस्यैव तस्य देवतात्वप्रतीतेः पार्वणो जुहोतीति विहित होमयो ऋषभम-

मावास्येतिमंत्रवर्णगत पूर्णमासामावास्याशब्दाभ्यामेवोद्देशस्यसर्वयाज्ञिकसंमतत्वदर्शनाच्चविधिशब्दस्यमंत्रत्वमितिन्यायेन होमविधि-
नाशब्दविशेषेणदेवतोद्देशंविधित्सतांतरंगमंत्रानुसारेणैवक्रमस्येषदेवताशब्दस्यापिनियमान्नौचित्याच्च कविधीरनाम्नोर्मेधाविनामपा
ठेतुल्येपिधीरपदार्थकविविशेषणतयाप्राप्यकृतोक्तेश्च विश्वेषांदेवानामिवार्त्विजामपिबहुवचनांतकविपदेनाभिधानसंभवाच्च प्रया-
जाधिकारपठितनिरुक्तोक्तन्यायेनदेवताविकल्पस्यध्यानफलतासंभवाच्चेत्यलम् अथाश्लेषाशांतिविधिः मानवसंहितायाम्
असंभवेतुजन्मर्क्षे अन्यस्मिन्वाशुभेदिने स्नातोऽभ्यंगादिभिस्तस्मिन्वरयेत्तुद्विजोत्तमान् विप्रवेपंचकुंभांस्तु द्व्यंवानदलाभतः देवता-
स्थापनेचैकमेकंरुद्राभिमंत्रणे मूलर्क्षोक्तप्रकारेण कुंभेनिःक्षिप्यपूजयेत् गोमयालेपितेदशेधान्याद्यैःपरिशोभिते पंकजंकारयेत्तत्र
चतुर्विंशद्दलान्वितं तंडुलैःकारयेद्यद्वारक्तपीतसितासितैः कर्णिकायांन्यसेद्व्रीहीन्स्थापयेत्तेषुकुंभकम् आकलशेष्वित्यनयाकलशस्था
पनंशुभम् इमंमेगंगेमंत्रेण पूरयेत्तीर्थवारिणा कुंभंचवस्त्रगंधाद्यैस्तत्तन्मंत्रैःप्रपूजयेत् याःफलिनीरित्यनयाक्षिपेत्रत्नौषधादिकान्
कुंभोपरिस्थपात्रेतु आश्लेषाप्रतिमांयजेत् तत्पूर्वोत्तरनक्षत्रेदक्षिणोत्तरयोर्यजेत् ऐंद्रादीशानपर्यंतमितरर्क्षाणिपूजयेत् मूलोक्तेनविधा-
नेनकुंभयोरभिमंत्रणम् रुद्रार्चारुद्रकुंभेतुपूर्ववच्छेषमाचरेत् नमोवोअस्तुसर्पेभ्यःपूजामंत्रइतीरितः सर्पारक्तस्त्रिनेत्रश्चद्विभुजःपी
तवस्त्रकः फलकाशिधरस्तीक्ष्णोदिव्याभरणभूषितः एवंध्यात्वाततोभ्यर्च्यहोमकर्मसमारभेत् कर्त्तुःशाखोक्तमार्गेण आचार्यस्याथवा

चरेत् इदंसर्पेभ्योंत्सुहुयादधिप्रत्यधिदैवतम् अष्टोत्तरशतंवापिअष्टाविंशतिमेववा मूलनक्षत्रवच्छेशेषंहोमकर्मसमाचरेत् पूर्णाहुत्यं
तकर्माणिकृत्वासंपातकंतथा कुंभेजलेषुप्रक्षिप्य अभिषेकमथाचरेत् दारपुत्रसमेतस्ययजमानस्यपूर्ववत् अभिमंत्रितकुंभाद्भिराभिषे
चनमाचरेत् तथापौराणमंत्रैश्चपल्लवैरभिषेचयेत् आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोह-
तु योसौवागीश्वरोनामाअधिदेवोबृहस्पतिः मातापित्रोःशिशोश्चैवगंडांतंसव्यपोहतु मातरःसर्वभूतानांरक्षंतुपितरःसदा सर्पन
क्षत्रजातस्यवित्तंचज्ञातिबांधवान् ततःशुक्लांबरधरोयजमानःस्वभूषितः दक्षिणाभिस्ततोविद्वान्मूलवच्चप्रतोषयेत् भक्तवद्ध-
श्चविप्रेभ्यःस्वीकुर्यादाशिषंगृही इत्यनेनविधानेनसर्वारिष्टंविनश्यति सर्पाधीशानमस्तुभ्यंनागानांचगणाधिप गृहाणार्घ्यंमयाद
त्तंसर्वारिष्टप्रशांतये मूलनक्षत्रवत्कुर्यात्सर्पखंडेस्वनामतइति अथप्रयोगः द्वादशाहेतदसंभवेजन्मर्क्षेन्यस्मिन्शुभेदिनेवा-
प्रातर्नित्यविधिंविधायतैलाभ्यंगोद्वर्तनादिनास्नातोदेशकालौसंकीर्त्यगोमुखप्रसवंकृत्वा ऽस्यशिशोराश्लेषाजननसूचितसर्वारिष्ट-
निरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंमनूक्तविधिनासग्रहमखामाश्लेषाशांतिंकरिष्येइतिसंकल्प्यगणेशपूजनादिऋत्विग्वरणांतंकुर्यात्
अभ्युत्तारणसर्षपविकिरणाद्यंतेमूलशांत्युक्तप्रकारेणकुंभपंचकेचतुःप्रस्रवणपंचवक्त्रैककुंभेवासर्ववरुणरुद्रस्यावाहनादिपूजनंवि
धायरुद्रैकादशिनीजपरक्षोहणमितिसूक्तजपांतेरुद्रकुंभोत्तरभागेगोमयेनोपलिप्तेधान्यादिभिःपरितःशोभितेशुद्धतंडुलैरक्तपीतसित

त्समदोवरुणास्त्रिष्टुप् अभिषेके॰ ॐ इदंकबेरादिस्य॰ ऋच:११ समुद्रज्येष्ठेतिमंत्राणांवसिष्ठआपस्त्रिष्टुप् अभिषेके॰ ओंसमुद्रज्येष्ठा:
सलिलस्य॰ ऋच:४ समुद्रज्येष्ठादिभिर्मंत्रै: इमंमेवरुणेत्यस्याजीगर्ति:शुनःशेपोवरुणोगायत्री अभिषे॰ ओंइमंमेवरुण॰ ऋक् द्यौ:-
शांतासादित्येनशांतेति॰ पृथिवीशांतिरंतरिक्षंशांतिरिति॰ तयाहं शांत्येतियाजुषमंत्रैश्चत्रिभिरभिषिक्तोयजमान: पत्न्यासहशुक्लवस्त्र
चंदनकुंकुमानिधृत्वारूपंरूपमितिचित्रंदेवानामितितच्चक्षुरितिमंत्रैरवलोकितमाज्यंसदक्षिणंब्राह्मणायदत्वाइंद्रंपुरोभागेस्थित्वागंधा
दिपंचोपचारै:संपूज्यआचमनतांबूलेनिवेद्यगंधपुष्पफलयुक्तमर्घ्यंनिवेदयेत् मंत्र: नमस्तेकृतनाथायनमस्तेस्तुशचीपते गृहाणा-
र्घ्यंमयादत्तंगंडदोषप्रशांतयेइति ततआचार्यायकृशीलांपयस्विनींरक्तवर्णांसवत्सांहेमशृंगादिसर्वालंकारभूषितांगांदद्यात् गोदा
नविधिना मंत्रविशेष: यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते दानेनानेनदेवेशगंडदोषंप्रशामयेति अस्यागोर्दक्षिणात्वान्नदक्षि
णांतरम् ततोष्टोत्तरशतब्राह्मणान्भोजयेत् तेभ्योयथाशक्तिदक्षिणांदत्वाप्रणिपत्यक्षमध्वंममापराधानितिक्षमाप्येंद्रंप्रार्थयेत् अज्ञा
नादथवाज्ञानाद्वैकल्याद्वाधनस्यच यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुमर्हसिइति ततोविसर्जनं आचार्यहस्तेसोपस्करांप्रतिमांदत्वाऽग्निंसं
पूज्यविभूतिंधृत्वागच्छगच्छेतितंविसृज्यज्येष्ठाशांतिकृत्कृतंयन्मयालब्धंतेनदेवेंद्रनामेश्वर:प्रीयतामिति इतिज्येष्ठाशांतिविधि:
अथव्यतीपातवैधृतिसंक्रमणशांति: शौनक: अथात:संप्रवक्ष्यामिशौनक:शांतिमुत्तमाम् वैधृतौचव्यतीपातेमहादोषेऽ

भिजायते कुमारजन्मकालेतुव्यतीपातश्चवैधृतिः संक्रमश्चरवेस्तत्रजातोदारिद्र्यकारकः दरिद्राणांमहादुःखंव्याधिपीडामहद्भयम्
अश्वियंमृत्युमाप्नोतिनाऽत्रकार्याविचारणा स्त्रीणांचशोकदुःखंचसर्वनाशकरोभवेत् शांतिर्वापुष्कलाकार्यातत्रदोषोनकश्चन गोमुख
प्रसवंकुर्याच्छांतिंकुर्यात्प्रयत्नतः जपाभिषेकदानैश्चहोमादपिविशेषतः नवग्रहमखंकुर्यात्तस्यदोषस्यशांतये प्रथमंगोमुखाज्जन्मत-
तःशांतिंसमाचरेत् ग्रहस्यपूर्वदिग्भागेगोमयेनानुलिप्यच अलंकृतेस्फदेशेतुव्रीहिराशिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्द्धंतंडुलेन
च तदर्द्धंतुतिलैःकुर्यादन्योन्योपरिकल्पयेत् द्रव्यत्रितयराशौतुअष्टपत्रंलिखेद्बुधः पुण्याहंवाचयित्वातुआचार्यंवृणुयात्पुरा आचा
रवंतंधर्मज्ञंकुलीनंचकुटुंबिनम् मंत्रतंत्रार्थतत्वज्ञंशांतिकर्मणिकोविदम् पंचांगभूषणंदद्यात्सदृवस्त्रांगुलीयकम् राशौप्रतिष्ठितंकुं
भमव्रणंकमनोहरम् तीर्थोदकेनसंगृह्यसमृदोषधिपल्लवम् सगव्यपंचरत्नंचवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेत्पात्रंसूक्ष्मवस्त्रेण
संप्लुतम् प्रतिमांस्थापयेन्द्धीमान्साधिप्रत्यधिदेवताम् चंद्रादित्याकृतीपार्श्वेमध्येवैधृतिमर्चयेत् वैधृतिंतद्देवतांरुद्रम् एवमेवव्य
तीपातशांतौसंक्रमणस्यच भानोरुत्तरतोरुद्रमग्निंदक्षिणतोयजेत् निष्कमात्रेणवार्द्धेनपादेनापिस्वशक्तितः प्रतिमांकारयेद्धीमान्त
त्तल्लक्षणलक्षिताम् प्रतिमापूजनार्थायवस्त्रयुग्मंनिवेदयेत् अधिदेवोभवेत्सूर्यश्चंद्रःप्रत्यधिदेवतम् ततोव्याहृतिपूर्वेणतत्त-
न्मंत्रेणपूजयेत् त्र्यंबकेनमंत्रेणप्रधानप्रतिमांयजेत् उत्सूर्यइतिमंत्रेणसूर्यपूजांसमाचरेत् आप्यायस्वेतिमंत्रेणासोमपूजांसमा

चरेत् उपचारैःषोडशभिर्यद्वापंचोपचारकैः अर्चित्वागंधपुष्पाद्यैःफलैर्नैवेद्यमर्पयेत् मृत्युंजयेनमंत्रेण प्रधानप्रतिमांस्पृशेत्
अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा अष्टाविंशतिवारंवापूजांतेचस्वशक्तितः सर्वसौरंप्रजाप्याथसोमेथसोममंत्रतःआनोभद्रेति
सूक्तंचभद्राअग्नेश्चसूक्तकम् जपेत्तुपौरुषंसूक्तंत्रैयंबकमतःपरम् कुंभंस्पृष्ट्वाचतुर्दिक्षुजपंकुर्यु स्तथार्त्विजः कुंभस्यपश्चिमे
देशेस्थंडिलेग्निंप्रकल्पयेत् अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा अष्टाविंशतिवाकुर्यात्स्वस्यशक्त्यानुसारतः मृत्युंजयेनमंत्रेण
तिलहोमंसमाचरेत् ततःस्विष्टकृतंहुत्वाअभिषेकंतुकारयेत् समुद्रज्येष्ठासूक्तेनआपोहिष्ठात्रृचेनच अक्षीभ्यामितिसूक्तेनपाव
मानीभिरेवच त्रैयंबकेण उत्सूर्यआप्यायस्वेतिमंत्रतः सुरास्त्वामितिमंत्रैश्च अभिषेकंसमाचरेत् अभिषेकाप्लुतंवस्त्र माचार्या
यनिवेदयेत् श्वेतवस्त्रधरोभूत्वाभूषणाद्यैरलंकृतः यजमानस्त्रियायुक्तआज्यावेक्षणमाचरेत् आचार्यंपूजयेद्भक्त्यावस्त्रहेमांगु
लीयकैः गोदानंवस्त्रदानंचस्वर्णदानंविशेषतः तद्दोषशमनार्थायआचार्यायप्रदापयेत् प्रच्छादनपटंदद्यात्ततःशांतिर्भवेदिति
जापकेभ्योब्राह्मणेभ्योदक्षिणाःप्रतिपादयेत् दीनांधकृपणेभ्यश्चप्रदद्याद्भूरिदक्षिणाम् ब्राह्मणान्शतसंख्याकान्मिष्टान्नैर्भोज-
येच्चतान् तानाचार्यऋत्विजश्चेत्यर्थः बंधुभिःसहभुंजीत यथाविभवसारतः एवंयःकुरुतेमर्त्योनैवदुःखमवाप्नुयात् आयुरारो
ग्यमैश्वर्यंमातापित्रोश्शिशोरपि सर्वदुःखनिवृत्तिश्चपुत्रपौत्रप्रवर्द्धनम् सर्वान्कामानवाप्नोतिसुखीभूत्वाचिरंवसेदिति अथप्र-

योगः गोसुखप्रसवमुक्तविधिना कृत्वा देशकालौ संकीर्त्यास्य शिशोर्व्यतीपातजन्मसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्री-
त्यर्थं शांतिं करिष्य इति संकल्प्य गणेशपूजनाद्युक्तलक्षणाचार्यवरणं कुर्यात् वृतायतस्मै पट्टवस्त्रयुगं कुंडलयुगमंगुलीयकं च दद्यात्
आचार्यो यदत्र संस्थितमिति सर्षपविकिरणं शर्ऋचा वद्इति पंचगव्येन आपोहिष्ठेत्यद्भिश्च गृहं पूर्वदिग्भागं प्रोक्ष्य स्वस्त्ययनं तार्क्ष्यमिति मंत्राभ्यां
मार्ष्य तत्रैव गोमयलिप्ते रंगवल्याद्यलंकृते समदेशे मही द्यौरिति भुवमभिमृश्य ओषधयः समिति पंचद्रोणपरिमितव्रीहिराशिं कृत्वा तदु
परि सार्द्धद्रोणद्वयमित तंडुलराशिं तदुपरि सपादद्रोणमित तिलराशिं च कृत्वा तत्राष्टदलं कृत्वा आकलशेष्वितिति तत्राव्रणं कुंभं प्रतिष्ठाप्य
इमं मे गंगे इति तीर्थोदकेनापूर्य स्योना पृथिवीति सप्तमृदः या औषधीरिति सर्वौषधीः अश्वत्थे व इति पंचपल्लवान् गायत्र्या गंधद्वारामाप्या
यस्व दधिक्राव्णस्तेजोसि शुक्रमसीति पंचगव्यानि गंधद्वारामिति गंधं सहिरत्नानीति पंचरत्नानि तत्र निक्षिप्य वस्त्रयुग्मेनावेष्ट्य तदुपरि-
सूक्ष्मवस्त्रयुतं पूर्णपात्रं पूर्णादर्वीति निधाय तदुपरि निष्क तदर्द्ध तदर्द्धान्यतरमानेन हेमनिर्मितां सूर्यप्रतिमां निधाय तत्र सूर्यमावाहनाद्युपचा
रैः पूजयेत् व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती उत्सूर्य इति मंत्रस्य मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप् पूजने वि॰ ॐ भूर्भुवः
स्वः उत्सूर्यो बृहदर्चींषि॰ ऋक् १ तद्दक्षिणतोग्निमावाहयेत् अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री अग्निपूजने॰ ओं भूर्भुवः स्वः अग्निं दूतं॰
ऋक् उत्तरतो रुद्रमावाहयेत् त्र्यंबकं वसिष्ठो रुद्रोनुष्टुप् रुद्रपू॰ ॐ भूर्भुवः स्वः त्र्यंबकं यजा॰ ऋक् एवमेव संक्रांतिशांतौ संक्रांतिशां

तिंकरिष्येइतिसंकल्पेविशेषः व्यतीपातसंक्रमणयो र्जन्मनितुव्यतीपातसंक्रांतिशांतीतंत्रेणकरिष्येइतिसंकल्पः तिस्रोदेवताःषो
डशोपचारैः वस्त्रयुग्मसहितैः पंचोपचारैर्वासंपूज्यगंधपुष्पाद्यर्चितफलनैवेद्यंसमर्प्यप्रधानप्रतिमांस्पृशन्सर्वसौरमंत्रान्जपेत् उदुत्य
मितित्रयोदशर्चस्यसूक्तस्यकण्वपुत्रःप्रस्कण्वोनवाद्यागायत्र्योंत्याश्चतस्रोनुष्टुभः चित्रंदेवानामितिषळर्चस्यसूक्तस्यआंगिरसःकुत्स
स्त्रिष्टुप् इदंमित्रमितिद्वयोरौचथ्योदीर्घतमास्त्रिष्टुप् हंसःशुचिषदित्यस्यगौतमपुत्रोवामदेवोजगती यत्त्वासूर्येत्यस्यात्रिरनुष्टुप् य
दद्यसूर्येत्येकस्याउत्सूर्यइतितिसृणां उद्घेतीतिसार्द्धचतसृणां उदुत्यद्दर्शतमितिति[illegible]णांमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप् उदुत्यद्दर्शतमिति
बृहती शीर्ष्णःशीर्ष्णःसतोबृहतीतच्चक्षुरितिपुरउष्णिक् बण्महाँअसीतिद्वयोः भृगुपुत्रोजमदग्निःपूर्वाबृहती उत्तरासतोबृहती न
मोमित्रस्येतिद्वादशर्चस्यसूक्तस्यसूर्योभितपाःसूर्योजगती दशमीत्रिष्टुप् सूर्योनोदिवइतिपंचर्चस्यसूक्तस्यसूर्यपुत्रश्चक्षुर्गायत्री
विभ्राड्बृहदितिचतसृणांसूर्यपुत्रोविभ्राड्जगती विभ्राजमितिप्रस्तारपंक्तिः आयंगौरितितृचस्यसार्पराज्ञीगायत्री सर्वेषांसूर्योदे
वता जपेवि॰ ततोरुद्रप्रतिमांस्पृशन्मृत्युंजयमंत्रमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवारंवाजपेत् ततश्चत्वारऋत्विजश्चतुर्दि
क्षुकुंभंस्पृष्ट्वाक्रमेणसूक्तानिजपेयुः पूर्वस्याम् आनोभद्राइतिसूक्तस्यराहूगणोगोतमऋषिः विश्वेदेवादेवता आद्याःपंचसप्तमी-
चजगत्यः षष्ठीविराट्स्थाना शेषास्त्रिष्टुभः जपेवि॰ ॐ आनोभद्राः॰ ऋचः१५ दक्षिणस्याम् भद्राअग्नेरितिद्वादशर्चस्यवाध्र्यश्वः

कुमित्रऋषिः अग्निर्देवता आद्येद्वेजगत्यौ अंत्यास्त्रिष्टुभः जपेवि॰ ॐ भद्रा अग्नेर्वध्र्यश्वस्य॰ ऋचः १५ प्रतीच्यांसहस्रशीर्षेतिषोडशर्चस्यसू
क्तस्य नारायणऋषिः पुरुषोदेवता जपेवि॰ ॐ सहस्रशीर्षा॰ ऋचः १६ उत्तरस्याम् त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् जपेवि॰ ॐ त्र्यंबकंयजा॰
अथकुंभपश्चिमदेशेऽग्निंस्थंडिलेस्वगृह्योक्तविधिनाप्रतिष्ठाप्यकुंभस्योत्तरतोग्रहाणामावाहनादिपूजांकृत्वातदीशान्यांकलशस्थापनंकृ
त्वाऽग्नेःपश्चिमतउपविश्यान्वादध्यात् चक्षुषीआज्येनेत्यंतेऽत्रप्रधानम् आदित्यादिग्रहांश्चिकीर्षितसंख्याकाभिः अर्कादिजातीयस
मिच्चर्वाज्याहुतिभिः ग्रहपीठदेवताःएकैकसंख्याभिःसमिच्चर्वाज्याहुतिभिः सूर्यंप्रत्येकमष्टोत्तरशतसंख्याभिःसमिदाज्यचर्वाहुतिभिः
अग्निंरुद्रंचप्रत्येकमष्टाविंशतिसंख्याभिःस्तदाहुतिभिः मृत्युंजयंअष्टोत्तरशतसंख्याभिस्तिलाहुतिभिः शेषेणेत्यादि॰ प्रायश्चित्ताहु
त्यंतेबलिदानंततःपूर्णाहुतिःप्रणीताविमोकःसंस्थाजपेनोपस्थानंच ततोधृतनूतनवस्त्रयोर्दंपत्योःसबालयोरभिषेकः समुद्रज्येष्ठा-
इतिसूक्तस्यवसिष्ठआपस्त्रिष्टुप् अभिषेके॰ आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री अभिषेके॰ अक्षीभ्यांतइतिषण्णांवि
विहायक्ष्महानुष्टुप् अभिषेके॰ स्वादिष्ठयेतिपावमानीनांमधुच्छंदाःपवमानसोमोगायत्री अभिषेके॰ उत्सूर्यो॰ अग्निंदूतं॰ त्र्यंबकं॰
पूजाकालेउक्तमेषामृष्यादि सुरास्त्वामभिषिंचंत्वित्यादिनापौराणमंत्रेणचाभिषेकांतेऽभिषेकवासआचार्यायसमर्प्पयेत्सपत्नीकः-
श्वेतवस्त्रचंदनादिधृत्वाभूषणमालादिनालंकृत्य आज्यमवेक्ष्यतत्पात्रंसदक्षिणंब्राह्मणायदत्वावस्त्रहेमांगुलीयकैःआचार्यंसंपूज्य-

व्यतीपातजननदोषशांत्यर्थं गोवस्त्रस्वर्णानि तुभ्यं संप्रददे इति आचार्याय तानि दत्वा तदर्थं प्रच्छादनपटं तथैव दद्यात् ऋत्विग्भ्यो यथाश
क्ति दक्षिणां दत्वा दीनांधकृपणेभ्यो भूयसीं दत्वा शतं ब्राह्मणान् ऋत्विग्भिः सह मिष्टान्नैर्भोजयित्वा संपूर्णतां वाचयित्वा कर्मेश्वरार्पणं कृत्वा-
बंधुभिः सह भुंजीतेति व्यतीपातसंक्रांतिशांतिः वैधृतिशांतौ तु संकल्पे वैधृते रुद्रेरवः आवाहनमध्ये सव्याहृतिकेन त्र्यंबकमिति मं
त्रेण रुद्रमावाह्य दक्षिणत उत्सूर्यो बृहदर्चींषीति सूर्यं उत्तरतः आप्यायस्वेति सोममावाह्य पूजनम् रुद्रप्रतिमां स्पृष्ट्वा मृत्युंजयमंत्रमष्टोत्त-
रसाहस्रमष्टोत्तरशतमष्टाविंशतिवारं वा जपः सूर्यप्रतिमां स्पृष्ट्वा सर्वसौरजपः सोमप्रतिमां स्पृष्ट्वा आप्यायस्वेति जपः अन्वाधाने रु
द्रं समिच्चर्वाज्यैः प्रत्येकमष्टोत्तरशतसंख्याहुतिभिः सूर्यसोमौ प्रत्येकमष्टाविंशतिसंख्याभिस्तदाहुतिभिः मृत्युंजयमष्टोत्तरसहस्रशत
विंशत्यन्यतरसंख्याभिस्तिलाहुतिभिः शेषेण त्यादि तथैव होमः कार्य इति विशेषः इति वैधृतिशांतिः अथैकनक्षत्रजननशांतिः
वृद्धगार्ग्यः एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः तद्दोषनाशाय तदा प्रशस्तां शांतिं च
कुर्यादभिषेचनं च संपूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपम् तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु शुभर्क्षे शुभवारे च चं
द्रताराबलान्विते रिक्ताविष्टिविवर्जे तु प्रारभेद्विभवे सुधीः आचार्यं वरयेत्पूर्वं चतुरश्च द्विजोत्तमान् पुण्याहं वाचयित्वा तु शांतिकर्म समा
रभेत् अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः तत्तद्दक्षोक्तमंत्रेण अर्चयेत्कलशोपरि रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत् स्वशाखो-

क्तेनमार्गेणकुर्यादग्निमुखंततः अनेनैवतुमंत्रेणजुहुनेदष्टोत्तरंशतम् प्रत्येकंसमिदन्नाज्यैःप्रायश्चित्तांतमेवच अभिषेकंततःकुर्यादाचा
र्यःपितृपुत्रयोः वस्त्रालंकारगोदानैराचार्यंपूजयेत्पुनः ऋत्विजांदक्षिणांदत्वामाषत्रयसुवर्णकम् देवताप्रतिमादानंधान्यवस्त्रादिभिः
सह यानशय्यासनादीनिदद्यात्तद्दोषशांतये भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितइति भ्रात्रोःपितृपुत्रयोरित्यत्रपुंस्त्वमविव-
क्षितम् निमित्तविशेषणत्वात् एकोदरयोर्जन्यजनकयोश्चैकनक्षत्रजननेशांतिरित्याशयः पूर्वविधित्सितपुण्याहवाचनात् अतएव
वाचयित्वेतिआनंतर्यार्थकम् नक्षत्रप्रतिमांतद्देवताप्रतिमांवा नक्षत्रदेवतापूज्यात्वधिप्रत्यधिपूर्वकमितिज्योतिर्निबंधात् तत्तदृक्षोक्त
मंत्राःअग्निर्नःपातुकृत्तिकाइत्यादयः नक्षत्रतद्देवतोभयप्रकाशकत्वात्पक्षद्वयेपिविनियोगार्हाः अथप्रयोगः उक्तसमयेजनक
नक्षत्रोत्पत्तौगोमुखप्रवसवंकृत्वा एकोदरनक्षत्रोत्पत्तौतमकृत्वा देशकालौसंकीर्त्य अस्यशिशोःपित्रैकनक्षत्रोत्पत्तिसूचितसर्वारिष्टप-
रिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिमभिषेकंपूजितनक्षत्रप्रतिमाग्रेयथाशक्तिदानंचकरिष्येइतिसंकल्प्यगणपतिंपूज्यआचार्यंचतु
रऋत्विजश्चवृत्वापुण्याहंवाचयीत भ्रात्रेकनक्षत्रेत्याद्यूहेनान्यत्रसंकल्पः ततआचार्योयदत्रसंस्थितमितिसर्षपविकिरणंप्रोक्षणप्रा
र्थनानिकृत्वास्थंडिलादैशान्यांकलशंमहीद्यौरित्यादिनास्थाप्यतत्ररक्तवस्त्राच्छादिते नक्षत्रतद्देवतान्यतरप्रतिमांकृताग्न्युत्तारणां
तन्मंत्रेणावाहनाद्युपचारैःपूजयेत् वस्त्रार्पणेतद्युग्ममर्पयेत् पूजांतेग्निंध्यात्वाहुतिभिःप्रतिष्ठाप्यान्वाधानेचक्षुषीआज्येनेत्यंतेऽदोन

क्षत्रमिमांदेवतांवाप्रत्येकमष्टोत्तरशतसंख्याभिः समिच्चर्वाज्याहुतिभिः शेषेणेत्यादिप्रायश्चित्तहोमांतेप्रणीताविमोकादि आचार्यः
कलशोदकेनतयोरभिषेकंकुर्यात्पित्रोरेकनक्षत्रजन्म ततः पूजितप्रतिमाद्येआचार्यायवस्त्रालंकारगांदद्यात् ज्योतिर्निबंधोक्तत्यास्व
र्णरूप्यमयौहरिहरौसंपूज्यतौवादद्यात् विविधस्याऽस्यविश्वस्यपितरौविश्वतोमुखौ प्रीयेतांमूर्त्तिदानेनदेवौहरिहरावुभाविति माष
त्रयस्वर्णमूर्त्ति गयोंदत्वा उत्तरपूजाविसर्जनेआचार्यहस्तेप्रतिमाप्रतिपादनंधान्यवस्त्रादिभिः सहयानशय्यासनादीनांब्राह्म-
णांतरेभ्योदानंकृत्वातैः सहाचार्यऋत्विजोभोजयित्वापूर्णतांवाचयित्वाकर्मेश्वरार्पणंकुर्यादिति इत्येकनक्षत्रजननशांतिः
अथग्रहणजननशांतिः पारिजाते ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदिजायते शांतिंतेषांप्रवक्ष्यामिनराणांहितकाम्यया यस्मि
न्नृक्षेविशेषेणग्रहणंसंप्रजायते तदृक्षाधिपतेरूपंस्वर्णेनप्रकल्पयेत् यथाशक्त्यनुसारेणवित्तशाठ्यंनकारयेत् सूर्यग्रहे-
सूर्यरूपंस्वर्णेनविशेषतः चंद्रंचंद्रग्रहेधीमान्रजतेनविशेषतः राहुरूपंप्रकुर्वीतनागेनैवविचक्षणः शुचौदेशेप्रयत्नेनगोम
येनप्रलेपयेत् नागेनसीसेन तस्योपरिन्यसेद्धीमान्नववस्त्रंसुशोभनम् त्रयाणांचैवरूपाणांस्थापनंतत्रकारयेत् रक्ताक्ष
तंरक्तगंधंरक्तपुष्पांबराणिच सूर्यग्रहेप्रदातव्यंसूर्यप्रीतिकरंचतत् श्वेतवस्त्रंश्वेतमाल्यंश्वेतगंधाक्षतादिभिः चंद्रग्रहेप्रदात-

व्यंचंद्रप्रीतिकरंपरम् राहवेचैवदातव्यंकृष्णपुष्पांबराणिच दद्यान्नक्षत्रनाथेभ्यः श्वेतगंधानुलेपनम् सूर्यंसंपूजयेद्धीमानाकृष्णे
नेतिमंत्रतः चंद्रग्रहेतथासम्यगाप्यायस्वेतिमंत्रतः स्वर्भानोरितिमंत्रेणसहुंयत्नेनपूजयेत् एवंसंपूज्यधीमान्समिद्भिश्चार्कसंभवैः
चंद्रग्रहेचपालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धीमान्राहोःसंप्रीणनायच समिद्भिर्जलवृक्षस्यभैशायजुहुयाद्बुधः भेशा
यनक्षत्राधिपतये आज्येनचरुणाचैवतिलैश्चजुहुयात्ततः पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः जलैरोषधिकल्कैश्चसहितैःक
लशोदकैः अभिषेकंप्रकुर्वीतयजमानंप्रयत्नतः मंत्रैर्वरुणदेवत्यैरापोहिष्ठादिभिस्त्रिभिः इमंमेगंगेपितरस्तत्वायामीतिमंत्रकैः
अभिषेकेनिवृत्तेतुयजमानःसमाहितः आचार्यंपूजयेत्सम्यक्छांतोनियतेंद्रियः तस्मैदद्यात्प्रयत्नेनभक्त्याप्रतिकृतित्रयम् दक्षि
णाभिश्चसंयुक्तंयथाशक्त्यनुसारतः ब्राह्मणान्भोजयित्वातुप्रणिपत्यक्षमापयेत् तेभ्योपिदक्षिणांदद्याद्यजमानःसमाहितः
अनेनविधिनाशांतिंकृत्वासम्यग्विशेषतः अकालमृत्युंशोकंचव्याधिपीडांचनाप्नुयात् सौख्यंसौमनसंनित्यंसौभाग्यंलभतेनरः
इत्थंग्रहणजातानांसर्वारिष्टविनाशनम् कथितंभार्गवेणेदंशौनकायमहात्मने अथप्रयोगः सूर्यग्रहणेप्रसूतौतत्कालस्थि
तनक्षत्रस्ययाधिष्ठात्र्यग्न्यादिदेवतातस्याःसूर्यस्यचयथाशक्तिहेम्नाप्रतिमेविधायराहोःसीसेननागाकृतिंकृत्वाशौचांतेममभार्या-
याःसूर्यग्रहणकालीनप्रसूतिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशांतिंकरिष्येइतिसंकल्प्यगणेशपू-

जनाद्याचार्यवरणपूजांतंकुर्यात् चंद्रग्रहेतुसूर्यस्थानेराजतंचंद्रबिंबंकुर्यात् अन्यद्वयंपूर्ववत् संकल्पेसूर्यस्थानेचंद्रपदप्रयोगः त
त आचार्योयदत्रेत्याद्यंतेशुचिदेशंगोमयेनोपलिप्यतत्रनवंसदशंक्षालितंश्वेतवस्त्रंप्रसार्यतत्रोक्तदेवतानांरूपत्रयंनिधाय आकृष्णेन
हिरण्यस्तूपःसवितात्रिष्टुप् पूजनेवि॰ ॐ आकृष्णेनरज॰ मध्येसूर्यरक्तवर्णैर्वस्त्रगंधाक्षतपुष्पैर्धूपदीपादिभिश्चपूजयेत् तद्दक्षिण
तोराहुंकृष्णवर्णैर्गंधादिभिर्धूपादिभिश्चपूजयेत् स्वर्भानोरित्यस्यात्रिःस्वर्भानुस्त्रिष्टुप् राहुपूजने॰ॐ स्वर्भानोरधयदिं॰ नक्षत्रदेव
तामग्निर्नःपातुकृत्तिकाइतितैत्तिरीयपठिततत्तद्वाक्याष्टकेनपूजयेत् सूर्यस्योत्तरतः चंद्रग्रहेतुमध्येचंद्रपूजनम् आप्यायस्वगो
तमःसोमोगायत्री चंद्रपूजनेवि॰ ॐ आप्यायस्व॰ इतिमंत्रेण श्वेतगंधादिभिर्धूपादिभिश्चेतिविशेषः अन्यदेवतयोःपूजनंपूर्ववत्
ततोऽग्निस्थापनंग्रहपूजाकलशस्थापनांतंकृत्वाऽन्वाधानंकुर्यात् चक्षुषीआज्येनेत्यंतेग्रहान्वाधानंकृत्वा सवितारंअर्कसमिदाज्य
चरुतिलानांप्रत्येकमष्टोत्तरशताहुतिभिः स्वर्भानुंदूर्वासहिताज्यादीनांतावतीभिराहुतिभिः नक्षत्रदेवतामग्निंजलवृक्षसमित्सहिता-
ज्यादीनां तावतीभिराहुतिभिःशेषेणेत्यादि चंद्रग्रहे अर्कस्थानेचंद्रस्यार्कसमित्स्थानेपालाशसमिधांनिर्देशः गृहसिद्धान्नस्यपर्य-
ग्निकरणादि प्रधानान्वाधानंत्यागः प्रायश्चित्तांतेबलिपूर्णाहुतीसंस्थाजपांतेपंचगव्यपंचरत्नपंचत्वक्पंचपल्लवैरोषधिकल्कैश्चमिश्रि
तलौकिकजलैर्ग्रहकलशोदकैश्चसहितैरभिषेकः आपोहिष्ठेतितृचस्यसिंधुद्वीपआपोगायत्री अभिषेके॰ इमंमेगंगेइतिसिंधुक्षित्प्रैय्य

मेधोनद्योजगती पितरःपितामहाःपरेवरेइतियाजुषमंत्रेण तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् अभिषेके॰ अभिषेकांतेआचा
र्यंसंपूज्यतस्मैप्रतिमात्रयंदक्षिणांचदद्यात् ततोग्रहाणांपूजनविसर्जनेप्रतिमाप्रतिपादनंब्राह्मणभोजनसंकल्पश्चेतिग्रहणशांतिः
पारिजाते अश्विनीमघमूलादौत्रिषट्कनवनाडिकाः रेवतीसार्पशाक्रांतेमासाश्वऋतुसायकाः अश्विनीमघमूलादौनाडिकाद्वि
तयंतथा रेवतीसार्पशाक्रांतेनाडिकाद्वयमेवहि अश्विनीमघमूलानांपूर्वार्द्धेबाध्यतेपिता पूषाहिशाक्रपश्चार्द्धेजननीबाध्यतेशिशोः
पूषारेवती अहिराश्लेषा शाक्रंज्येष्ठा पितृप्रश्चदिवाजातोरात्रिजातस्तुमातृहा दिवाजातोदिवागंडांतेजातइतियावत् आत्मघ्नः
संध्ययोर्जातोनास्तिगंडेनिरामयः सर्वेषांगंडजातानांपरित्यागोविधीयते वर्जयेद्दर्शनंश्चावत्तत्त्वषाण्मासिकंभवेत् तच्चवर्जनम् न-
स्यशांतिंप्रवक्ष्यामिसोममंत्रेणभक्तिमान् कांस्यपात्रंप्रकुर्वीतपलैःषोडशभिर्नवम् अष्टाभिश्चचतुर्भिर्वाद्वाभ्यांवाशोभनंतथा
तन्मध्येपायसेशंखेनवनीतेनपूरिते राजतंचंद्रमर्चेत्तसितपुष्पसहस्रकैः दैवज्ञःक्षौमवासास्तुसितपुष्पांबरार्चितः सोमोहमिति
संचिंत्यपूजांकुर्यादतंद्रितः जपेत्सहस्रकंमंत्रंश्रद्दधानःसमाहितः आप्यायस्वेतिमंत्रेणपूजांकुर्यात्समाहितः दद्याद्वैदक्षिणामि-
ष्टांगंडदोषप्रशांतये शुक्लंवागीश्वरंचैवताम्रपात्रसमन्वितम् गंडदोषप्रशांत्यर्थंदद्याद्वेदविदेशुचिः ज्योतिर्निबंधे कुंकुमंचंद
नंकुष्ठंगोरोचनमथापिच चूतपर्णेषुकुंभेषुचतुर्षुप्रक्षिपेत्क्रमात् सहस्राक्षेणमंत्रेणबालकंस्नापयेन्नरः पितृयुक्तंदिवाजातंमातृयु

क्तं तु रात्रिजम् स्नापयेसितृमातृभ्यां संध्ययोरुभयोरपि कांस्यपात्रं घृतपूर्णं गंडदोषोपशांतये सक्षीरं मौक्तिकं शंखं वंशं श्वेतवस्त्रयुगं शुभं यजुर्वेदविदे विद्याद्गंडदोषापनुत्तये दद्याद्धेनुं हिरण्यं च ग्रहांश्चापि प्रपूजयेत् आयुर्हृत्थिकरं जस्त्वा कुर्याद्ब्राह्मणतर्पणमिति अत्राश्विन्यादिभागे त्र्यादिसंख्या रेवत्याद्यंत्यभागे द्वादशादिसंख्याघटिका दुष्टाः तत्तदाद्यंत्यभागस्थे द्वे द्वे घटिके दुष्टतरे अश्विन्यादिभागो दिवा रेवत्याद्यंत्यभागो रात्रौ दुष्टतमौ तत्रापि द्वे घटिके ति दुष्टे अत एव निमित्ततारतम्येन नैमित्तिकतारतम्यं कांस्यपात्रपरिमाणचतुष्टयोपन्यासेन सूचितम् अत एव चंद्रवागीश्वरप्रतिमादावपि कर्षादिपरिमाणतारतम्य सूत्र्यम् अथ प्रयोगः षण्मासोत्तरमेकादशे वाहनि प्रथमतो गोप्रसवं कृत्वा देशकालौ संकीर्त्य ममाऽस्य शिशोरेवत्यश्विनीसंध्यात्मकगंडांतजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं नक्षत्रगंडांतशांतिं करिष्ये इति संकल्प्य गणेशपूजनादि यजुर्वेदविद्वेदज्ञाचार्यर्त्विग्वरणं तं कुर्यात् ततस्तं चंदनशुक्लमाल्यैः क्षौमशुक्लवासोभ्यां पूजयेत् तत आचार्यो निर्मितस्यापि निमित्तानुसारिपरिमाणकांस्यपात्रस्य-पुनर्निर्माणमाप्यायस्वेति मंत्रेण कुर्याच्चंद्रप्रतिमाग्न्युत्तारणं च ततोपदत्रेति सर्षपविकिरणादिना भूसंस्कारं कृत्वा उपलिप्ते देशे कांस्यपात्रे पायसं पयो वा निक्षिप्य तत्र नवनीतपूर्णं शंखं निधाय तत्र राजतं चंद्रबिंबं स्थापयित्वा सोमो हमिति ध्यानपूर्वकं समाहितचेता आप्यायस्वेति मंत्रेणावाहनादिषोडशोपचारैस्तत्र चंद्रपूजनं कुर्यात् तत्र श्वेतं सदशं वस्त्रद्वयं समर्पणीयं पुष्पाणि श्वेतानि सहस्रमर्पणी

यानिमौक्तिकंदक्षिणातदसंभवेद्दृष्टमन्यत् पूजांतेतमेवमंत्रंसविश्वासंचंद्रंध्यायन् सहस्रंसप्रणवमृष्यादिस्मरणपूर्वकंजपेत् तदुत्त
रतस्ताम्रकलशंमहीद्यौरित्यादिविधिनास्थापयित्वातत्ररजतप्रतिमायांबृहस्पतिमंत्रेणवागीश्वरंसंपूज्यतदुत्तरतःक्रमेणतेनैवविधि
नानिहितकुंभचतुष्टये अश्वत्थेवोनिषदनमित्याम्रपल्लवप्रक्षेपणंकृत्वाचतुर्षुक्रमेणदूर्वाश्वेतानिकुंकुमचंदनकुष्ठगोरोचनानिनिक्षिपेत् ते
षुवरुणंपूजयेत् ततःपश्चिमदेशेस्थंडिलाद्यग्निप्रतिष्ठापनांतंकृत्वा स्थापितकलशोत्तरभागेग्रहावाहनादिवरुणपूजांतंकृत्वाऽन्वाधा
नादिग्रहमखवत्पूर्णाहुत्यंतंकुर्यात् अभिषेककालेवारुणकलशचतुष्टयस्थोदकेनदिवागंडांतजातंबालंपित्रासहरात्रिजातंमात्रास-
हसंध्ययोर्जातमुभाभ्यांसहाभिषिंचेत् सहस्राक्षेणेतिमंत्रस्ययक्ष्मनाशनःप्राजापत्यइंद्रस्त्रिष्टुप् अभिषेकेवि० ॐ सहस्राक्षे-
ण० ऋक् १ ततःसर्वकलशोदकैः समुद्रज्येष्ठाइत्यादिभिःसुरास्त्वामित्यादिभिर्मंत्रैश्चाभिषेकांतेसुस्नातःसपत्नीकः कर्ताधृतश्वेतचंद
नादिर्विभूतिधारणंकृत्वा आचार्यायशंखदानंकुर्यात् इमंसचंद्रंशंखंसवस्त्रयुगंसमौक्तिकंनवनीताद्युपस्करसहितंगंडदोषापनुत्त
येदैवज्ञाययजुर्वेदविदेतुभ्यमहंसंप्रददइति ततसांगतासिद्ध्यर्थंसहिरण्यांधेनुंदद्यात् ततोवागीश्वरंताम्रपात्रसहितंतुभ्यंगंडदोषशां
त्यर्थंसंप्रददइतिबृहस्पतिप्रतिमादानंतदंगत्वेनयथाशक्तिदक्षिणादानंच ततःस्थापितेतरदेवतानांउत्तरपूजापूर्वकंविसर्जनमाचार्यह
स्तेप्रतिपादनंच ततःसहस्राक्षेणेतिमंत्रस्यायुर्वृद्ध्यर्थंयथाशक्तिजपोदशावरब्राह्मणभोजनंच इतिनक्षत्रगंडांतशांतिः

अथतिथ्यादिगंडांतशांतिः पारिजातेगार्ग्यः अभुक्तेतरजातस्यसूतकांत्यदिनेथवा शांतिंशुभेऽह्निवाकुर्यात्तावत्पुत्रंनलोक
येत् तिथिगंडेत्वनड्वाहंनक्षत्रेधेनुरुच्यते कांचनंलग्नगंडेतुगंडदोषोविनश्यति आद्यभागेपितुर्गंडेत्रयाणामभिषेचनम् मातापित्रोः
शिशोश्चेत्यर्थः इतरत्रशिशोर्मातुरभिषेकंकारयेत् द्वयोरेवेत्यर्थः उत्तरेतिलपात्रंस्यात्पुष्येगोदानमुच्यते अजाप्रदानंत्वाष्ट्रेच पूर्वाषा
ढेचकांचनम् उत्तरातिष्यचित्रर्क्षेपूर्वाषाढोद्भवस्यच कुर्याच्छांतिंप्रयत्नेननक्षत्राकारजंबुधः सुवर्णेनतदर्धेनयथावित्तानुसारतः
नक्षत्राधिपतेरूपंकृत्वावस्त्रद्वयान्वितम् वरुणस्यार्चनंकार्यंस्वस्तिवाचनपूर्वकम् सर्वौषधींचरत्नानिमृत्त्वक्पल्लवसंयुतम् प्रक्षिप्ये-
तिशेषः पूजांतेसमिदन्नाज्यैर्होमंतिलयवैस्तथा ततःपूर्णाहुतिंहुत्वावेदाध्यायिकुटुंबिने उत्तराप्रथमेपादेतिलपात्रंतथैवच तिष्येतु
गांसवत्सांचसुशीलांचपयस्विनीम् अजांचित्रासुवैदद्यात्पूर्वाषाढेतुकांचनम् यवांश्चव्रीहीन्माषांश्चतिलमुद्गांश्चदापयेत् यथावि-
त्तानुसारेणकुर्याद्ब्राह्मणभोजनम् पितुरायुष्यसिद्ध्यर्थंशांतिरत्रविधीयते एवंयःकुरुतेनूनंशांतिकर्मसमाहितः नदोषैर्लिप्यतेनूनं
पद्मपत्रमिवांभसेति तिथिलग्नगंडांतलक्षणंज्योतिर्निबंधे पूर्णानंदाख्ययोस्तिथ्योःसंधिनाडीद्वयंतथा गंडांतंमृत्युदंजन्म-
यात्रोद्वाहव्रतादिषु कुलीरसिंहयोःकीटचापयोर्मीनमेषयोः गंडांतमंतरालंस्याद्घटिकार्धंमृतिप्रदमिति पूर्णाःपंचमीदशमीपंच-
दश्यः नंदाएतदुत्तराःषष्ठ्याद्याः कुलीरःकर्कः कीटोवृश्चिकः चापंधनुः उत्तरादीनांनिषिद्धभागेव्यवस्थोक्तान्नृपसिंहप्रसादे

चित्राद्यार्धे पुष्यमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये जातः पुत्रश्चोत्तराद्ये विधत्ते पित्रोर्भ्रातुः स्वस्य चापि प्रणाशमिति उत्तराफल्गु-
न्याद्यपाद इत्यर्थः एवं चोदाहृतगार्ग्यस्मृतावुत्तरार्द्धे तिथिगंडादौ च दानशांत्योर्वक्ष्यमाणवचनेनालोचनेन समुच्चयप्रोक्तावप्युक्तेतरजा-
तस्येत्यनेन सर्वनिषिद्ध्यै तत्कालानामप्युक्तशब्दोक्तपूर्वार्द्धेतरोत्तरार्द्धे जन्मनि निमित्ते शांतिरेव न बहिः प्रयोगं दानमिति बाध्यते पूर्वार्द्धेज-
न्मनि तु दानमप्याह तिथिगंडांत इति नक्षत्रे नक्षत्रगंडे ज्येष्ठामूलसंध्यादावित्यर्थः ननूत्तरार्द्धे तत्र दानांतरस्य वक्ष्यमाणत्वात् अत्र च
निमित्तानंतरं नालच्छेदात्पूर्वं गंडोत्तरार्द्धाधिकरणकं दानं कार्यमिति दर्शयितुं सप्तमीनिर्देशः पूर्वोत्तरवाक्यपर्यालोचनेनैव निमित्तला-
भात् उत्तरार्धात्पूर्वार्द्धे दोषाधिक्यमेव दर्शयितुमाह आद्यभाग इत्येवं उत्तरे तिलपात्रं स्यादित्यादावपि पूर्वार्धजन्मनि उत्तरार्धे दानानि
कर्तव्यानीत्युच्यते अत एव शांतिविधौ प्रयत्नेनेति पूर्वोत्तरार्द्धयोर्जन्मनि शांतिर्नियमेन कर्तव्येति ज्ञापनार्थं नक्षत्राकारेति पदं रूपमित्यने-
न संबध्यते अर्चनं कार्यमिति चाग्रिमपदद्वयम् ततश्चाधिष्ठात्रधिष्ठेययोरभेदचिंतनेन न पूजादिकार्यम् अतो मंत्रोप्युभयप्रकाश-
कस्तैत्तिरीयशाखागतो वाक्याष्टकरूप एव ग्राह्यः होमकालीनत्यागोपि नक्षत्रेष्टाविवाधिष्ठात्रधिष्ठेयोभयोद्देशेन कार्य इति सूच्य-
ते तिथिलग्नगंडजन्मनि चाह वरुणस्येति नक्षत्राधिपतेरिति पदवर्जं पूर्वश्लोकानुषंगः ततश्च तत्र वरुणपूजनमेव कार्यमित्यर्थः
तत्रैव शांत्यंगत्वेन दानमाह यवांश्चेत्यादिना कर्तुरकरणे दोषेन शांतेरावश्यकतां सूचयितुमाह पितुरिति अथ प्रयोगः ति

थिगंडपूर्वार्धजन्मनिकर्त्तास्मातः पुत्रमनालोक्यास्यशिशोस्तिथिगंडपूर्वार्धजन्मसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं अ
नड्डहानंकरिष्ये इतिसंकल्प्यनालच्छेदनात्पूर्वंगंडदोषेब्राह्मणपूजनपूर्वकं अनड्डाहंदद्यात् असंभवेकार्षापणाष्टकंवा सूतकांतेशुभदिनेवा
स्नातोऽनड्डहानमित्यस्यस्थानेशांतिमित्यूहेनसंकल्प्य गणेशपूजादिआचार्यवरणांतंकुर्यात् सन्वयदत्रेत्यादिनाभूसुन्द्विकलशस्थाप
नेकृत्वाकलशेयाओषधीःसहिरत्नानिस्योनापृथिविरुवत्यश्वत्थेवइतिशतौषधीरत्नानिमृदंत्वचः पल्लवांश्चनिक्षिप्यपूर्णादर्वीतिस्था-
पितपूर्णपात्रेस्थापितहैमवरुणप्रतिमायांतत्त्वायामीतिवरुणंपूजयेत् ततोऽग्निंप्रतिष्ठाप्यग्रहान्संपूज्यान्वादध्यात् चक्षुषीआज्येनेत्यं
तेऽत्रप्रधानम् वरुणंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिः समिधां चरोराज्यतिलयवानांचाहुतिभिः शेषेणेत्यादिबलिदानपूर्णाहुतिप्रणी
ताविसर्गांतेकलशद्वयोदकेनसमुद्रज्येष्ठेत्यादिभिः पित्रादित्रयाणामभिषेकोयवव्रीहिमाषतिलमुद्गानांदक्षिणात्वेनदानंविसर्जनादि
यथाशक्तिब्राह्मणभोजनंचेति तिथिगंडोत्तरार्द्धजन्मनिनतुतत्कालिकदानं शांतौमातुःशिशोश्चाभिषेकइतिविशेषः लग्नगंडपू
र्वार्द्धजन्मनिकांचनदानमितिविशेषः नक्षत्रगंडस्योत्तरादिनिषिद्धभागस्थचपूर्वार्द्धजन्मनिधेनोस्तिलपात्रादेश्चदानम् शांतौनक्षत्र
प्रतिमायास्तत्तद्वाक्याष्टकेनपूजनम् उत्तरार्द्धजन्मनिनदानम् दक्षिणाकालेउत्तरार्दोतिलपात्रादेर्दानम् इतरत्रयवव्रीह्याद्देरभिषेक
व्यवस्थाचपूर्ववत् इतितिथ्यादिगंडांतशांतयः अथदिनक्षयादिशांतयः पारिजातेगार्ग्यः अथातःसंप्रवक्ष्यामिज

न्मकालेविशेषतः गंडांतानांचनामानिमहादोषकराणिच दिनक्षयेव्यतीपातेव्याघातेविष्टिवैधृतौ शूलेगंडेतिगंडेचपरिघेयमघंटके
कालदंडेमृत्युयोगेदग्धयोगेचदारुणे तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते अतिदोषकरीप्रोक्तातस्मिन्पापयुतेसति यजनंदेवतानां
चग्रहाणांचैवपूजनम् दीपंशिवालयेभक्त्याघृतेनपरिदापयेत् अभिषेकंशंकरायअश्वत्थस्यप्रदक्षिणाः आयुर्वृद्धिकरंजाप्यंस
र्वारिष्टविनाशनम् गुरुदैवतविप्राणांपूजनंगोत्रवर्द्धनम् पुण्यायुक्तापिशांत्यर्थमभीष्टफलसिद्धये सर्वारिष्टहरार्थायग्रहयज्ञंस
माचरेत् शिवायविधिवद्भक्त्यादीपदानंकरोतियः अखंडगोघृतेनैवससर्वेमृत्युंजयेन्नरः विष्णुमूर्तिंमहापुण्यामश्वत्थंश्रीकरंस-
दा प्रदक्षिणंनरोभक्त्याकृत्वामृत्युंजयंजपेत् सर्वसंपत्समृत्थ्यर्थंतथाकल्याणवृद्धये अभीष्टफलसिद्ध्यर्थंकुर्याद्ब्राह्मणभोजन
म् अभिषेकंशिवेशांतिंकृत्वाभक्त्यानरोत्तमः अकालमृत्युंनिर्जित्यदीर्घायुर्जायतेनरः गाणपत्यंपुरुषसूक्तंसौरंमृत्युंजयंतथा
शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्युंजयीभवेत् मूलेवासर्पगंडेवाकुर्यादेतानियत्नतः आयुर्वृद्धिकरार्थायगंडदोषप्रशांतयइति त
स्मिन्पापयुतेसतीतिविष्ट्यादेरपिनिषिद्धांशयुतेजन्मकालेसतिदोषाधिक्यमित्याशयः ततश्चप्रतिप्रसूतेर्गंडापुच्छादौजन्मनिस्व
ल्पदोषइत्यर्थः शूलादीनांनिषिद्धांशानाहवृत्यवसिष्ठः विरुद्धयोगेषुयआद्यपादःसर्वेषुकार्येषुविवर्जनीयः सवैधृतेयोव्यतिपात
योगःसर्वोपिनेष्टःपरिघार्द्धमाद्यम् तिस्रस्तुनाड्यःप्रथमाश्चवज्रेगंडातिगंडेपिचषट्चषट्च व्याघातयोगेनवपंचशूलेस्युःप्रोक्ता

येंषुविवर्जनीयाइति यमघंटान्सएवाह अर्कारतमसौम्यार्यमंदायद्योकराशिगाः कंटकारव्योमहादोषःसर्वकर्मविनाशकृ
त् आरोभौमः तमोराहुः आर्योबृहस्पतिः मंदःशनिः मैत्रविश्वांबुपार्द्येंदुसार्पसूर्यारव्यतारकाः मृत्युयोगामृतकराःसूर्यवा
रादिषुत्रमात् विश्वेति वैश्वदेवसुत्तराषाढेत्यर्थः अंबुपंशततारकेत्यर्थः यमघंटकइतिपाठः तमाहगार्ग्यः मघाविशारवाआ
र्द्रान मूलमृक्षंचकृत्तिकाः रोहिणीहस्तइत्येतेयमघंटाःक्रमाद्रवेरिति रविवारमारभ्येत्यर्थः दग्धयोगानाहनारदः एकादशी=
चेंदुवारेद्वादशीचार्कवासरे षष्ठीबृहस्पतेर्वारेतृतीयाबुधवासरे अष्टमीशुक्रवारेचनवमीशनिवासरे पंचमीभौमवारेचदग्ध
योगाःप्रकीर्तिताइति कालदंडोभानुवासरभरणीयोगः अश्विन्यादिसाभिजिन्नक्षत्राणांचतुर्भिश्चतुर्भिःक्रमेणादित्यवारादिषु
योगेननिष्पन्नेष्वष्टाविंशतियोगेषुपठितः आनंदःकालदंडश्चेति यजनंदेवनानामितिदेवनापदेनगुरुदेवताविप्रागृह्यंते जपांतो
क्तकर्मणांप्रशंसापरवाक्यशेषेतत्संकीर्तनात् ब्राह्मणभोजनाश्वत्थप्रदक्षिणांतानिसमाप्यतन्मध्यपठितस्यापिशंकराभिषेकस्य
शांतिपदसामानाधिकरण्येनपृथक्संकीर्तनं पूर्वोक्तपूजादीनामन्यशांतीनांचनिरपेक्षकार्यभिषेकेइतिद्योतनार्थंजपस्यतदनंत
रंसंकीर्तनंततुल्यताज्ञापनार्थंनिमित्तभूयस्त्वेनैकादशिन्यभिषेकजपयोःसंख्याविवृद्धिःकल्पनीया मूलेवेतितदंडइत्यर्थः पूर्वोक्त
गंडांतशांत्यासहविकल्पेनाभिषेकसहितानिजपकर्माणिकुर्यादित्यर्थः इतिदिनक्षयादिगंडांतशांतयः अथविषनाडीजन=

सं०कौ०
८९

नशांतिः पारिजातेवृन्दुगार्ग्यः विषनाडीषुसंजातःपितृमातृधनात्मनाम् नाशकृद्विषशस्त्रास्त्रैःक्रूरलग्नेशकेपिवा तद्दोषपरि
हारायशांतिकर्मसमारभेत् रुद्रोयमोग्निर्मृत्युश्चदेवताःपरिकीर्तिताः स्वर्णेनयथाशक्तितत्तल्लक्षणलक्षिताः प्रतिमाःकारयित्वा
तुआढकव्रीहिभिःस्थले स्थंडिलंपरिकल्प्याथकुंभमौषधिसंयुतम् जलैःसंपूर्य्यसंस्थाप्यमृदादिप्रक्षिपेत्ततः वस्त्रद्वयेनसंवेष्ट्य
पंचरत्नानिनिक्षिपेत् कुंभोपरितुसंस्थाप्यचतस्रःप्रतिमास्तथा तत्तन्मंत्रैश्चसंपूज्यगंधपुष्पोपहारकैः कद्रुद्रायेतिमंत्रेणयमायसो
ममित्यथ अग्निर्मूर्द्धेतिमंत्रेणपरंमृत्योरितित्वथ एतैश्चतुर्भिर्मंत्रैश्चक्रमाद्वैजुहुनेत्तथा समिच्चरुघृतद्रव्यैःप्रत्येकंचयथाक्रमम्
ऋत्विग्भिश्चसहाचार्योजुहुनेदष्टसहस्रकम् अष्टोत्तरशतंवापिअष्टाविंशतिमेववा ततस्तिलैर्हुनेद्द्वांस्ततन्मंत्रैश्चमंत्रवित् ततोभि
षेचयेद्धुनमंत्रैःपौराणिकैःक्रमात् वक्ष्यमाणैरितिशेषः प्रीयतांभगवानीशःपिनाकीसर्वतोमुखः तवमूर्तिप्रदानेनसर्वाभीष्ट प्र-
दोभव ईषत्पीनोयमःकालोदंडहस्तःप्रसन्नधीः रक्तदृङ्नीलकायश्चमहिषस्थःशिवंकुरु पिंगभ्रूश्मश्रुकेशांतःपिंगाक्षश्चरणी
रुणः छागस्थःसहसूत्रश्चसप्तार्चीरक्तलोचनः तवमूर्तिप्रदानेनममपापंविनाशय दंष्ट्राकरालवदनोनीलांजनसमाकृतिःरक्ताक्षो
सिगदापाणिर्मृत्युर्मांपातुसर्वदा दानमेवंविधैर्मंत्रैर्यथाविधिसमाहितः गोभूहिरण्यवस्त्रैश्चआचार्यंपूजयेत्सुधीः एवंकुर्याद्विधा
नेनविषदोषःप्रशाम्यति विषनाडीस्तिथिवारसंबंधिनीराहवृन्दुगार्ग्यः तिथीषुनागाद्रिगिरीशवारिधिर्गजाद्रि ७ दिक् १० पाव

८९

क३ दिक्१० भास्कराः १२ मुनी ७ भ ८ संख्याप्रथमातिथेः क्रमात्स्वविषाख्यंघटिकाचतुष्टयमिति तिथीनांपंचदशत्वात्तिथिशब्दे
नपंचदशसंख्योच्यते एवमग्रेपि एवंचसति प्रथमांमतिपदमारभ्य एकोनविंशतिपर्यंतंविषम् द्वितीयायांषष्ठीमारभ्यनवमीपर्यंतंवि
षम् एवमग्रेप्यूह्यम् विंश २० ऋतु ४ द्वादश १२ दिक् १० चशैला ७ बाणा ५ श्वतत्वानि २५ यथाक्रमेण सूर्यादिवारेषुभवंत्यनंत
रंनाड्योविषाख्यंघटिकाचतुष्टयमिति अत्रापिआदित्यवासरेविंशत्युत्तरंचतस्रः सोमवारेचतुष्टयोत्तरंचतस्रइत्येवंव्यवस्थापूर्ववद्
द्बोध्या नक्षत्रविषनाड्योनारदेनोक्ताः खमार्गणा ५० वेदपक्षाः २४ खरामा ३० व्योमसागराः ४० वार्धिचंद्रा १४ रूपदस्राः २१ खरा-
मा ३० व्योमबाहवः २० द्विरामाः ३२ खवाग्नयः ३० शून्यदस्राः २० कुंजरभूमयः १८ रूपपक्षा २१ व्योमदस्रा २० वेदचंद्रा १४ चतुर्दश १४
शून्यचंद्रा १० वेदचंद्राः १४ षडक्षा ५६ वेदबाहवः २४ शून्यदस्राः २० शून्यचंद्राः १० पूर्णचंद्रा १० गजेंदवः १८ तर्कचंद्रा १६ वेदपक्षाः २४ खरा
मा ३० अश्विनीक्रमात् आभ्यः परास्युर्घटिकाश्चतस्रोविषसंज्ञिताइति अत्रापिअश्विन्यांपंचाशद्घटिकोत्तरंचतस्रोभरण्यांचतुर्विं
शतिघटिकोत्तरंचतस्रोघटिकाविषनाड्यइत्येवंव्यवस्थापूर्ववद्बोध्या अथप्रयोगः कर्ताशौचांतेदेशकालौसंकीर्त्यविषनाड्यां
एतद्दिशुजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंवृद्धगार्ग्योक्तविधिनाशांतिकर्मकरिष्यइतिसंकल्प्यगणेशपूजनाद्या
चार्यऋत्विग्वरणांतंकुर्यात् आचार्योयदत्रसंस्थितमितिस्थलशुद्धिंकृत्वायथाशक्तियथालक्षणंनिर्मितानांहैमीनां रुद्रादिप्रतिमा

नांचतसृणामग्न्युत्तारणंकृत्वापूर्वभागेमहीद्यौरितिऋचंस्पृष्ट्वातत्रओषधयःसंवदंतइतिचतुःप्रस्थपरिमितान्व्रीहीन्प्रक्षिप्यतैःस्थं-
डिलंपरिकल्प्यतत्रकलशस्थापनोदकपूरणेसमंत्रकेकृत्वायाओषधीरितिसर्वौषधीःप्रक्षिप्यस्योनेतिमृदःअश्वत्थेवइतिपंचपल्लवान्कां
डात्कांडादितिदूर्वाःहिरण्यरूपइतिहिरण्यंयाःफलिनीरितिफलंसुवासावासाइतिवस्त्रद्वयेनावेष्ट्यसहिरत्नानीतिपंचरत्नानिनिक्षिप्य
गंधद्वारामितिगंधादिनाकलशंसंपूज्यपूर्णादर्वीतिपूर्णपात्रंनिधायतत्रप्रतिमाचतुष्टयंनिधायतास्वावाहनादिषोडशोपचारैर्देवताः
पूजयेत् कद्रुद्रायेत्यस्यकण्वोरुद्रोगायत्री यमायसोमंयमोयमोनुष्टुप् अग्निर्मूर्धाविरूपोग्निर्गायत्री परंमृत्योरित्यस्यसंकुशि
कोमृत्युस्त्रिष्टुप् पूजांतेस्थंडिलेपश्चिमभागस्थेऽग्निंप्रतिष्ठाप्यस्थापितोत्तरभागेग्रहपूजनंकलशस्थाप नांतंकृत्वाऽन्वादध्यात्
चक्षुषीआज्येनेत्यंतेग्रहपीठदेवतान्वाधानंप्रसिद्धरीत्याकृत्वारुद्रंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमिच्चरुघृताहुतिभिःयममग्निं
मृत्युंचतावतीभिस्तद्द्रव्याहुतिभिःएताएवदेवतास्तिलाहुतिभिश्चतत्संख्याभिःशेषेणेत्यादिप्रणीताप्रणयनांतेआज्यनिर्वापःआज्ये
नसहगृहसिद्धान्नस्यपर्यग्निकरणसंमार्गांतेचरोरग्नावधिश्रपणमभिघारणंचकृत्वोदगुद्वासनादिआज्यभागांतेग्रहपीठदेवताय-
थान्वाधानंत्यागेकृतेप्रत्येकमष्टोत्तरशतसंख्याहुतिपर्याप्तंसमिच्चरुघृतात्मकद्रव्यत्रयंरुद्राय० एवंयमाय०अग्नये०मृत्यवे०एवंत
त्संख्याहुतिपर्याप्तंतिलद्रव्यंरुद्रादिभ्योनमम इतित्यागेकृतेऋत्विक्सहितआचार्यस्तत्तन्मंत्रैर्जुहुयात् प्रायश्चित्तहोमांतेलो

कपालेभ्योग्रहपीठदेवताभ्यश्चबलिदानंरुद्रयमाग्निमृत्युभ्यश्चांतेक्षेत्रपालाय पूर्णाहुत्यंतेप्रणीताविमोकः कलशद्वयोदकेनाभिषे
कः ससुद्रज्येष्ठेत्यादिभिर्मंत्रैः प्रीयतांभगवानीश इत्यादिभिश्चतुर्भिः श्लोकैश्चततएतैरेवश्लोकैः समाहितएकैकांदेवतामाचार्याय-
दद्यात् ततस्तस्मैगोभूहिरण्यवस्त्रादि तन्निष्क्रयंवादद्यात् कृतस्यकर्मणः सांगतायैइमांदक्षिणांतुभ्यमहंसंप्रददइति एवमृत्वि-
ग्भ्योपियथाशक्तिदक्षिणादानंततोग्रहपीठदेवतानांपूजनविसर्जने आचार्यहस्तेप्रतिपादनंब्राह्मणभोजनंचेतिविषनाडीशांतिः
अथयमलशांतिः तत्रैतरेयिब्राह्मणम् यआहिताग्निर्यस्यभार्यागौर्वायमौजनयेत्कातत्रप्रायश्चित्तिरितिसोग्नयेमरुत्वते
त्रयोदशकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येमरुतोयस्यहिक्षयेराइवेदचरमाअहेवेत्याहुतिंवाहवनीयेजुहुयादग्नयेमरुत्व
तेस्वाहेतिसातत्रप्रायश्चित्तिरिति आहिताग्नेःकृतप्रकृत्यारंभस्यैवेष्टिरकृततदारंभस्यपूर्णाहुतिरितिवृत्तिकारः आश्वलाय-
नसूत्रकारेणतुयस्यभार्यागौर्वायमौजनयेदिष्टिर्मरुतइतिमारुतयागउक्तः वृत्तिकृद्देवत्रातादाभ्यांमरुतएवात्रदेवतेत्युक्तेः एवका
रवशेनसिद्धांतभाष्यकृतापितदुपपादनाच्चनपूर्णाहुतिरितितदीयमेवकारव्याख्यांतरंवृत्तिकृदाद्यनादरादुपेक्षणीयम् अनाहि
ताग्नेस्तुकगृह्याग्निमतआह कारिकाकारः अथयस्यवधूर्गौर्वाजनयेच्चेद्यमौततः समरुद्भ्यश्चरुंकुर्यात्पूर्णाहुतिमथापिवेति गृ
ह्याग्निनापिश्नून्योबव्हृचस्तुकात्यायनोक्तप्रायश्चित्तंकुर्यात् स्वगृह्योक्ताभावेपरगृह्योक्तस्यलौकिकाग्नौसंभवात् तच्चतदी

सं॰कौ॰
९१

यगृह्येपठितम् अथातोयमलजननेप्रायश्चित्तविधिंव्याख्यास्यामोयस्यभार्यागौर्दासीवडवाविकृतिंप्रसवेत्सप्रायश्चित्तीभवेत्पूर्णेदशा
हेचतुर्णांक्षीरवृक्षाणांकषायमुपाहरेत्प्लक्षवटोदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषांमिश्रमपोहिरण्यदूर्वांकुरैराम्रपल्लवैः सर्वौषधीभिर
ष्ट कलशानापूर्यदंपतीस्नपयेत् आपोहिष्ठेतितिसृभिःकयानइतिद्वाभ्यांपंचैंद्रेणपंचवारुणेनेदमापःप्रवहतेत्यपाघमितिस्नापयित्वाऽलंकृ
त्यतौदर्भेषूपवेशयतिमारुतंस्थालीपाकंश्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोतिपूर्वोक्तैःस्नपनमंत्रैःस्थालीपाकस्यजुहोति अग्नयेस्वा
हा सोमायस्वाहा पवमानाय॰ पावकाय॰ मरुताय॰ मरुद्भ्यः॰ यमाय॰ अंतकाय॰ मृत्यवे॰ अग्नयेस्विष्टकृतेस्वाहेत्येतदेवगृहोत्पातेषुउलू
कःकपोतोगृध्रःश्येनोवागृहंप्रविशेत्स्तंभोवाप्ररोहेद्वल्मीकंमधुजालंवासूवेदुदकुंभेप्रज्वलनेआसनशयनयानभंगेगृहगोधिकाकृक
लाससरीसृपसर्पणेछत्रध्वजविनाशेष्वन्येषुउत्पातेषुएतदेवप्रायश्चित्तंग्रहशांतिंचोक्तेनविधिनाकृत्वाचार्यायवरंदत्वाब्राह्मणान्भोजयि
त्वास्वस्तिवाच्याशिषःप्रतिगृह्णीयादिति विकृतिप्रसवोयमलोत्पत्तिः अद्भिःपूरितेषुकलशेषुकषायैःप्लक्षादिशाखाभिर्गौरसर्षपै-
र्मिश्रितंहिरण्यंप्रक्षिप्यदूर्वांकुराणांसर्वौषधीनांचप्रक्षेपःकार्यः पंचैंद्रामंत्रायस्मिन्तत्पंचैंद्रंसूक्तम् एवमन्यत् इदमितिऋत्विक् अ
पाघं अपनःशोशुचदघमितिसूक्तम् उत्पातेष्वित्यनंतरंभूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वितिक्वचित्पाठः आहिताग्न्यधि
कारिमारुतपुरोडाशस्थानेविहितस्यमारुतस्थालीपाकस्यप्रायश्चित्तसमाख्ययातुल्यकार्यस्यपुरोडाशेनसहसमुच्चयंवदन्त्येनमोमा-

९१

न्वेष्य॰ अथप्रयोगः ममभार्यायायमलजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंइष्टायक्ष्येइतिसंकल्प्यश्रौता-
ग्निमतोगृह्याग्निमतस्तमारुतस्थालीपाकेनयक्ष्यइतिसंकल्पः अकृतप्रत्यारंभस्यतत्स्थानेपूर्णाहुतिंहोष्यामीति अग्निशून्यस्तसंग्रह
मखं कात्यायनोक्तंप्रायश्चित्तंकरिष्येइतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् आचार्यायदत्तेत्यादिनाभूशुद्धिंविधायप्रागादि
क्रमेणईशान्यंतास्वदिक्षुमहीद्यौरित्यादिविधिनाकलशाष्टकपूरणांतंकृत्वाहिरण्यरूपइतिहिरण्यंकषायादिसहितंप्रक्षिप्यकांडात्कांडा
दितिदूर्वायाओषधीरितिसर्वौषधीश्चप्रक्षिप्यगंधादिप्रक्षेपादिवरुणपूजांतंकुर्यात् अथकलशोदकैराचार्योदंपत्योरभिषेकंकुर्यात्
आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री अभिषेकेविनियोगः कयानइतिद्वयोर्वामदेवइंद्रोगायत्री अभिषेके॰ आन
स्तइति पंचानांवामदेवइंद्रस्त्रिष्टुप् अभिषेके॰ मोषुवितिपंचानांवसिष्ठोवरुणोगायत्री अभिषेके॰ इदमापइत्यस्यसिंधुद्वीपआपोऽ
नुष्टुप् अभिषेके॰ अपनःशोशुचदघमित्यष्टर्चस्यसूक्तस्यकुत्सोऽग्निर्गायत्री अभिषेके॰ एवमभिषिक्तौदंपतीश्वेतैर्वस्त्रचंदनपुष्पैः
सौवर्णभूषणैश्चाऽलंकृत्यदर्भेषूपवेशयतितौतत्रोदङ्मुखौतिष्ठतःतत्समीपेप्राङ्मुखआचार्यःस्थंडिलेऽग्निंप्रतिष्ठाप्येशान्यांग्रहपूजाक
लशस्थापनांतंकृत्वाऽन्वाधानंकुर्यात् चक्षुषीआज्येनेत्यंते अ परित्तिसृभिराज्याहुतिभिः इंद्रंसप्तभिः वरुणंपंचभिः अपएकया
अग्निमष्टाभिराज्याहुतिभिः अग्निंसोमंपवमानंपावकंमारुतंमरुतोयमंअंतकंमृत्युंच एकैकयाचर्वाहुत्या शेषेणेत्यादितूष्णींष द्वित्रिंश-

द्वारं निर्वापप्रोक्षणे यथान्वाधानमाज्याहुतिषु त्यागः अग्नये स्वाहेत्यवदानसंपादनं वा हुतयः यथालिंगं त्यजतापि अग्न्याद्यात्मनामरु
तो ध्येयाः प्रयाजेषु समिध्य इतित्यागेपि समिदाद्यात्मनानिरुक्तोक्ताग्निध्यानवत् ततः स्विष्टकृदादिबलिदानांते पूर्णाहुतिः पूर्णपात्रनिनय
नं ग्रहकलशेनाभिषेक आचार्याय दक्षिणादानं स्थापितदेवतानां पूजनादि आचार्यहस्ते प्रतिपादनांतं च कृत्वा ब्राह्मणान् भोजयित्वा स्वस्ति-
भवंतो ब्रुवंत्विति वाचयीत ते च स्वस्तीति वदेयुस्तेभ्य आशिषो गृहीत्वेश्वरार्पणं कुर्यादिति इति यमलजननशांतिः अथ त्रिकप्र
सवशांतिः शांतिसर्वस्वे सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि मातापित्रोः कुलस्यापि तदानिष्टं महद्भवेत् ज्येष्ठनाशो धनेहा
निर्दुःखं वा सुमहद्भवेत् जातस्यैकादशाहे वा द्वादशाहे शुभे दिने आचार्यमृत्विजो हुत्वा ग्रहयज्ञपुरःसरम् ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्व
र्णतः कृताः पूजयेत्धान्यराशिस्थ कलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया रुद्रसंख्यया चत्वारि सूक्तानि जपेदि
त्यन्वयः रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम् अष्टोत्तरसहस्रं वा त्रिशतं वा शतं तु वा
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् ब्रह्मादिमंत्रैरिंद्रस्य यत इंद्र भयामहे ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः अभिषेकं कु
टुंबस्य कृत्वाचार्यं प्रपूजयेत् हिरण्यं धेनुरेका च ऋत्विजां दक्षिणा ततः आज्यस्यावेक्षणं कृत्वा शांतिपाठं तु कारयेत् अथ प्रयोगः
एकादशे द्वादशे अन्यस्मिन्वा शुभेऽहनि सभार्यो देशकालौ संकीर्त्य मम सुतत्रयजन्मानंतरं सुताजननसूचितसर्वारिष्टपरिहारद्वारा

श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये इति संकल्पः निमित्तांतरे तूहः कार्यः ततो गणेशपूजनाद्याचार्यर्त्विग्वरणतत्पूजांते
आचार्यो यदत्रेत्याद्यस्युत्तारणं च ततः स्थंडिलपूर्वभागे ग्रहपूजाकलशस्थापन वरुणपूजनांतं कृत्वा तदुत्तरत उदक्संस्थानां पंचकलशा
नां मही द्यौरित्यादिविधिना यथाशक्ति धान्योपरि स्थापितानामुपरि यथाशक्ति हेमनिर्मिताः ब्रह्मविष्णुमहेशेंद्ररुद्रप्रतिमाः स्थापयि-
त्वा तास्कंदेवताः पूजयेत् ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् इदं विष्णुरित्यस्य मेधातिथिर्विष्णुर्गायत्री तत्पुरुषायेत्यस्य हिरण्यगर्भो महे
शो गायत्री यत इंद्रेत्यस्य भर्ग इंद्रो बृहती कद्रुद्रायेत्यस्य घोरः कण्वो रुद्रो गायत्री पूजांते रुद्रकलशं स्पृष्ट्वा चत्वारो रुद्रसूक्तानि क
श्चिदृत्विग्जपेत् कद्रुद्रायेत्यस्यर्ष्याद्युक्तम् इमा रुद्रायतवस इत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रः आद्या नव जगत्यः अंत्ये द्वे त्रिष्टुभौ
आ ते पितरिति पंचदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् इमा रुद्राय स्थिरधन्वन इति चतसृणां वसिष्ठ आद्यास्तिस्रो जगत्यः अंत्या त्रि
ष्टुप् जपे वि० प्रत्येकमेकादशवारं सूक्तानां जपः तदंते आ नो भद्रा इत्यादिशांतिसूक्तानि जपेत् ततोऽग्निप्रतिष्ठापनादि अन्वाधाने चक्षु
षी आज्येनेत्यंते प्रसिद्धं ग्रहपीठगतदेवतान्वाधानं कृत्वा ब्रह्माणं विष्णुं महेशं इंद्रं रुद्रं च प्रत्येकं समिदाज्यतिलचरूणां प्रत्येकमष्टोत्तर
सहस्राहुतिभिः शेषेणेत्यादि असंभवे अष्टोत्तरत्रिंशताहुतिभिरिति अत्राप्यशक्तौ अष्टोत्तरशताहुतिभिरिति वा आज्यभागांते य-
थान्वाधानं त्यागः ततः प्रधानहोममुक्तमंत्रैराचार्यर्त्विक्कर्तृकग्रहहोमपुरःसरं कुर्यात् प्रायश्चित्तहोमांते बलिः पूर्णाहुतिश्च ततः प्रणी

तांविमोकसंस्थाजपपरिस्तरणविमोकांतेषट्कलशोदकेन सहकुटुंबयजमानाभिषेकः समुद्रज्येष्ठाइत्यादिमंत्रैः ततआचार्यायसहि
रण्यधेनुंदत्वाऋत्विग्भ्योयथाशक्तिदानंचकृत्वास्थापितदेवतानामुत्तरपूजनविसर्जनांते तत्प्रतिमाआचार्यहस्तेप्रतिपाद्यकांस्यपात्रेरूपं
रूपमित्याज्यमवेक्ष्य सदक्षिणतद्दानंकृत्वाब्राह्मणभोजनंयथाशक्तिसंकल्प्ययथाशक्तिशांतिपाठंकारयित्वापरमेश्वरार्पणंकुर्यादिति
त्रिकशांतिः अथसदंतजननशांतिः अद्भुतसागरेपाद्मे दंतजन्मनिसामान्येश्रृणुस्नानमतःपरम् भद्रासनेनिवेश्यैनंमृ
द्भिर्मूलफलैस्तथा सर्वौषधीःसर्वबीजैःसर्वगंधैस्तथैवच स्नापयेत्पूजयेच्चात्रवन्हिंसोमंसमीरणम् पर्वतांश्चतथाख्यातान्देवदे
वंचकेशवम् एतेषामेवजुहुयाद्घृतमग्नौयथाविधि ब्राह्मणानांचदातव्यायथाशक्त्याचदक्षिणेति तत्रैवबृहस्पतिः बालानामष्ट
मेमासिषष्ठेमासिततःपुनः दंतायस्यचजायंतेमातावाम्रियतेपिता बालकःपीड्यतेतत्रस्वयमेवनसंशयः दधिक्षौद्रघृताक्तानामः
श्वत्थसमिधांततः हुनेदष्टशतंप्राज्ञःसमंत्रेणतुमंत्रवित् धेनुंचदक्षिणांदद्यात्ततःसंपद्यतेशिवमिति विष्णुधर्मोत्तरेतु दंतजन्मनि
बालानांलक्षणंतन्निबोधमे उपरिप्रथमंयस्यजायंतेथशिशोर्द्विजाः दंतैर्वासहयस्यस्याज्जन्मभार्गवसत्तम द्वितीयेचतृतीयेच
चतुर्थेपंचमेतथा यदादंताश्चजायंतेमासेचैवमहद्भयम् पितरंमातरंवाथखादेदात्मानमेवच तत्रशांतिंप्रवक्ष्यामितांमेनिगदतःश्रृणु
गजपृष्ठगतंबालंनौस्थंवास्नापयेद्द्विजः तदभावेतुधर्मज्ञकांचनेतुवरासने सर्वौषधीःसर्वगंधैर्बीजैःपुष्पैःफलैस्तथा पंचगव्येनर

लैश्च मृत्तिकाभिश्च भार्गव स्थालीपाकेन धातारं पूजयेत्तदनंतरम् सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् अष्टमेहनि विप्राणां त
थादेया च दक्षिणा कांचनं राजतं गाश्च भुवं वा धनमेव चेति अथ प्रयोगः अस्य शिशोः प्रथमम् ऊर्ध्वदंतजननसूचितसर्वारिष्ट
परिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं शांतिं करिष्ये निमित्तांतरे सदंतजननसूचितेत्यूहः द्वितीयमासदंतजननसूचितेत्येवमूहश्च कल्प्यः
गणेशपूजनाद्याचार्यवरणांते आचार्यो यदत्रेत्यादि प्रतिमानामग्न्युत्तारणं च कृत्वा होमदेशोत्तरभागे गजपृष्ठे नौकायां सौवर्णपीठे वा स्व
स्तिकं चर्मयोगे भद्रासनत्वेन कल्पिते बालमुपवेश्य सर्वौषधिसर्वगंधादियुक्तजलैः स्नापयित्वा होमदेशपूर्वभागे स्थापितकलशोपरि
धातारं वन्हिं सोमं वायुं पर्वतान् केशवं च षट्प्रतिमासु संपूज्याऽग्निं प्रतिष्ठाप्य ग्रहान् संपूज्याऽन्वादध्यात् अत्र प्रधानं ग्रहान्वाधानां
ते धातारं सकृच्चरुणा वन्ह्याद्या देवता एकैकयाज्याहुत्या शेषेणेत्यादि धात्रे त्वा जुष्टं निर्वपामीति प्रोक्षामीति समंत्रे निर्वापप्रोक्षणे ग्र-
हाननुद्दिश्य त्यागहोमांते धात्रे स्वाहेत्यवदानधर्मेण सकृदाहुतिः ॐ वन्हये स्वाहा ॐ सोमाय ० ॐ समीरणाय० ॐ पर्वतेभ्यः ० ॐ केश-
वाय ० इति स्रुवेणाज्याहुतयः यथालिंगं त्यागः चर्वाज्याभ्यां स्विष्टकृद्बलिपूर्णाहुत्यंते कलशद्वयोदकेनाभिषेकः यथाशक्त्याचार्या
य दक्षिणादानं तन्हस्ते प्रतिमा प्रतिपादनांते भूयसीं दक्षिणामन्येभ्यो यथाशक्ति दत्वा सप्ताहं ब्राह्मणान् भोजयेत् अष्टमेहनि शक्त्य
नुसारेण कांचनादिदानं तेभ्यः कार्ये दिनाष्टकं ब्रह्मचर्यादि व्रतं नवर्यांते परमेश्वरार्पणं कुर्यादिति सदंतजननादिशांतिः षष्ठेऽष्टमे वा

मासेदंतोत्पत्तौतुतदनुसारिसंकल्पपूर्वकं बृहस्पतेरेवमंत्रेणतत्पूजनविधिना पूजनंदधिमधुघृतानां अश्वत्थसमिधामष्टोत्तरशतंतन्मंत्रे
णहोमः आज्येनस्विष्टकृदादितत्कलशोदकेनाभिषेकः आचार्यायधेनुर्देया ब्राह्मणभोजनांतेईश्वरार्पणंकुर्यादिति षष्ठाष्टममासदंतो-
त्पत्तिशांतिः अष्टमादिषुमासेषुदंतजन्मशुभावहमितिज्योतिर्निबंधवाक्येतु अतद्गुणसंविज्ञानबहुव्रीहिणा नवमादिग्रहणमितिद्व-
ष्टाः अथप्रसववैकृतशांतिः स्कंदगर्गः यत्रगर्भेविपर्यासोमानुषाणांगवा मपि अद्भुतानिप्रसूयंतेतस्यदेशस्यविद्रवः अत्राः
पिदिव्यजाशांतिःकार्यापंचदशींबुधैः पंचदशींप्राप्येतिशेषः पर्वणीत्यर्थः मानुषामानुषाणांचगोजाश्वमृगपक्षिणाम् जायंतेजातिभे
दाश्चसदंताविकृतास्तथा बहुशीर्षाअशीर्षावाबहुकर्णाअकर्णकाः एकशृंगाद्विशृंगाश्चतथैवचतुराद्विजाः दीर्घकर्णामहाकर्णागं-
जकर्णाश्चमानवाः मानवाश्चयदाव्याघ्रमार्जारास्तनुधारिणाम् जायंतेपुरुषायत्रतत्रसंग्राममादिशेत् राजश्रेष्ठकुलेनाशोधनस्यचकु
लस्यच यमलायत्रजायंतेनारीणांगजवाजिनाम् ब्रह्मशांतिंततःकुर्याद्यत्रब्रह्माप्रशासिता अष्टोत्तरसहस्राणिचरुंवैजुहुयाद्धुतम्
समिधांतुपलाशानांतर्पयेत्पूर्ववद्द्विजान् दासीदाससमायुक्तंगोदानफलसंयुतम् कांचनंवृषभंवस्त्रंदद्याद्विप्रायदक्षिणाम् अशिराजा
यतेजंतुस्तथाद्वित्रिशिरास्तथा सूर्याद्भुतंविजानीयात्पूजयित्वादिवाकरम् दध्याज्यमधुसंयुक्ताःसमिधस्त्वर्कसंभवाः यद्वाजनःप्रसू
तिभिर्जुहुयाद्धुतमेवच धेनुंरूक्मवर्णंवस्त्रंचदद्यान्द्धात्रेचदक्षिणाम् सर्वेदोषाविनश्यंतिततःसंपद्यतेशुभम् मृगीजनयतेसर्पान्मंडूकान्वा

प्यमानुषान् बृहस्पत्यद्भुतमिदं तद्दारे संप्रपूजयेत् औदुंबरस्य समिधो दधिसर्पिः समन्विताः दोषोपशमनार्थाय जुहुयान्नियमे स्थितः
वस्त्रं सुवर्णं धेनुं च दद्याद्विप्राय दक्षिणाम् स्त्री गर्भपातो यमलं प्रसूयंते ऽथवा स्त्रियः सदंताश्चैव जायंते जातमात्रं हनंति च बुधाद्भु
तं विजानीयात्तद्वारे तु प्रपूजयेत् वस्त्रं गावः सुवर्णं च दद्याद्विप्राय दक्षिणाम् अद्भुतसागरे नारदः भानौ सिंहगते चैव यस्य गौः सं
प्रसूयते मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शुभम् प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् त
तो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः अयुतो होमो व्याहृतिभिः कार्य इति तथा अस्य वामस्येति सूक्तेन तद्विष्णोरिति मंत्रतः जुहुया
याच्च तिलाज्येन शतमष्टोत्तराधिकम् मृत्युंजयेन मंत्रेण जुहुयाच्च तथायुतं श्रीसूक्तेन ततः स्नायाच्छांतिसूक्तेन वा पुनरिति अथ सुख
प्रसवकरम् मदनरत्ने नारायणीघटिकायाम् करंकी सूतगोमूर्धा सूतिकाभवनोपरि तात्काल निहितो नार्याः सुखप्रसवकारकः
अस्थिमात्रावशिष्टो गोमस्तक इत्यर्थः उपोदक्यास्तु मूलानि तैलयुक्तानि कारयेत् योनिप्रलेपो दातव्यः सुखं नारी प्रसूयते वंशनिंबयो
स्त्वक् तुलसीमूलं कपित्थपत्रं च करवीरमेतत् त्रिफ्वा क्षीरेण माहिषेणैव समतोलितं सतैलं योनिं लिप्त्वा च तेनापि मृतगर्भं निःसारय
ति किमत्र चित्रं सुखप्रसवे अत्र सर्वत्र प्रयोगाः सुगमा इति न लिख्यंते यत्कांत्या सूर्यचंद्राद्या अभवन्नौदकांतयः श्रीकांतस्य मुदे
तस्य प्रोक्ता जननशांतयः इत्यापदेवसुतानंतदेवकृते संस्कारकौस्तुभे जननशांतिनिरूपणम् अथ नामकरणम् तत्र

नामचास्मैदद्युरितिसूत्रव्याख्यावसरेवृत्तिकृतोक्तंनामकरणस्याचार्येणकालांतरानुक्तेजातकर्मानंतरंकार्यमित्येकइति तथाचज्योति-
र्वसिष्ठः जन्माहाद्वादशाहेवादशाहेवाविशेषतः कुर्याद्वैनामकरणंकुमारस्येतिवैश्रुतिरिति पारस्करः दशम्यामुत्थाप्यब्राह्मणान्भो
जयित्वापितानामकरोति उत्थाप्यसूतिकाम् नचदशम्यामतीतायामितिव्याख्यानमुचितम् अध्याहारस्यानुचितत्वात् अपरार्केमे
धातिथिभ्यामंगीकाराच्च जन्मतोदशमेवापिद्वादश्यांवापितत्पुनः विप्राणांनामकर्मस्यादाशौचांतेतुशेषयोरिति नारदवाक्येविप्राणां
दशमेआशौचनिवृत्तिंविनापिकर्तव्यताप्रतीतेश्च एवंएषांदशाहतःप्राक्शुद्धिस्तद्विषयंदशम्यामितिकल्पतरूक्तिरप्युक्ता तथासतिक्ष
त्रियवैश्ययोर्विप्रवैधर्म्योक्तौउक्तवाक्यस्यायांनिस्तात्पर्यकत्वापत्तेः याज्ञवल्क्यः अहन्येकादशेनामेति पारिजातेबृहस्पतिः द्वादशे
दशमेवापिजन्मतोदिवसेशुभे षोडशेविंशतौचैवद्वाविंशेवर्णतःक्रमात् इति षोडशैकोनविंशेवाद्वात्रिंशेवर्णतइतिक्वचित्पाठः कीदृ-
शःक्रमादित्यस्यार्थइत्यपेक्षायां उक्तंसंग्रहे एकादशेऽह्निविप्राणांक्षत्रियाणांत्रयोदशे वैश्यानांषोडशेकार्यंमासांतेशूद्रजन्मनइति एकाद
शइतिदशमद्वादशयोरुपलक्षणम् त्रयादशइतिषोडशइतिचविंशादेःक्षत्रियादिभिःस्वाशौचकालात्पूर्वंनकार्यमित्यत्रतात्पर्यम् भवि
ष्येनामकरणप्रकरणे द्वादश्यामपरेरात्र्यांमासेपूर्णेतथापरे अष्टादशेऽह्निचतथावदंत्यन्येमनीषिणइति आश्वलायनपरिशिष्टे नाम
त्वेकादशेदिवसेशतरात्रेसंवत्सरेवायथोपपत्त्येके जन्मन्येकादशेचैवनक्षत्रइतिगोभिलपरिशिष्टे जननाद्दशरात्रेव्युष्टेशतरात्रेसंव-

त्सरे वानामकरणमिति व्युष्टे अतिक्रांते मनुः नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत् पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते इति
अपिशब्दादेकादशे ततश्च द्वादशदिनांतकालेषु न पुण्यतिथिनक्षत्रचंद्रानुकूल्यादिगुणादरः तुल्यन्यायात् तथा क्षत्रियादेर्विशिष्य वि
हिते त्रयोदशादि दिनेपि न तदादरः कार्य इति उत्तरार्द्धगतैकवाशब्दस्यार्थः ततश्च कालांतरेषु तदादरो नित्यं ध्वन्यते द्वितीयवाशब्देन तु गु
णान्वितं नक्षत्रमपि स्वतंत्रः काल इति ज्ञाप्यते अत एव ब्राह्मणादेर्दशमैकादशद्वादशदिनेषु कुर्वतः क्षत्रियादेश्च त्रयोदशादौ न मलमासगु
रुशुक्रमौढ्यादिनिषेधादरोपि तथा तदीयदीपिकायाम् गर्भाधानमुखं च चौलविधितः प्राग्जातयागं विनेति प्रकृत्योक्तम् अधिकेमा-
स्येवमाद्याचरेदिति तथापि पारिजाते बृहस्पतिनापि यस्यां क्रियायां यश्चोक्तः कालो मासदिनैरपि तस्यां न दोषो मूढत्वं वक्रं वा जीवशुक्र
योरिति दिनैरिति तृतीयेत्थंभावे मासात्मना दिनात्मना वा यो नियतः कालस्तस्मिन् क्रियमाणायां तस्यां मूढत्वादिन दूषणमित्यर्थः एवमु-
क्तदिनेषु सर्वनिषेधानादरे प्राप्ते तदपवादं तत्रैव गर्गः व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि श्राद्धं विना शुभं नैव प्राप्तकालेपि मानवः कु
र्यादिति शेषः तथा अमासंक्रांतिविष्ट्यादौ प्राप्तकालेपि नाचरेदिति सर्वदिनेषु विशेषांतरं मुहूर्तसंग्रहे पूर्वाण्हः श्रेष्ठ इत्युक्तो म-
ध्यान्हो मध्यमः स्मृनः अपराण्हं न रात्रिं च वर्जयेन्नामकर्मणीति तथोक्तदिनेषु कृतस्य नामकर्मणः कालांतरे क्रियमाणस्यापेक्षितस्ति
थ्यादिनिर्णयः पारिजाते नृसिंहः छिद्रारव्यां पर्व नवमीं हित्वा शेषाः शुभावहा इति चतुर्थी षष्ठ्यष्टमी द्वादशी च चतुर्दश्यः छिद्राह्व-

पर्वणीनवमीत्वित्यष्टौतिथीर्विहायशेषास्तिथयोनामकर्मणिशस्ताइत्यर्थः वसिष्ठः बुधेंदुसितजीवानामंशकेदिवसोदये द्रेक्काणेका-
लहोरायांनामकर्मप्रशस्यते षष्ठ्यंतस्यसप्तम्यंतेषुप्रत्येकंसमन्वयः अंशकोनवांशोराशेः उदयोलग्नंद्रेक्काणोराशेस्तृतीयांशः काल
होरावारप्रवृत्तिमारभ्याहोरात्रसंबंधिनोभागभेदाः दिवसोदयइत्येकवद्भावः ततश्चत्वारोवासराः प्रशस्ताइत्यर्थः पारिजाते मि
त्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युतप्राजेशाश्विशशांकपौष्णादिनकृत्पुष्येषुराशौस्थिरे छिद्रांपंचदशींविहायनवमींसुद्दे
ष्टमेभार्गवज्ञाचार्यामृतपादभागदिवसेनामानिकुर्याच्छिशोरिति मित्रोऽनुराधा आदित्यंपुनर्वसुः उत्तरेत्युत्तरात्रयम् गृत्यतेत्रीण्यु
त्तराण्याहुरुडूनिनाम्नीतिशास्त्रांतरसंवादात् अच्युतःश्रवणः प्राजेशंरोहिणी अश्वीत्यश्विनी शशांकोमृगशिरः पौष्णंरेवतीदिन
कृद्धस्तः राशौस्थिरे वृषसिंहवृश्चिककुंभलग्नेषु तेप्यएवाष्टमस्थानेरिष्टसूचकग्रहाणांक्रमणांशफद्धत्वम् आर्योगुरुः अमृतपादश्चं
द्रः एषांभागारव्यांशेदिवसारव्यवासरेप्रत्येकमन्वयः भागदिवसमित्येकवद्भावः नामानीतिबहुवचनमेकस्यशिशोर्बहूनिनामानी
तिज्ञापनार्थम् प्रथममाहशंखः कुलदेवतासंबद्धंपितानामकुर्यादितिकुलपूज्यायादेवतातत्संबद्धमित्यर्थः अस्यांव्याख्यायामना
दिराचारोमूलम् द्वितीयमाहगार्ग्यः मासनामगुरोर्नामदद्याद्बालस्यवैपिता कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषो
वासुदेवोहरिस्तथा योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् अत्रमार्गशीर्षादिक्रमः चैत्रादिमासनामादिवैकुंठोऽथजनार्दनः

उपेंद्रोयज्ञपुरुषोवासुदेवोहरिस्तथा योगीशः पुंडरीकाक्षः कृष्णोऽनंतोऽच्युतस्तथा चक्रधारीतिचैतानिक्रमादाहुर्मनीषिणइतिमदन
रत्नोदाहृतगर्गवचः संवादात् मासास्त्वत्रचांद्रास्तेष्वेवचैत्रादिशब्दानांमुख्यत्वात् तेचशुक्लादिकृष्णांताएव तादृशचांद्रमानस्यैवमुख्य
त्वात् ब्राह्मणेनचैतदेवविशेषेणादरणीयम् अमावास्यापरिच्छिन्नोमासः स्याद्ब्राह्मणस्यत्वितिवचनात् तृतीयमप्याहबौधायनः न
क्षत्रनामधेयेनद्वितीयंनामधेयंगुह्यमस्यान्यत् अभिवादनीयमुपनयनान्मातापितरौसंविदितौभवतोविज्ञायतेद्विनामाब्राह्मणइति
अन्यद्व्यावहारिकात् नक्षत्रनामधेयेनेतितृतीययातत्रजातइत्यधिकारेविहिततद्धितांतेनकृत्तिकादिनाम्नानिष्पन्नमित्यर्थोलभ्यते अ-
तएवनक्षत्रनामद्वितीयंस्यादितिहिरण्यकेशिसूत्रव्याख्यावसरेमातृदत्तग्रंथः किंतत् जन्मनक्षत्रप्रकृतिकंतत्रजातार्थतद्धितांतम्
यथारौहिणः श्रविष्ठः आर्द्रकइतीति उक्तश्चास्यनाम्नोविनियोगः सूक्तवाकेआश्वलायनेन असावसावित्यस्यादिश्यनामनीइति
उक्तंचैतद्व्याख्यावसरेनाम्नोःक्रमनियमायदेवत्रातेन तत्रजातइत्यस्मिन्नर्थेतद्धितउत्पद्यतेइतिप्रकृत्यतस्मादेवंप्रयोगोभवति अनूराधो
देवदत्तइति तथाबौधायनेनपुत्रस्यनामगृण्हातीतिप्रक्रम्यरोहिणायतिष्यायेतियथानुशासनंविनियोगोप्यधायि तथोपनयनप्रक
रणस्थस्यकोनामासीतिनामधेयंपृच्छतितस्याचार्यः अभिवादनीयनामधेयंकल्पयित्वादेवताश्रयंनक्षत्राश्रयंगोत्राश्रयमप्येकइतिसू
त्रस्यव्याख्यावसरेछंदोगसूत्रभाष्यकृतोक्तंनक्षत्राश्रयंफल्गुननामासीतियथोक्ततद्धितानामेवन क्षत्रनाम्नांसंग्रहार्थःश्लोकःस्मृदर्शे

नभाष्येविद्यारण्यभाष्येचसमुदाहृतः रोरेभमृज्येत्विषुहृद्भिरादौ षांत्येन्नवांत्यश्चवशाश्वयुक्क्षु शेषेषुनाम्नोः कपरः स्वरोंऽत्यस्याद्यो
रदीर्घः सविसर्गइष्टइति रोइतिरोहिणी आदौआद्याक्षरे ततश्चरौहिणः रैवतः माघः मार्गशीर्षः ज्येष्ठः चैत्रइतिषण्णांसिद्धिः
प्रोष्ठपदाप्रकृतिकेनाम्निठकरात्परेवृद्धिरित्यर्थः ततश्चप्रोष्ठपादइतिनक्षत्रद्वयसंबंधिनामसिद्धिः अंत्यमपभरणी तैत्तिरीयाणांनक्ष
त्रेष्टिपाठेकृत्तिकाद्यपभरण्यंतपाठात्ततश्चअपभरणः आपभरणः श्रवणः श्रावणः शातभिषजः शतभिषक् जातार्थेप्रतिप्रसू
तोण्डिद्वावक्तव्यइतिवाक्यकारोक्तेः शातभिषइत्यपि अश्वयुक् आश्वयुजः एवंचतुर्नक्षत्रसंबंधिनामसिद्धिः शेषेषुउक्तान्यन
क्षत्रप्रकृतिकनामसुनवृद्धिः श्रविष्ठाफल्गुन्यनुराधेत्यादिसूत्रेतद्धितलुकोनियमात् लुक्तद्धितलुकीति श्रविष्ठाफल्गुन्या
दौस्त्रीप्रत्ययनिवृत्त्याच श्रविष्ठः फल्गुनः अनुराधः तिष्यः आश्लेषः हस्तः विशाखः अषाढः कृत्तिकः बहुलइतिवेतिएकादशासं
बंधिनामसिद्धिः आर्म्योः आर्द्रामूलयोरंत्यस्वरः ककारात्परोभवति रेफग्रणम् आश्लेषाग्रहणमाकारेणमाभूदिति आर्द्रकः मूल
कइति स्वाप्वोः स्वातीपुनर्वस्वोरंत्यस्वरः सविसर्गोज्ञेयः स्वातिः पुनर्वसुरिति केषांचित्स्वातीतिसदीर्घपाठात्पुनर्वस्वोर्द्वित्वेनच
पुनर्वसूइतिदीर्घत्वप्रसक्तेरदीर्घत्वमुक्तम् पूर्वैः सहेमानिचत्वारि सप्तविंशतिनक्षत्रसंबंधिनाम्नामेवंसिद्धिः तैत्तिरीयैर्नक्षत्रेष्टि
ष्वभिजितः पृथगाम्नातेपिपाणिनिनापिवत्सशालाभिजिदश्वयुगितितत्प्रकृतिकयोरभिजिदाभिजित इतिनाम्नोरनुशिष्टयो

रपिश्लोकेतयोर्नादरः सतस्यनक्षत्रांतरेंतर्भावात्तन्नाम्नैवव्यवहारसौकर्यादितिबोध्यम् आहृतंत्वाभिजितइतिनाक्षत्रनाममा-
तृदत्तेनेतितत्स्वीकारेपिनबाधकम् अभिजित्स्वरूपंतैत्तिरीयाआमनंति अभिजिन्नामनक्षत्रंउपरिष्टादषाढानांअधस्ताच्छ्रोणाया
इति विवृतमेतद्वसिष्ठेन अभिजिद्भागमेतद्वैश्वदेवांत्यपादमखिलम् आद्यान्वितस्तोनाड्योहरिभस्येति वैश्वदेवमुत्तराषाढाश्वत
स्त्रइतिपंचदशांशोपलक्षणम् द्वयोर्नक्षत्रयोर्द्वन्द्विक्षयाल्लोचनेनेन पादपंचदशांशावभिजिदित्यर्थः उक्तनाक्षत्रनामानिस्त्रीप्रत्ययांतानि
स्त्रीणांमातृदत्तेनैवकार्तिकीरोहिणीत्याद्यनुक्रमणात् तूष्णीमेताःक्रियाःस्त्रीणामितिस्मृत्यावृतैवकुमार्याइतिगृह्येणचमंत्ररहितय
थावस्थितसंस्काराणांतास्वपिविधानात् उक्तोऽत्रविशेषोमातृदत्तेनैवपुण्याहादिवाचनंकार्यंनान्यदस्तीति अश्वयुक्आश्वयुजइतिवि
कल्पेप्राप्तेनियमः परिशिष्टे तदक्षरादिकंनामयस्मिन्धिष्ण्येयदक्षरमिति अक्षरंस्वरः द्व्यक्षरमित्यादौतथादर्शनात् ततश्वा
श्वयुगित्येवोचित एवंचज्योतिर्वित्प्रसिद्धस्वरोदयाभिहितशतपदचक्रसारोत्थारोपोज्योतिषार्केभिहितः चूचेचोलापदेष्वाद्येली
लूलेलोयमस्यचेत्यादि तत्रेतिप्रोक्ताइमेपद्येवर्णानामाद्विजाःस्फुटाइतिउपसंहारादाद्येअश्विन्यांपदेषुचरणेषुयेचूइत्यादयोवर्णास्त-
दादीनिनामानिचूडामणिश्चेदिपतिःचोलपतिःलाटपतिरित्येवंकार्याणीतिप्रतीतेर्ज्योतिर्विदांनक्षत्रतच्चरणज्ञानफलानिसंतुतान्यपि-
नामानि यदिनामकरणप्रकरणेकश्चिद्गृह्यग्रंथेतादृशनाक्षत्रनामकार्यमितिस्फुटोविधिर्भवेत्तदापिसूक्तवाकादिसंबन्धकर्मानधिकृत-

सं॰ कौ॰
९८

जात्यंधविषयोसाविविति ज्ञेयम् तदधिकृतान्प्रतिव्याकरणानुसारिनाक्षत्रनाम्नामेवावश्यकतयादर्शितत्वात् शांखायनास्तु कृत्तिकास्तूत्य
न्नस्यअग्निशर्मेत्येवंनाक्षत्राणिनामानितत्तद्देवतासंबद्धानिमन्यंते उदात्ततंचश्रुतिभाष्येवन्नवनं नक्षत्रंदेवताएताएताभिर्यज्ञकर्मणि यजमानस्य
शारूमज्ञैर्नामनक्षत्रजंस्मृतं शर्मांतंब्राह्मणस्योक्तमिति अभिवादनिकंचसूक्तवाकेपठनीयंनाक्षत्रादन्यद्देवे त्यपितत्सूत्रभाष्ये कातीयाअपि
देवतासंबद्धमेवनाक्षत्रनाममन्यंते नैतदाश्वलायनानां व्यावहारिकंनामाहबृहस्पतिः नामाखिलस्यव्यवहारहेतुःशुभावहमिति तत्स्वरू
पमाहाश्वलायनः नामचास्मैदद्युर्घोषवदाद्यंतरंतस्थमभिनिष्ठानांतंद्व्यक्षरंचतुरक्षरंवाद्व्यक्षरंप्रतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोयु
ग्मानित्वेवपुंसामयुजानिस्त्रीणामिति वर्गेषुकखचछेत्यादिप्रथमद्वितीयभिन्नागच्छेत्यादयःपंचदशहकारश्चेत्येतेघोषवंतोहलः तदन्यतरआ
दिर्यस्यअंतस्थोयरलवान्यतरोमध्येयस्याभिनिष्ठानोविसर्जनीयोंतेयस्याक्षरंस्वरःसकृत्स्वभिन्नःयस्मिन्द्व्यक्षरेचत्वारिव्यंजनेषुनसंख्यानियमःयु
ग्मानित्वेवेतितदन्यलक्षणानादरेपिनदोषइतिज्ञापनार्थं ततश्चदेवइत्यादिवद्भुद्रइत्याद्यपिकार्यं अत्रविशेषंवसिष्ठः द्व्यक्षरंवाचतुरक्षरंवाविवर्जयेदं
त्यलकाररेफं तन्मासनामादिकमेवचिंत्यंस्फुटंवदेद्दक्षिणकर्णरंध्रइति महाभाष्येयाज्ञिकाःपठंति त्रिषुपुरुषानूकमनरिप्रतिष्ठितंकुर्यान्नतद्धितमिति
कृदंतंकुर्यान्नतद्धितांतमितिभावः कपिलसंहितायां देवतानांविशेषेणपित्र्यावानामशस्यतइति हिरण्यकेश्यापस्तंबाभ्यांविशेषांतरमुक्तं नामा-
द्याख्यातांतंनामाहिरण्यदाइत्यादिस्थित्युप सर्गादिवास्वश्रीरित्या दीति व्यावहारिकानामाधिकारेयमःशर्मदेवश्चविप्रस्यवर्मराजाचभूभुजः

९८

गुप्तोदत्तश्चवैश्यस्यदासःशूद्रस्यकरयेदिति मनुः स्त्रीणांचसुखमक्रूरंविस्पष्टार्थंमनोरथम् मंगल्यंदीर्घवर्णान्त माशीर्वादाभिधा
नवदिति प्रासादादीनामपिनामकार्यमितिस्कांदे देवालयगजाश्वानांवृक्षाणांवापिकूपयोः सर्वापणानांपण्यानांचि न्हानांयोषि
तांनृणाम् काव्यादीनांकवीनांचपश्वादीनांविशेषतः गजप्रासादयज्ञानांनामकर्मयथोदितमिति नामकर्मणिविशेषंपारिजाते
भगवान् शिशोर्नामाथपित्रादिर्दशमेद्वादशेपिवा कुर्याद्यद्वागुणैर्युक्तेनक्षत्रेनुगुणेशिशोः इदमार्याःकुमारस्यनामास्यविदधाम्य
हम् इतिविज्ञापितैर्विप्रैर्विद्वद्भिरनुमोदितम् ब्राह्मणैःसार्द्धमारभ्यपूर्वंपुण्याहवाचनम् तत्रपुण्याहपर्यायंयथाविधिसमाप्यच
स्वस्तिपर्यायमध्येतुनामधेयंविधित्सितम् चतुर्थ्यंतमुदीर्यादौपितातन्नामकर्मणि स्वस्तीत्याद्यब्रुवंस्तंतंभवत्सदमुदीरयेत् वक्तारश्च
चतुर्थ्यंतंबालनामोक्तिपूर्वकम् स्वस्तीत्येवंप्रतिब्रूयुरिति आदृतश्चासौस्वस्तिवाचनगतोविशेषःशौनकजयंतकारिकासुपारिजाता
दिप्रयोगेषुच अभिवादनीयंचनामनस्त्रीणामित्युक्तंजयंतेनेत्यलम् अथप्रयोगः तत्रगर्भाधानादिसंस्कारातिपत्तौप्रमा
दादकरणेजातकर्मणःकालातिपत्तिनिमित्तकाज्यहोमपूर्वकंप्रत्येकंपादकृच्छ्रंबुद्धिपूर्वकाकरणेप्रत्येकमर्द्धकृच्छ्रंगोदानंतिलसहस्रहो-
माद्यन्यतरप्रत्याम्नायेनकुर्यात् तद्यथा जातकर्मणःकालातिपत्तिनिमित्तदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरि
ष्येइतिसंकल्प्यउपलेपनाद्याज्यभागांतंकृत्वा ॐ भूर्भुवःस्वःस्वाहेत्याज्याहुतिंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यगर्भाधानपुंसवना

नवलोभनसीमंतोन्नयनलोपनिमित्तदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंइयतःपादकृच्छ्रान् एतत्प्रत्याम्नायेनाचरिष्यइतिसंकल्प्य
तान् संकल्पपूर्वकमर्धकृच्छ्रान् वाचरेत् आरभ्याधानमाचौलात्काले ऽतीतेतुकर्मणाम् व्यात्हृत्याज्यंसंस्कृत्य हुत्वाकर्मयथाक्रम
म् एतेष्वेकैकलोपेपिपादकृच्छ्रंसमाचरेत् चूडायाअर्द्धकृच्छ्रंस्यादापदित्येतदीरितम् अनापदितुसर्वत्रतदेवद्विगुणंचरेदितिभ-
गवदुक्तेः अस्मिन्होमेपारिजातमनुसृत्यपाकयज्ञतंत्रमुक्तम् केचित्तुआज्यंसंस्कृत्येतिवचनादग्निस्थापनाज्यसंस्कारपात्रसंमार्गा
तिरिक्तंनकार्यमित्याहुः अथदेशकालौसंकीर्त्यअस्यकुमारस्यआयुरभिवृद्धिव्यवहारसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्री
परमेश्वरप्रीत्यर्थंनामकर्मकरिष्यइतिसंकल्प्य गणेशपूजनस्वस्तिवाचनादिकुर्यात् केवलनामचिकीर्षायांस्वस्तिवाचनमुपक्रम्यपुण्या
हत्रयमुक्त्वाऽमुकनाम्नेऽस्मैस्वस्तिभवंतोब्रुवंत्वितित्रिर्वदेत् ब्राह्मणाश्चैतन्नाम्नेस्वस्तीतिप्रतिब्रूयुः ततश्चपुण्याहशेषंसमापयेत् जा
तकर्मसहितनामचिकीर्षायामस्यकुमारस्यजातकर्मनामकर्मणोःपुण्याहंभवंतोब्रुवंत्वितित्रिरुक्त्वात्रिःप्रत्युक्ते अस्यकुमारस्यजातकर्म-
णएतन्नाम्नेऽस्मैचस्वस्तिभवंतोब्रुवंत्वितित्रिर्वदेत् तदनुसारिप्रतिवचनेब्राह्मणैर्दत्तेऽस्यकुमारस्यजातकर्मणोः ऋद्धिंभवंतोब्रुवंत्विति
त्रिर्वदेत् ऋध्यतामितिब्राह्मणाःप्रतिब्रूयुः ततःपुण्याहशेषंसमाप्यनांदीश्राद्धांतंकृत्वाआचारप्राप्तंनामदेवतापूजनंकुर्यात् तदि
त्थम् तंडुलपूर्णकांस्यपात्रेसुवर्णशलाकयाश्रीगणेशायनमइतिलिखित्वाकुलदेवतानामलिखेत् श्रीनृसिंहभक्तइत्यादिततोमा-

सनामकृष्णइत्यादि ततोनाक्षत्रनामकृत्तिकइत्यादि ततोव्यावहारिकंशिवशर्मेति नामदेवताश्चेनमइतितेष्वक्षतेषुनामदेवताआवा-
हयेत् तदस्तुमित्रावरुणा॰ गृह्णवैप्रतिष्ठा॰ प्रतिष्ठाप्यनाममंत्रेणषोडशोपचारैः संपूज्य बालस्यदक्षिणकर्णेउपदिशेत् तदित्थम् इदमा
र्याः कुमारस्यनामास्यविदध्याम्यहमितिप्रार्थितब्राह्मणैः अनुज्ञातः श्रीगणपतयेनमइत्युक्त्वा न्यस्यकुलदेवतानाम्नाश्रीनृसिंहभक्तोऽ
सिमासनाम्नाकृष्णोसि ततोनाक्षत्रेणनाम्नाकृत्तिकोसिइत्युपांसुवदेत् ततोव्यावहारिकेणनाम्नाशिवशर्मासीति तदस्तुमित्रावरु
णा॰ गृह्णवैप्रतिष्ठेत्युक्त्वाप्रतिष्ठितंनामास्त्विति ब्राह्मणाः प्रवदेयुः ततः कर्तातिष्ठन्कुलदेवतानाम्नाश्रीनृसिंहभक्तोभवतः सर्वा-
न्ब्राह्मणानभिवादयतेइतिवदेत्तेचायुष्मान्भवतुश्रीनृसिंहभक्तइतिवदेयुः एवंकर्तामासनाम्नाकृष्णोभवतअभिवादयतेइतिवदे-
त् तेचायुष्मान्॰ कृष्णइतिवदेयुः कर्तोपांसुवदेन्नाक्षत्रेणनाम्नाकृत्तिकइतिभवतः सर्वान्ब्राह्मणानभिवादयतेइत्युच्चैः आयुष्मान्भव
तुभवदुक्तनामेतितेवदेयुः कर्ताव्यावहारिकेणनाम्नाशिवशर्माभवतइति॰ तेचायुष्मान्भवतुशिवशर्मेतिवदेयुः तदस्तु॰ गृह्णवैप्रति॰
ततः कृतस्यनामकर्मणः पूर्णतासिद्ध्यर्थंदशब्राह्मणान्भोजयिष्येइतिसंकल्प्य भूयसीदानंचसंकल्प्येश्वरार्पणंकुर्यात् प्रयोगकाले
पि अभिवादनीयनाम्नउपांशुत्वमाहशौनकः अभिवादननामेदमस्येत्यालोच्यचेतसा उपांसुनिर्दिशेच्चैतन्नजानीयुःपरेययेति अ
भिवादनीयंचनाक्षत्रमेव पूर्वोदाहृतबोधायनवचनात् तच्चव्यावहारिकोत्तरंकार्यमितियद्यपिआश्वलायनीयपाठक्रमादवगम्यते यद्य

पिपारिजातेप्रयोगकालेयमेवक्रमोनुसृतस्तथापिसूक्तवाकेदेवत्रातेननाक्षत्रोत्तरंव्यावहारिकविनियोगकथनात् तदुदात्ततत्साधकन्या
यसहकृतवृद्धाचारवशाच्चविपरीतक्रमोमयोदात्तः नामकर्मणिव्यावहारिकस्यैवशर्मोतत्वेस्मृतिसिद्धेपिअभिवादनेनाक्षत्रस्यतदं
तत्वंचार्चनिकम् इतिपुंसांनामकर्म अथस्त्रीणाम् संकल्पेऽस्याःकुमार्याइतिविशेषः स्वस्तिवाचनेएतन्नाम्न्येअस्यैस्वस्तिभ
वंतोब्रुवंत्वितिस्वस्तिवाचनंतेनामानिलिखेत् भक्तेत्याबंतंकुलदेवतानामामासनामस्कन्चक्रिणीवैकुंठीवास्कदेवीति त्रीणिङीबंतानि
सांकेतिकेषुअवयवार्थाभावेपिनांतत्वाणंतत्वयोर्ङीब्व्युत्पत्तिनिमित्तयोरनपायात् हरिरित्यविकृतंसंकेतनमतिशब्दवत्स्त्रियांसंभवा
त् कृष्णाअनंतेत्येवमवशिष्टान्याबंतानि अदंतत्वात् ननाक्षत्रंसात्दत्तोक्तमपिआश्वलायनशाखिभिःकार्यंअभिवादनीयनिषेधस्य
जयंतेनोदात्ततत्वात् व्यावहारिकेदायज्ञदाशर्मेत्यादिपुंवत्प्रयोगः नाममंत्रेणपूजादि वैदिकमंत्रवर्जंपुंवत् द्विविधमप्येतत्पितुरसान्नि
ध्येपितामहादिःकुलवृद्धःकुर्यात् पितानामकुर्यादन्योवाकुलवृद्धइतिशंखस्मरणात् इतिसंस्कारकौस्तुभेनामकर्म अथ
दोलारोहणं भविष्ये अभीष्टेपुण्यदिवसेचंद्रताराबलान्विते मृदुध्रुवक्षिप्रभेषुमातावाकुलयोषितः योगशायिहरिंस्मृत्वाप्राक्शी
र्षेविन्यसेच्छिशुमिति मृदुध्रुवादिलक्षणंश्रीपतिः रोहिण्युत्तरभंस्थिरंगिरिशमूलेंद्रोरगंदारुणंक्षिप्रंचाश्विवदिनेशपुष्यमनलेंद्राग्नीतु-
साधारणम् उग्रंपूर्वमघांतकंमृदुमृगत्वाष्ट्रांत्यमैत्रंचराविष्णुस्वातिशतोडुवस्वदितयःकुर्युःस्वसंज्ञाफलमिति रोहिणीउत्तरात्रयंचेतिस्थि

रं आर्द्रामूलज्येष्ठाश्लेषादारुणानि अश्विनीहस्तपुष्याः क्षिप्राणि कृत्तिकाविशाखेसाधारणे पूर्वात्रयंमघाभरणीउग्राणि मृगचि-
त्रारेवत्यनुराधामृदूनि श्रवणस्वातीशततारकाधनिष्ठापुनर्वसवश्चराणि एतेषांसंज्ञानुसारिफलंज्ञेयमिति ईदृशनक्षत्रनियमायवादो
ज्योतिर्निबंधे आंदोलाशयनेपुंसोद्वादशोदिवसः शुभः त्रयोदशस्तुकन्यायांननक्षत्रविचारणा अन्यस्मिन्दिवसेनेत्स्यात्तिर्यगास्येप्र-
शस्यतइति अन्यदिवसानाहपारिजातेबृहस्पतिः दोलारोहस्तुकर्तव्योदशमेद्वादशेपिवा षाडशेदिवसेवापिद्वात्रिंशदिवसेपिवेति द्वा
त्रिंशइतिक्वचित्पाठः इतिसंस्कारकौस्तुभेदोलारोहणम् अथदुग्धपानंश्रीधरीये एकत्रिंशेवासरेवाद्वितीयेजन्मर्क्षेवा
शुभलग्नेनुकूले शंखेक्षीरंसंनिदध्याच्छिशूनांवक्त्रेधात्रीपूज्यपूजांविधायेति शंखइतिसप्तमीतृतीयार्थे पूज्याःकुलदेवताविप्राश्च
नृसिंहः पूर्वाण्हेवाथमध्यान्हेकुर्याद्रात्रिंविवर्जयेत् योगिनीराहुरुद्रादिसुखंचैवविवर्जयेदिति योगिन्यादिलक्षणंयोगिनीनां-
स्थिरचरभेदश्चज्योतिःशास्त्रादवगंतव्यः इतिसंस्कारकौस्तुभेदुग्धपानम् अथाचारप्राप्तंजलपूजनमाहुर्ज्योतिर्विदः
कवीज्यास्तचैत्राधिमासेनपौषेजलंपूजयेत्सूतिकामासपूर्तौ बुधेंद्वीज्यवारेविरिक्तेतिथौहिश्रुतीज्यादितींद्वर्कनैर्ऋत्यमैत्रेरिति शुक्रगु
र्वस्तयोश्चैत्रेऽधिमासेपौषेचनकार्यं मासांतेबुधसोमगुरुवारेषुरिक्तान्यतिथौश्रवणपुष्यपुनर्वसुमृगहस्तमूलानुराधानक्षत्रेषुकुर्या-
दितिभावः इतिसंस्कारकौस्तुभेजलपूजनम् अथशिशोस्तांबूलभक्षणम् सार्धेमासद्वयेदद्यात्तांबूलंप्रथमंशिशोः कर्पू

रादिकसंमिश्रंविल्लासायहितायच सार्धयुग्मकमासेतुपूगस्यप्राशनंशुभम् षड्भिरन्नस्यमासैरुक्तभोगीभोगेभवेन्नरइति षड्भिर्मासैर-
न्नस्यभोगइत्यन्वयः अतोऽन्नप्राशनकालस्तांबूलभक्षणेविशिष्टइतिप्रतीयते इतितांबूलभक्षणम् अथसूर्यावलोकनसंस्का-
रः पारिजातेयमः तृतीयेमासिकर्त्तव्यमहःसूर्यस्यदर्शनम् चतुर्थेमासिकर्तव्यमग्नेश्चंद्रस्यदर्शनम् उपनिष्क्रमणंकुर्याच्चतुर्थे
मासिसावनेइति शौनकः अन्नप्राशनकालेवाकुर्यान्निष्क्रमणक्रियामिति अथनिष्क्रमणकालः मुहूर्तसंग्रहे पूर्वपक्षःशुभः
प्रोक्तःकृष्णश्चांत्यत्रिकंविना तथा रिक्ताषष्ठ्यष्टमीदर्शाद्वादशीचविवर्जिताइति वारनक्षत्राण्याहबृहस्पतिः जीवभार्गवसौ
म्यानांशिशुनिष्क्रमणक्रिया दिवसेशस्यतेनित्यमायुर्वृद्धिधनप्रदेति अश्विनीरेवतीहस्तधनिष्ठारोहिणीतथा श्रवणंपुष्यसं-
युक्तंमृगेणोत्तरफल्गुनी अनुराधोत्तराषाढातथैवचपुनर्वसुः इमानिभानिशस्तानिशिशोर्निष्क्रमणेविधाविति योगादिमुहूर्तसंग्र
हे वर्ज्याश्चाऽशुभयोगाश्चविष्टिश्चशकुनादिचेति आदिशब्देननिषिद्धकरणांतरसंग्रहः अथनिष्क्रमणेविशेषविधिर्विष्णुधर्मो
त्तरे चतुर्थेमासिकर्तव्यंशिशोर्निष्क्रमणंगृहात् दिगीशानांदिशांतत्रतथाचंद्रार्कयोर्द्विजः पूजनंवासुदेवस्यगगनस्यचकारयेत्
ततःस्वलंकृताधात्रीबालमादायपूजितम् बहिर्निष्कासयेद्गेहाच्छंखपुण्याहनिस्वनैः ततस्तत्रपठेन्मंत्रंयंतंरामनिबोधमे चंद्रा
र्कयोर्दिगीशानांदिशांचगगनस्यच निक्षेपार्थमिमंदद्मितेशुभंरक्षंतुसर्वदा अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा रक्षंतुसततंस

वैदेवाः शक्रपुरोगमा इति स्त्रीणामविधवानांच द्विजानांस्फल्हदांतथा तदातु पूजाकर्त्तव्यागीतनृत्यैस्तथोत्सवइति शंखग्रहणंवा
द्यांतरोपलक्षणं तत्र बहिर्देशगमनेतुमंत्रांतरमाहाश्वलायनः नयेदाकल्पकैः सम्यग्देवतायतनंगृहात् अभ्यर्च्यदेवतामूर्तिपंचघो
षपुरःसरम् भोजयित्वाद्विजान्गेहेस्वस्तिवाचनमाचरेत् शाकुंतेप्रजपेत्सूक्तेशिशोर्निष्क्रमणेपितेति आकल्पैर्भूषणैःपंच-
घोषाःपंचविधावाद्यघोषाः शाकुंतेसूक्तेकनिक्रददितिप्रदक्षिणिदितिच ततोमंगलदर्शनंकारणीयमित्यपिविष्णुधर्मोत्तरे द्विजां
श्चादर्शपूर्वाणिमंगलानिपुरोनयेत् दर्पणःकलशःकन्यातथास्फमनसोक्षताः दीपमालाध्वजोलाजाःसंप्रोक्तंचाष्टमंगलम् वि
वाहेनिष्क्रमेकाम्येवृद्धौसूतौसमागमे उत्सवेषुचयात्रायांप्रशस्तंचाष्टमंगलमिति शौनकः निर्गमय्यगृहादेनंनीत्वाचेष्टस्फ
रालयम् ततःप्रदक्षिणंनीत्वाबालंतद्देवतालये गंधमाल्यादिभिस्तत्रपूजयित्वाचदेवताम् प्रणमय्यचतंबालंततोदेवालय-
स्थितैः विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनंदितम् मातुलादेःसमासन्नबंधोःप्रापय्यमंदिरम् तत्रोपाहरदानाद्यैराशिर्भिश्चापि
लालितम् कुमारंपरिगृह्यैनंप्रापयेत्सगृहंततइति जयंतः ततोमातृष्वसृमातुलादिगृहंगत्वातेषांचाशीर्वचनादिभिर्नंदितोदी
र्घायुर्भवतीति बृहस्पतिः स्वस्तिवाच्यसमारूढवाहनंनिर्गमयेद्गृहात् मातुलोवावहेत्तत्रनिर्वाहनशिशुंस्वयम् शिशुनासहमि
त्राणिनिर्गच्छेयुर्गृहात्स्वयम् सहदुंदुभियोषैश्चवाद्यशब्दसमन्वितैः चतुरस्रेप्रशस्तेदेशेगोमयेनोपलेपिते धान्यपुंजसमासीनं-

बालंबालामथापिवा अर्चयेद्गंधपुष्पाद्यैस्तस्मिन्भूर्भिललाटके अस्यरक्षांततःकृत्वामृतसंजीवनंजपेत् तत्रार्चयेद्गणेशानंभूतेशानं
तथैवच भक्ष्यैर्विचित्रैःसफलैःशिशून्नभ्यर्चयेद्बुधइति कृत्वेतिमुखंव्यादायस्वपितीतिवत् पौर्वापर्यमविवक्षितम् शिशुनेति तद्धस्ते
नपूजनंकारयेदित्यर्थः अत्रकर्तृनियममाहशौनकः मासेचतुर्थेषष्ठेवाशिशोर्निष्क्रमणंगृहात् विदधीतास्यपित्रादिर्हितैषीयथरक्ष
कइति यद्यपि सूत्रयोः कर्मणीयेचतयोःश्राद्धंनविद्यतइतिकातीयस्मरणान्नाऽत्रनांदीश्राद्धमितिकल्पतरुणोक्तं तथापिआश्वलाय
नशाखिभिरिच्छयानुष्ठेयम् अन्यैःषोडशसंस्कारश्रावणयादिष्वपीष्यतइतिकारिकोक्तेः अस्यनित्यकाम्यत्वमाहबृहस्पतिः अथ
निष्क्रमणंनामगृहात्प्रथमनिर्गमः अकृतायांक्रियायांस्यादायुःश्रीनाशनंशिशोः कृतेसंपद्विवृद्धिःस्यादायुर्वृद्धनमेवचेति अथ
भूम्युपवेशनकालः विष्णुधर्मोत्तरे पंचमेचतथामासेभूमौतमुपवेशयेत् तिथिंविवर्जयेद्रिक्तांशस्तानिशृणुभानिमे उत्तरात्रि
तयंसौम्यंपुष्यर्क्षंशक्रदैवतम् प्राजापत्यंचहस्तंचशस्तमाश्विनमित्रभम् नचसर्वेग्रहाःशस्ताभौमोराभविशेषतः भौमानुकूल्यमत्रा
वश्यकमितिभावः वाराहंपूजयेद्देवींपृथिवींचतथाद्विजः पूजनंपूर्ववत्कृत्वागुरुदेवद्विजन्मनाम् देवःकुलदैवतम् भूभागमुपलि
प्याथकृत्वातत्रतुमंडलम् शंखपुण्याहशब्देनभूमौतमुपवेशयेत् मंत्राश्चात्रभवंतीमेतान्मेनिगदतःशृणु रक्षैनंवसुधेदेविसदासर्वग
तंशुभे आयुःप्रमाणंसकलंनिक्षिपस्वहरिप्रिये अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः जीविताारोग्यवित्तेषुनिर्दहस्वाचिरेणतान्

धारिण्यशेषभूतानांमातस्त्वमधिकात्ध्यसि अजरावाप्रमेयाचसर्वभूतनमस्कृते त्वमेवाशेषजगतांप्रतिष्ठान्वाश्रयात्ध्यसि कुमारंपाहि
मातस्त्वंब्रह्मातदनुमन्यतामिति तस्योपवेशनंकृत्वाभूमौब्राह्मणपूजनम् ततःकृत्वाततःकार्यमुत्सवंपूर्ववद्विजइति उत्सवंनीराज-
नादीतिव्याख्यातंपारिजाते एतत्कुमार्याअपि अथान्नप्राशनकालः आश्वलायनः षष्ठेमास्यन्नप्राशनमिति पारिजातेनारदः
जन्मतोमासिषष्ठेस्यात्सौरेणोत्तममन्नदम् तदभावेऽष्टमेमासेनवमेदशमेपिवा द्वादशेवापिकुर्वीतप्रथमान्नाशनंपरं संवत्सरेवासं
पूर्णेकेचिदिच्छंतिपंडिताइति सौरेणमानेनषष्ठइत्यन्वयः नचायमेवनियमः बालान्नभोजनविधौगुरुशुक्रमौढ्यबाल्यप्रयुक्तमशु
भंत्वधिमासदोषः नास्त्येवसावनविधाविहमासिषष्ठेयुग्मेचमासिपरतःशुभचंद्रपक्षइतिविधिरलं सावनमानेनापिषष्ठस्यमासस्य-
विधानात् शुभचंद्रपक्षःशुक्लपक्षः तत्रापिपरस्मिन्पंचम्याःपरभागइत्यर्थः पंचम्याःकृष्णपक्षइतिशास्त्रांतरसंवादात् युग्मेमासी
तिषष्ठासंभवेऽष्टमादियुग्ममासएवपुंसान्नप्राशनेग्राह्यइतिनियमार्थं अतएवनारदवाक्येननवममासविधिःस्त्रीणामन्नप्राशन-
विषयः तथाचगर्गः नरस्याऽन्नाशनेयुग्मंस्त्रीणामन्नाशनेयुजमिति तत्रापियथाकुलधर्मव्यवस्था यद्वेष्टंमंगलंकुलइतिम
नूक्तेः तिथीःप्राहलघुनारदः द्वितीयाचतृतीयाचपंचमीसप्तमीतथा त्रयोदशीचदशमीप्राशनेतिथयःशुभाः पंचपर्वसुरिक्ता
यांनंदायामाद्यभोजनम् बलमायुर्यशोहंतिसप्तम्यांचेतिकेचन रिक्तांदिनक्षयंनंदांद्वादशीमष्टमीमिमाम् त्यक्त्वान्यतिथयःश्रेष्ठाः

सं॰कौ॰
१०३

प्राशनेशुभवासराइति वासराइत्यनंतरंश्रेष्ठाइत्यनुषंगः वासराणांशुभत्वंफलद्वारेणाहमार्त्तंडः वाचालोबलवान्दिनेदिनपतेरत्यं-
तदीप्तानलोदेहीहीनहुताशनःशिशिरगोकौजेरुजापीडितः बौधेभोगकरंबंश्रियोनवरतंजीवेचिरायुःकरवौशुक्रेचातिबलान्वितोः
तिमलिनोमंदेचमंदानलइति शिशिरगुःसोमवारः कौजोभौमवारः बृहस्पतिः पौष्णादितींदुहस्ताश्विवत्वाष्ट्रवैष्णववासवाः रोहि
णीमैत्रतिष्याश्चवरुणश्चोत्तरात्रयम् श्रविष्ठाचशुभात्ह्येतेषोडशान्नाशनेशुभाइति पौष्णंरेवती अदितिःपुनर्वसुः इंदुर्मृगःवासवं
धनिष्ठा वरुणःशतभिषक् ज्योतिरर्णवः जन्मर्क्षेश्रीक्षयंविद्यात्कर्मर्क्षेचापिसौख्यकृत् आधानर्क्षेचबालानांभोजनेरोगनाशन
मिति एतान्युक्तानिसंग्रहे जन्मभंजन्मनक्षत्रंदशमंकर्मसंज्ञितम् एकोनविंशमाधानमिति यत्तुनारदेनोक्तम् पट्टबंधनचौलान्न
प्राशनेचोपनायने शुभदंजन्मनक्षत्रमशुभंत्वन्यकर्मणीति तत्क्षत्रियविषयं पट्टबंधसाहचर्यात् बृहस्पतिः नवेधृतौव्यतीपा
तेविष्ट्यांगंडातिगंडयोः शूलेवज्रेनपरिघेबालान्नप्राशनंशुभमिति लग्ननियममाहकश्यपः गोश्वकुंभतुलाकन्यासिंहकर्किनृयु
ग्मकाः शुभदाराशयश्चैतेनमेषझषवृश्चिकाइति अश्वोधनुरुच्यते राजमार्तंडः लाभत्रिषष्ठनवमोपगतास्तुसौम्याःसौम्यग्र
हानवमपंचमकंटकस्थाः लग्नेषुदैत्यसचिवज्ञबृहस्पतीनामन्नोपभोगकरणेविविधोपयोक्तेति कंटकशब्देनप्रथमचतुर्थसप्तम
दशमस्थानानिकेंद्रपदवाच्यान्युच्यंते अन्नप्राशनांतेकर्तव्यंपारिजातेमाधवीयेचमार्कंडेयः अग्रतोथपरिन्यस्यशिल्पभांडानि

सर्वशः शस्त्राणिचैववस्त्राणिततःपश्येत्तुलक्षणम् प्रथमंयत्स्पृशेद्बाल स्ततोभांडंस्वयंतदा जीविकातस्यबालस्यतेनैवतुभविष्यती
ति एवंसूर्यावलोकनादीनांभिन्नकालत्वोपदेशेपिशिष्टैरन्नप्राशनकालएवप्रायशोनुष्ठानात् शौनकेननिष्क्रमणोऽन्नप्राशनकालोपदे
शात्सौकर्यात्सहप्रयोगोभिधीयते तत्रान्नप्राशनकालाविरोधेननिष्क्रमणादिकालोपसंहारेणनिर्णीतदिनेभार्ययासहकृताभ्यंगस्नानोदेशका
लौसंकीर्त्यममाऽस्यकुमारस्यायुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसूर्यावलोकनंआयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीप
रमेश्वरप्रीत्यर्थंनिष्क्रमणंआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंभूमावुपवेशनंमातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइंद्रियायु
र्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनंचकरिष्यइतिसंकल्प्यगणेशपूजनादिनांदीश्राद्धांतं
कृत्वानिष्क्रमणांगत्वेनेंद्रादिविंशतिदेवताउपवेशनांगत्वेनवाराहंपृथिवींच सूर्यावलोकनादिसंकल्पितसकलकर्मांगत्वेनइष्टदेवतांचपूज
यिष्यइतिसंकल्प्यत्रयोविंशतिप्रतिमासुधान्यपुंजेषुवा ॐ इंद्रायनमः इंद्रमावाहयामीत्येवमिंद्राग्नियमादिलोकपालान् ॐ प्राच्यैनमः
प्राचीमावाहयामीत्येवंप्राच्याद्यैशान्यंतादिशश्चंद्रायनमोर्कायनमोवासुदेवायनमोगगनायनमोवराहायनमोपृथिव्यैनमइत्येतैर्मं
त्रैःप्रणवाद्यैरमुमावाहयामीत्यंतैश्चेंद्रादिदेवताअमुष्मैनमोऽमुमावाहयामीतीष्टदेवंचावाह्यषोडशोपचारैःसंपूज्यसूर्यावलोकनंका
रयेत् तद्यथा स्वस्तिनःस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् शिशोरंकारोपणेविनियोगः ॐ स्वस्तिनोमिमीतामितिमंत्रेणशिशुमंक-

मारोप्य आशुःशिशानइतिसूक्तस्येंद्रोप्रतिरथइंद्रस्त्रिष्टुप् चतुर्थीबार्हस्पत्यात्रयोदश्यनुष्टुप् जपेवि॰ ॐआशुःशिशानो॰ वरंवरम् त
च्चक्षुर्वसिष्ठःसूर्यःपुरउष्णिक् शिशोःसूर्यावेक्षणेवि॰ तच्चक्षुर्देवहितं॰ ऋक् अथनिष्क्रमणम् पूजितदेवताप्रीत्यर्थंत्र्यवरब्रा
ह्मणान्भोजयित्वाऽस्मैकुमारायस्वस्तिभवंतोब्रुवंत्वितिस्वस्तिवाचयित्वायथाशक्त्यलंकृतंबालंधात्र्यामातुलेनवावाहनेवोह्यमानंमंगल
वाद्यघोषेणकनिक्रददितिशाकुंतसूक्तद्वयंपठन्ज्ञातिभिःसहबहिर्नीत्वापुरोभागेब्राह्मणानांदर्पणकलशकन्याद्यष्टमंगलानांसूर्याग्नि
चंद्रधेनूनांयथासंभवंदर्शनंकारयित्वाबहिर्देशेशुचौस्थानेसशिशुरुपविश्यदेवताःप्रार्थयेत् चंद्रार्कयोर्दिगीशानांदिशांचगगनस्य
च निक्षेपार्थमिमंदद्मितेमंरक्षंतुसर्वदा अप्रमत्तंप्रमत्तंवादिवारात्रावथापिवा रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाइति वरुणस्यचे
तिपाठः दिशांचेत्यनुक्तसमुच्चयार्थंचकारोच्चारणकालेवास्फुदेवंध्यायंत् तेमभित्येकारश्छांदसः त्वामित्यपपाठः पारिजातधृतपौरा
णपाठावदर्शनात् ततोविष्णुशिवादीष्टदेवालयंनीत्वास्वगृहस्थदेवसमीपेवानीत्वादेवंसंपूज्यबालंप्रणमय्यप्रदक्षिणंचकारयित्वा
मातुलादिबंधुगृहंप्रापय्यस्वगृहेतमानीयमातुलादिनावस्त्रादिभिःपितृभ्यांसहबालेपूजितेस्वगृहेगोमयेनोपलिप्तेदेशेचतुरस्रंधा
न्यराशिंनिर्विधायतेषूपविष्टबालस्यशिरसिभालेचविभूत्यालेपनेनरक्षांकुर्यात् त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् रक्षाकरणेवि॰ ॐहौंजूंसःत्र्यं
बकंयजामहे॰मृतात् सःजूंहौंॐमितिमृतसंजीवनमंत्रेणततोगणेशंभूतेशानंचशिशुहस्तेनसफलापूपाद्युपहारैस्तोषयित्वाब्राह्म

पौः सुवासिनीभिश्चाशिषो वाचयेत् इति निष्क्रमणम् अथोपवेशनम् सौमानुकूल्ये गुरुं द्विजन्मनश्च संपूज्य कृतकर्मण ऐशा
नदेशे उपलिप्ते तंडुलपिष्टेन तंडुलैश्च कृतमंडलोपरि वाद्यशब्देन ब्राह्मणकर्तृकेण उद्गातवशकुने सामगायसीत्यादि मंत्रघोषेण च बालं
पित्रादिरुपवेशयेत् तस्य मंत्राः रक्षैनं वसुधे देवि सदा सर्वगतं शुभे आयुःप्रमाणं सकलं निक्षिप स्व हरिप्रिये अचिरादायुषस्त्वस्य ये
केचित्परिपंथिनः जीविताराेग्यवित्तेषु निर्दहस्वाचिरेण तान् धारिण्यशेषभूतानां मातस्त्वमधिकाह्यसि अजराचाप्रमेया च स-
र्वभूतनमस्कृते त्वमेवाशेषजगतां प्रतिष्ठा चाश्रयाह्यसि कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यतामिति पारिजातानुसार्येष पाठः
केचित्तु प्रमाणं निखिलमिति पठंति अन्ये मातात्वमसि कामधुगिति ततो ब्राह्मणान् संपूज्य बालस्य सुवासिनीभिर्नीराजनं कारणीयं
श्रियेजातइति ब्राह्मणाः इत्युपवेशनम् अथान्नप्राशनम् दधिमधुघृतमिश्रमन्नं नवे कांचने कांस्यमये वा पात्रे निक्षि-
प्य पूजितेष्टदेवं प्रणम्य तत्पुरतः शुभवस्त्रोपरि स्थितमातुरुत्संगे प्राङ्मुखो वोपविष्ट शिशोः सुवर्णहस्तोन्नं पात्रा दीषदादाय मंत्रेण
प्रथमप्राशनं कारयेत् अन्नपतइत्यस्य नलकूबरोन्नपतिर्जगती अन्नप्राशने वि० ओं अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः प्र
प्रदातारं तारिषऊर्जं नो धेहि द्विपदे चतुष्पदइति ततो यथेच्छं भोजयित्वा बालस्य मुखं स्वहस्तं प्रक्षाल्याचामेत् जयंतस्त्वाह अन्नं
संस्कृत्य प्रथमं ब्राह्मणानाराध्य तेषु शोभनमभिहितवत्सु स्नातमलंकृतं सुकृत्य आसने प्राङ्मुखमुपवेश्योक्तविधिनान्नं मंत्रेण प्राशये

त् ततः पंचकृत्वस्तूष्णीं प्राशयेदिति ततः कर्पूरैलादिसंयुक्तं तांबूलं प्राशयेत् ततः पुस्तकशस्त्रादीनि शिल्पानि बालस्याऽग्रे निधा
य परीक्षां कुर्यात् ततः प्रतिसंस्कारं दशदशोतित्रीं स्त्रीनिति वा ब्राह्मणान् भोजयिष्य इति संकल्प्य निष्क्रमणांगत्वेन यथाशक्ति सुवासि
नीर्भोजयिष्य इति च संकल्प्य भूयसीं दक्षिणां च संकल्प्येश्वरार्पणं कुर्यादिति इति संस्कारकौस्तुभे सूर्यावलोकननिष्क्रमणोपवे
शनान्नप्राशनप्रयोगः अथ कर्णवेधः तत्र राजमार्त्तंडः ताराचंद्रानुकूल्येऽन्हि शस्ते भास्वति वाक्पतौ अयुक् संवत्सरं प्राहुः
कर्णवेधविधिं बुधा इति मुहूर्तसंग्रहे दशमे द्वादशे वाऽन्हि षोडशे कर्णवेधनम् प्रथमे सप्तमे मासि अष्टमे दशमेपि वा द्वादशे च तथा
कुर्यात् कर्णवेधं शुभावहमिति गर्गः मासे षष्ठे सप्तमे वा अष्टमे मासि वत्सरे कर्णवेधं प्रशंसंति पुष्ट्यायुःश्रीविवृद्धय इति वत्स
र इति प्रथमवत्सरांतर्गतानुक्तमाससंग्रहार्थम् तत्र तृतीयादिवत्सरे च नियममाह व्यासः कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेपि वा क
र्णवेधं प्रशंसंति शुक्लपक्षे शुभे दिने इति व्यावहारोच्चये तु न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते तिथौ न रिक्ते न च विष्टि
दुष्टे कर्णस्य वेधं मुनयो वदंतीति अत्र चैत्रपौषनिषेधो मीनधनुःस्थसूर्यविशिष्टकालविषय इति हेन्द्राः बोधिन्युत्तरभागविषय
श्च कार्तिकविधिः भाद्रपदनिषेधश्च दोषाधिक्यार्थः तिथीराह बृहस्पतिः द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी द्वादशी पंच
मी शस्ता तृतीया कर्णवेधने नृसिंहः एकादश्यष्टमी पर्वरिक्ता वर्ज्या इति वारान्नक्षत्राणि च बृहस्पतिः भूमिजार्कात्मजार्काणां

दिवसान्परिवर्जयेत् जीवेंदुजेंदुशुक्राणांदिवसाःपूजितामताइति सौम्यार्यादित्युत्तरात्रिहस्तचित्राश्विविष्णुभम् धनिष्ठारेवती
चैवशस्ताःस्युःकर्णवेधनइति आर्यःपुष्यः कश्यपः शुभयोगेषुसर्वेषुकर्णवेधःशुभावहइति लग्नव्यवस्थांनारदः वृषभेमि-
थुनेमीनेकुलीरेकन्यकासुच तुलाचापेतुकुर्वीतकर्णवेधंशुभंहुये मेषश्चमकरश्चैवमध्यमौगुरुणोदितौ सिंहवृश्चिककुंभाश्च-
अधमत्वाद्विवर्जिताइति कर्णवेधविधिर्विष्णुधर्मोत्तरे पूर्वाण्हेपूजनंकुर्यात्केशवस्यशिवस्यवा ब्रह्मणश्चंद्रसूर्याभ्यांदिगीशा
नांतथैवच नासत्ययोःसरस्वत्याब्राह्मणानांगवांतथा गुरूणामर्चनंकृत्वातत्रदत्वावरासनम् तत्रोपवेशयेत्तत्रधात्रींशुक्लांबरांत
था अलंकृतंतदुत्संगेबालंधृत्वातुसांत्वितम् घृतस्यनिश्चलंसम्यगलक्तकरसांकिते विध्येदेवंकृतेछिद्रेसकृदेवात्रलाघवात्
प्रादक्षिणेकुमारस्यभिषक्वामेतुयोषितः शिशोर्विवर्धनंकार्ययावदाभरणक्षमम् कर्णवेधेसदाविप्राःसांवत्सरचिकित्सकाः
पूज्याश्चाविधवानार्यःसुहृदश्चतथाद्विजेति अत्रसूचीव्यवस्थामाहबृहस्पतिः सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः शूद्र
स्यचायसीसूचीमध्यमाष्टांगुलात्मिकेति बालस्यमध्यमांगुलिमध्यपर्वमितांगुलेनाष्टांगुलेत्यर्थः छिद्रमानमाहदेवलः कर्णरंध्रे
रवेश्छायानविशेदग्रजन्मनः तंदृष्ट्वाविलयंयांतिपुण्यौघाश्चपुरातनाइति इतिसंस्कारकौस्तुभेकर्णवेधः अथबाल
स्यदुष्टदृष्टिदोषादौरक्षाविधिः पारिजातेकपिलसंहितायाम् शिशुसंरक्षणार्थायाःशुभग्रहनिवारिणीम् रक्षांसंध्या-

स्रकुर्वीतनिंबसर्षपमृजनैः फलीकरणसंमिश्रैः करंजैरवलोकने बचोधरान्नदेशेषुबालग्रहविमुक्तये वासुदेवोजगन्नाथः पूत
नातर्जनोहरिः रक्षतुत्वरितोबालंमुंचमुंचकुमारकम् कृष्णारक्षशिशूंशंखमधुकैटभमर्दन प्रातःसंगवमध्यान्हसायान्हेषुचसंध्ययोः
महानिशिसदारक्षकंसारिष्टनिषूदन यद्गोरजःपिशाचांश्चग्रहान्मातृग्रहानपि बालग्रहान्विशेषेणछिंधिछिंधिमहाभयात् त्रा
हित्राहिहरेनित्यंत्वद्रक्षाभूषितंशिशुम् इतिभस्माभिमंत्र्यैवभूषयेत्तेनभस्मना शिरोललाटहृदंगेषुरक्षांकुर्याद्यथाविधि मंत्र
संरक्षणादेवशिशुःसंवर्धतेऽन्वहमिति वचनकालेधरारिंगणकालेअन्नप्राशनकालेवृक्षादिच्छायादर्शनेदुष्टदृष्ट्यवलोकनेनिमि
त्तेकरंजांतद्रव्यैरक्षांकुर्वीतेत्यन्वयः यद्गोरजइतिगोरजस्तुःप्रार्थनाप्रतीतेर्गोरजःसहितभस्माभिमंत्रणंद्रष्टव्यम् इतिसंस्का
रकौस्तुभेदृष्टिदोषरक्षाविधिः बालस्यस्खलनादौरक्षाविधिर्हरिवंशे नंदोंकमेनमारोप्यभूरेणुंपरिगृह्यच शिरःप्रदक्षि
णंकुर्वन्मंत्रमेनंजजापह विष्णुस्तेपूर्वतःपातुरुद्रोरक्षतुदक्षिणे ब्रह्माचपश्चिमेपायाच्चंद्रोरक्षत्वथोत्तरम् उपरिष्टात्तथासूर्यः-
पायाच्चाधश्चवासुकिः पायादूर्ध्वमधोवत्सशिष्टाःकाष्ठाःसमीरणः स्वस्तिंकरोतुभगवान्पिनाकीवृषभध्वजः गावोरक्षंतुसर्व
त्रभूमिःपातुसदाशिवा एवमुच्चार्यनंदस्तुकृष्णंपस्पर्शसर्वतः एषमंत्रोहिबालानांरक्षायैपरिकीर्तितः इतिसंस्कारकौस्तुभे
स्खलनादौरक्षाविधिः अथाऽब्दांतेजन्मतिथिकृत्यम् ब्रह्मपुराणगर्गसंहितयोः सर्वैश्चजन्मदिवसेस्नातैर्मंगलपाणि

भिः गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः देवः कुलदेवता सर्वपदेन शूद्राणामपि संग्रहः स्नानं तिलैः कार्यमित्यपि तत्रैवोक्तम्
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः तिलभुक् तिलवापी च षट्तिलो नावसीदतीति होमप्रकारश्च तत्रैवोक्तः एकैकां देवतां राम-
समुद्दिश्य यथाविधि चतुर्थ्यंतेन धर्मज्ञ नाम्नाच प्रणवादिनेति देवताः का इत्यपेक्षायामुक्तम् स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः
प्रतिसंवत्सरं चैकं कर्त्तव्यश्च महोत्सवः गुडदुग्धतिलान् दद्यात् जन्मग्रंथेश्च बंधनं कुर्यादिति शेषः तदुपयोगि द्रव्याण्यपि तत्रैवोक्ता
नि गुग्गुलं निंब सिद्धार्थ दूर्वा गोरोचनायुतम् उक्तपंचद्रव्यगर्भपोटलिकाबंधनं दक्षिणहस्ते कार्यमित्याशयः संपूज्य भानुविभ्रे-
शौ महर्षिं प्रार्थयेदिदम् चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा मार्कंडेय नमस्तेऽस्तु स
प्तकल्पांतजीवन आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने चिरंजीवी यथा त्वं तु मुनीनां प्रवर द्विज कुरुष्व मुनिशार्दूल तथा मां
चिरजीविनम् मार्कंडेय महाभाग सप्तकल्पांतजीवन आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भवेति श्रीपतिव्यवहारे मार्कंडेयपू
जोत्तरमन्येषामपि पूजोक्ता ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् प्रल्हादं च हनूमंतं बिभीषणमथार्चयेत् षष्ठीं च दधिभक्तेन
वर्षे वर्षे पुनः पुनरिति ततो गुडतिलमिश्रपयःपानं समंत्रकं कृत्वा गुरुपूजनं च कार्यमित्यप्युक्तम् अथ प्रयोगः ममाऽमुक-
शर्मण आयुष्याभिवृद्ध्यर्थं वर्षवृद्धिकर्म करिष्य इति संकल्प्य तिलोद्वर्तनपूर्वकं तिलोदकेन स्नात्वा नव्यवस्त्रं परिधाय कृतसंध्यावि

धिः दक्षिणपाणौ गुग्गुलादि पंचगव्यगर्भपोटलिकाबंधनं कृत्वा गुरुं विप्रांश्च संपूज्य प्रतिमासु अक्षतपुंजेषु वा ओंकुलदेवतायै नमइत्ये
वं कुलदेवतां स्वनक्षत्रं प्रकृतिपुरुषात्मानौ पितरौ प्रजापतिं भानुं विघ्नेशं मार्कंडेयं व्यासं जामदग्न्यं रामं अश्वत्थामानं कृपं बलिं प्रल्हादं हनू
मंतं बिभीषणं षष्ठीं चेति देवता आवाह्य संपूजयेत् षष्ठ्यै दधिभक्तनैवेद्यं दद्यात् ततो नमस्कृत्य चिरंजीवीत्यादिश्लोकचतुष्टयेन मार्कंडे
यं प्रार्थ्य षष्ठीं प्रार्थयेत् जयदेवि जगन्मातर्जगदानंदकारिणि प्रसीद मम कल्याणि नमस्ते षष्ठिदेवते रूपं देहि यशो देहि भागं भगवति देहि
मे पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु तानि मे इति
ततः पूजितदेवताभ्यो यथोक्तदेवतानामभिः प्रणवादिचतुर्थ्यंतैः प्रत्येकमष्टाविंशत्यवरसंख्यया तिलाहुतीर्हुत्वा क्षव्यपि तिलावापं कृत्वा
तिलगुडसंमिश्रं अंजल्यर्द्धमितं पयः पिबेत् तन्मंत्रः सतिलं गुडसंमिश्रं अंजल्यर्द्धमितं पयः मार्कंडेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे
यइति ततो गुरुं संपूज्य तस्मै दक्षिणां दद्यात् अन्यानपि ब्राह्मणांश्च भोजयेदिति तद्दिननियमाश्च स्कांदे खंडनं नखकेशानां मैथु-
नाध्वानमेव च आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेदिति जन्मतिथिर्द्वैधे निर्णयोक्तं हेमाद्रौ राजमार्तंडे घस्रद्वये जन्मतिथिर्यदि स्यात्कुर्यां
त्तदा जन्मभसंमितां च असंगता तेन दिनद्वये चेत्पूज्या परा या भवतीह यत्नादिति यत्तु शौनकः अथ स्वजन्मनक्षत्रे स्नातः शुक्लां
बरो नृपः कृतकौतुकबंधश्च सर्वाभरणभूषितः नक्षत्रदेवतापूजां कुर्याद्गुरुसमन्वितः आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः

स्थंडिलाद्याज्यभागांतंकृत्वासर्वंयथाक्रमम् दूर्वांघृताक्ताञ्जुहुयादष्टोत्तरशताहुतीः यद्देवताकंनक्षत्रंमंत्रस्तद्दैवतःस्मृतः ततःस्वि
ष्टकृतासर्वंहोमशेषंसमापयेत् गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान्पूजयेन्नृप ः दुःखार्तान्सर्ववर्णांश्चमोचयेन्नृपतिस्ततः द्विजा
न्स र्वानथाप्यर्च्यपूजितव्यान्सबांधवान् नहिंस्यात्सर्वभूतानि तदहस्तुविशेषतः एवंसमाचरन्राजासुखीभवतिसर्वदेति
द्राजानंप्रत्येवजन्मनक्षत्रमात्रेविहितमितिनब्राह्मणादीन्प्रत्यब्दांततिथिकृत्यांतर्गतत्वेनवक्तुमुचितम् एवमप्यन्यदप्युत्यम् ब्रह्म
पुराणोक्तमृत्युंजयदेवताकदूर्वाहोमस्यापिजन्मर्क्षेविहितस्यकटिसूत्रबंधनांगकस्यउक्ततिथिकृत्यांतर्गतत्वेनगृहस्थब्राह्मणंप्रतिवक्तु
मनुचितत्वात् यत्किंचित्कुरुतेकर्मवैदिकंवाथतांत्रिकम् कटिबंधनसंयुक्तंतत्सर्वंनिष्फलंभवेत् रौप्यंकार्पासकंहैमंपट्टसूत्रकृतंत
था वर्जयेत्कर्मकालेषुकांचींविप्रोविशेषतइतिपारिजातेआश्वलायनोक्तेः इतिवर्द्धापनम् अथचौलम् तत्राश्वलाय
नः तृतीयेपंचमेवाब्देचौलकर्मप्रशस्यते प्राग्वासमेसप्तमेवासहोपनयनेनवेति उपनीतेःप्रागयुग्मेवेत्यर्थः वसिष्ठः तृतीयेब्दे
पंचमेब्देस्वकुलाचारतोपिवा चौलंशिशूनांयत्नेनस्वगृह्योक्तविधानतः आधानतोजन्मतोवासप्तमाब्देपिकारयेत् स्वकुलाचारत-
इतिविहितकल्पानांव्यवस्थार्थंनतुकालांतरम् अतएवयाज्ञवल्क्येनसामान्यतोभ्यधायिचूडाकार्यायथाकुलमिति आधानतःग
र्भाधानात् अवधिद्वयस्यपूर्वत्राप्यन्वयः नारदः जन्मतस्तुतृतीयेच्छ्रेष्ठमिच्छंतिपंडिताः पंचमेसप्तमेवर्षेजन्मतोमध्यमंभवेत्

अथमंगर्भतः स्यात्तु दशमैकादशेपिवेति देवरातः अयनेचोत्तरेसौरव्यंदक्षिणेत्वशुभावहमिति तत्रविशेषोज्योतिरर्णवे मकरे
सर्वसंपत्तिः कुंभः संतानकारकः मीनेतुसर्वदासौरव्यंमेषेसर्वार्थसाधनम् विजयंवृषभेविद्यान्मिथुनेवंशवृद्धिकृदिति सारसंग्रहे
ज्येष्ठेमासितथामार्गेक्षौरंपरिणयंव्रतम् ज्येष्ठपुत्रदुहित्रोश्चयत्नतः परिवर्जयेत्इति कृत्तिकास्थंरविंत्यक्त्वाज्येष्ठेज्येष्ठस्यकारयेत्
अधिमासेतुयत्क्षौरंजन्ममासेतुजन्मभे नभवेत्तत्रकल्याणमितिशंसंतिसूरयइति मुहूर्तसंग्रहे पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्य
त्रिकंविनेति पराशरः पंचमीसप्तमीचैवदशम्येकादशीतथा त्रयोदशीतृतीयाचचौलकर्मशुभावहमिति वसिष्ठोपि द्वित्रिपं
चमसप्तम्यामेकादश्यांतथैवच दशम्यांचत्रयोदश्यांकार्यंक्षौरंविजानतेति पराशरः सितेज्यसौम्यवारेषुचौलंपक्षद्वयेहितम् इं
दुवारः सितेपक्षेवाराः शेषानशोभनाइति नारदः दस्रादितीज्यचंद्रेंद्रपौष्णभानिशुभानिच चौलकर्मणिहस्तर्क्षात्त्रीणित्रीणि
चविष्णुभादिति बृहस्पतिः हस्ताश्विविष्णुपौष्णानिश्रविष्ठादित्यपुष्यभम् सौम्यचित्रेनवक्षौरेउत्तमानवतारकाः त्रीण्युत्तराणि
वायव्यंरोहिणीवारुणंतथा क्षौरेषण्माध्यमाः प्रोक्ताः शेषाद्द्वादशगर्हिताइति लल्लः हित्वैकंजन्मनक्षत्रंद्वेतारेजन्मसंज्ञितेशुभदे
उद्वाहेचोपनयनेयात्रायामन्नभोजनेक्षुरकार्यइति राजमार्तंडः क्षौरंप्रशस्तंमृगचापमीनेकन्यालिकुंभेमिथुनेवृषेचेति अत्रकुं
भविधिर्मत्यंतराभावे कुंभः कुलविनाशाय कथितः क्षुरकर्मणि शुभैर्दृष्टोथवायुक्तोनशुभः कुंभभृत्सदेति भृगुः कृष्टिःप्र

याणां क्षौरं च मध्ये वर्ज्यं यथाष्टम इति कृष्टिः कर्षणम् मध्येद्वितीयादिक्षौरे पारिजाते नर्मदोत्तरदेशे तु सिंहस्थे देवमंत्रिणि शुभं
कर्म न कुर्वीत निषेधो नास्ति दक्षिणे इति मातरि गर्भिण्यां व्यवस्थामाह नारदः सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् पंचाब्दात्
प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यत इति अत एव केश्चिदुदाहृतस्य सूनोर्मातरि गर्भिण्यां मौंजी
चूडं न कारयेदित्यस्य वचसः समूलत्वेपि प्रत्येकमेव निषेधो न सहितयोः पंचाब्दानि पूर्यंते यस्मिन् दिने तत्संचाब्दं प्रकारांतरेण निषेधा
पवादमाह वसिष्ठः गर्भिमातुः कुमारस्य न कुर्याच्चौलकर्म तु पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत् पंचमासा गर्भसंबंधिनः पूर्यं
ते यस्मिन्दिने तत्संचमासं मातरि रजस्वलायां वृद्धगार्ग्यः विवाहव्रतचूडासु माता यदि रजस्वला तस्याः शुद्धेः परं कार्यं मांगल्यं
मनुरब्रवीदिति चौलादिप्रारंभोत्तरं रजःप्रारंभात्प्रागपि रजसि मुहूर्तांतराभावे वा तदा शांतिं कृत्वा तदेव कार्यम् यथोक्तं कारिका
निबंधे सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुद्ध्यति अलाभे सुमुहूर्तस्य रजोदोष उ
पस्थिते श्रियं संपूज्य तत्कुर्याद्ब्रह्महत्याभयंकरीम् हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् प्रत्यृचं पायसं हुत्वाभिषिच्य शुभ
म माचरेदिति श्लोकभेदेन प्राप्तपदोक्तारंभस्य मुहूर्तांतरलाभस्य च श्रवणान्न परस्परसापेक्षत्वम् प्रकारांतरेण चौलनिषेधं
कात्यायनः कुले ऋतुत्रयादर्वाङ्मुंडनान्न तु मुंडनम् प्रवेशान्निर्गमो नेष्टो न कुर्यान्मंगलत्रयमिति ऋतुत्रयं षण्मासाः कुलं त्रिपु

रुषम् पुरुषत्रयपर्यंतंप्रतिकूलंस्वगोत्रिणाम् प्रवेशान्निर्गमस्तद्वत्तथामंडनमुंडनइतिमेधातिथ्युक्तेः तथाचकुलेचतुःपुरुषप-
र्यंतंसपिंडीकरणांतप्रेतकर्मसमाप्तेःप्रागाभ्युदयिकंकर्मनकार्यमित्यपिसः प्रेतकर्माण्यनिर्वर्त्यचरेन्नाभ्युदयक्रियाम् आचतुर्थंत
तःपुंसिपंचमेशुभदंभवेदिति अतएवानिर्वर्त्येत्यत्रसमानकर्तृकत्वमविवक्षितम् यदोर्वंशंनरःश्रुत्वासर्वपापैःप्रमुच्यतइतिव-
चनात् मुंडनादिस्वरूपमपिकात्यायनः पुत्रोद्वाहःप्रवेशाख्यःकन्योद्वाहस्तुनिर्गमः मुंडनंचौलमित्युक्तंव्रतोद्वाहौतुमंगलम् चौ
लंमुंडनमेवोक्तंवर्जयेद्वरणात्परम् वरणात्तदुपक्रमकालाद्वाग्दानादित्यर्थः मौंजीचोपयतःकार्यायतोमौंजीनमुंडनमिति उभयतो
विवाहात्प्रागूर्ध्वंचेत्यर्थः द्वन्द्वमनुः एकमातृजयोरेकवत्सरेपुरुषद्वयोः नसमानक्रियांकुर्यान्मातृभेदेविधीयतइति तथारंभोत्त
रंसूतकेप्राप्तेविशेषःसंग्रहे कूष्मांडीभिर्घृतंहुत्वागांदद्याच्चपयस्विनीम् चूडोपनयनोद्वाहप्रतिष्ठादिकमारभेदिति अथ
प्रयोगः कर्ताकृतमंगलस्नानंबालमलंकृत्यस्वदक्षिणस्थितमात्रंकेतमुपवेश्यदेशकालौसंकीर्त्यास्यकुमारस्यबीजगर्भसमु
द्भवैनोनिबर्हणबलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं चौलकर्मकरिष्ये तृतीयेवर्षेइतिसहोपनीत्येतिवासंकल्प्यगणेश
पूजनादिनांदीश्राद्धांतंकृत्वाअग्निस्थापनतल्यानांतंकृत्वाआघारावाज्येनेत्यंतेत्रिरग्निंपवमानंप्रजापतिंचेतिप्रधानदेवताआज्ये-
नशेषेणस्विष्टकृतमग्निमित्यादिपूर्णपात्रनिधानांतेकृतेप्रणीतानामुत्तरतोदर्भेषुव्रीहियवमाषतिलैःपृथक्पूरितानिनवानिशरा

वाप्येकैकशः प्राक्संस्थानिसादयेत् अथान्यतस्यादथाप रमितिकारिकायामथशब्देनैकैकश आसादनप्रतीतिः मातुः पूर्वभागेऽ
ग्नेः पश्चादानडुहगोमययुतंशरावंशमीपर्णशरावंचनिदध्यात् यवानामसंभवेतत्सदृशैर्व्रीहिभिः पूरयेदिति गोमयसम्भूमिस्पृष्ट-
मितिजयंतः अनड्वान्शकटवहनसमर्थोबलीवर्दः मातुर्दक्षिणातः पिताब्रह्मा वा एकविंशतिकुशपिंजूलानिधारयन्नास्ते अत्रवि-
शेषंजयंतः पितुरसंभवेन्यस्मिन्वाकर्तरिब्रह्मधारणएवाश्रयितव्यइति तदाब्रह्मानित्यइतिप्रतीयते अस्मिन्नेवकालेताम्रमपक्ष-
रग्रहइत्यपिसः अतः प्रक्षालितः प्रागग्नेः समीपेनिधेयः ततः कर्त्ताधारांतंकुमारेणान्वारब्धः कृत्वा अग्नआयूंषीतितिसृणांश-
तंवैखानसाऋषयः अग्निः पवमानोदेवता गायत्रीछंदः चौलप्रधानाज्यहोमेवि० तिसृभिर्जुहोति अग्नयेपवमानायेदं० प्रजा
पतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् चौलप्रधानाज्यहोमे० प्रजापतेइतिजुहुयात् प्रजापतयइदं० अथकर्त्ताशिशोः पश्चिमतः-
स्थित्वाशीतोष्णजलपात्रेदक्षिणपाणिभ्यामादायपात्रांतरेप्राङ्मुखोयुगपन्निनयति ॐ उष्णेनवायउदकेनेहीति महानसादुष्णा
मानीयशरावेकृत्वाशरावांतरेशीतमादायोक्तप्रकारेणशरावांतरेसिंचतीतिजयंतः तासामपामेकदेशंपात्रांतरेगृहीत्वानवनीतेन
तदभावेदधिद्रप्सेनमिश्रयेत् दध्नोरसमुपादत्तेनास्तिचेन्नवनीतकमितिकारिकोक्तेः ताभिरद्भिः कुमारशिरोवामकर्णमारभ्य
प्रदक्षिणंत्रिः क्लेदयति ॐ अदितिः केशान्वपत्वापउंदंतुवर्चसइतिमंत्रंप्रतिक्लेदनमावर्तयेत् ततएकविंशतिकुशपिंजूलमध्येत्री

पयादाय कुमारस्य दक्षिणे केशपक्षे अभ्यात्माग्राणि निदधाति दक्षिणे केशपक्षे अथ बालस्य त्रीन् कुशांकुरान् बालाभिमुखाग्रपर्यंतान् प
ित्वा मंत्रमोषधे त्रायस्वैनमिति न्यसेदिति शौनकः कुमाराभिमुखं पश्चिमाग्रान् कृत्वा मंत्रेण निधानमिति पारिजाते केशपक्षे कुमार
स्य त्वदग्रं तत्कुशत्रयमिति कारिकाकारः अग्रैस्त्वदयमालिखन्निव निदधातीति जयंतः शौनकानुसारिपारिजातमते कुमाराभि
मुखत्वेन पश्चिमाग्रान् कृत्वा निधानम् प्रागग्राणां तस्य नित्याः प्राञ्च इति परिभाषायाः जयंतानुसारिकारिकामते तु त्वदयाभिमुखा
ग्रत्वं युक्तं चैतत् आत्मानं प्रत्यभिमृश्येत्यत्र त्वदयाभिमर्शनस्यैव सर्वयाज्ञिकसंमतत्वात् तेषु पिंजूलेषु स्वधितिं निदधाति स्वधिते
मैनं हिंसीरिति ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन ब्रह्माणो वपतेदमस्यायुष्मान् जरदष्टिर्यथासदिति स
केशानि पिंजूलानि छित्वा प्रागग्राणि कृत्वा सादित शमीपर्णैरेकीकृत्य शिशुमातृहस्ते निदधाति सानडुहे गोमये निदधाति प्रथमनि
धाने प्रागग्रत्वनियमोऽस्ति न द्वितीय इति देवत्रातः ततो मध्ये छिन्नकेशस्पर्शनिमित्ताशुचित्वनिवृत्त्यर्थं जलस्पर्शः कार्यः एवमु
त्तरच्छेदनेषु समंत्रकं पिंजूलनिधानादि येन धातेति द्वितीयच्छेदने मंत्रः ॐ येन भूयश्चरात्र्यामिति तृतीये उक्तत्रिमंत्रैश्चतुर्थे तु
चत्वार्येव दक्षिणतश्छेदनानि एवमुत्तरतः प्रत्येकं मंत्रैः त्रीणि कृत्वा क्षुरधारामग्रतः आरभ्यामूलं मंत्रेण निमृजेत् यत्क्षुरेण
मर्चयता सुपेशसा वप्ता वपसि केशान् शुंधि शिरो मास्यायुः प्रमोषीरिति ॐ शीतोष्णाभिरद्भिरवर्ध्यं कुर्वाणो क्षणवन्नकुशलीकु

र्विति प्रैषेण नापितमनुशास्य प्रैषार्थमवबोधयेत् ततो नवनीताद्यमिश्रितशीतोष्णावशिष्टाद्भिरार्द्रीकृतशिरसः प्राङ्मुखस्य
कुमारस्य दक्षिणकर्णमारभ्य शिखांतं शिखामारभ्य वामकर्णांतं वपनं कुर्वता नापितेन यथाकुलाचारं शिखावपनं कारणीयम् उद
ङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः केशश्मश्रुलोमनखान्युदक्संस्थानिवापयेत् दक्षिणं कर्णमारभ्य धर्मार्थे पापसंचये शि-
खाद्यनवसंस्कारे शिखाद्यंतं शिरो वपेत् इत्यपरार्कोक्तेः नवसंस्कारे प्रथमे चूडाकर्मोपनयनादौ प्रायश्चित्तार्थस्य द्वितीयोपनयना
देः पापसंचय इत्यनेन संग्रहात् पराशरमाधवीये लौगाक्षिः दक्षिणतः कमुजा वसिष्ठानामुभयतोत्रिकश्यपानां मुंडा भृगवः पंच
चूडा अंगिरसो वाजिमेके मंगलार्थं शिखिनोन्ये यथाकुलधर्मं चेति कमुजा शिखा वासिष्ठानामेकप्रवरिणामेकैव दक्षिणतो निय
म्यते त्र्यार्षेयाणां तु तिस्रः अत्रीणां च कश्यपानां द्व्यार्षेयाणां वामदक्षिणे द्वे शिखे त्र्यार्षेयाणां मध्येप्यन्या भृगूणां वंशसमाचारा
विरोधेन मुंडत्वम् तद्विरोधे तु त्र्यार्षेयाणां तिस्रः पंचार्षेयाणां पंच एवमंगिरसां पंचार्षेयाणां पंच त्र्यार्षेयाणां तिस्र एके पुनर्वाजि
ललाटकर्णमूलस्पर्शिनी मालामिव केशपंक्तिं मंगलार्थं कुर्वंति मंगलार्थत्वकीर्तनेन तस्यां सत्यामपि तदन्यशिखाधारणमावश्य
कमिति ध्वन्यते शिखिनोन्य इति कुलधर्मत एव तेषां देशनियमो मान्यः प्रकार इत्यर्थः संख्यानियममाहाश्वलायनकारि-
काकारः शिखा अपि च कर्तव्या कुमारस्यार्षसंख्ययेति एवं चौलकालधृतशिखानां मध्ये मध्यशिखेतरशिखानामुपनयनका

लेवपनंकार्यं मध्येशिरसिचूडास्याद्वसिष्ठानांतुदक्षिणे उभयोःपार्श्वयोरत्रिकश्यपानांशिखामतेति वृन्हौदात्ततवच्चसिमध्यशिखाया
निमित्तविशेषसंयोगंविनाविहितायानित्यत्वेनसदाबन्द्धशिखेनचेतिनित्यविधिविषयत्वोच्चित्यादितरशिखानामुपनीतधार्यत्वेनमाध-
वोक्तेश्चेत्यलम् वपनोत्तरंस्नापितंभूषितंकुमारंदक्षिणतोमातुरुत्संगेस्थापयित्वास्विष्टकृदादिहोमशेषंसमापयेत् व्रीह्यादिपात्रा-
णिनापितायदत्वा दशानांत्रयाणांवाब्राह्मणानामन्नेनतर्पणंसंकल्प्यभूयसींदक्षिणांदत्वेश्वरार्पणंकुर्यात् अत्रत्यब्राह्मणभोजनेषु
क्तवतःप्रायश्चित्तमाहपराशरः निवृत्तेचूडहोमेतुप्राङ्नामकरणात्तथा चरेत्सांतपनंभुक्त्वाजातकर्मणिचैवहि अतोन्येषुतुभुक्त्वाऽ
न्नंसंस्कारेषुद्विजोत्तमः नियोगादुपवासेनशुद्ध्यतेनिंद्यभोजनादिति चौलोत्तरंविशेषःस्मृत्यर्थसारे विवाहमौंजीचौलोर्ध्वंवर्ष
मर्धंतदर्धकम् सपिंडाःपिंडनोदद्युर्गयायांदद्युरेवतइति एवममंत्राचौलक्रियाकुमार्याभवतिहोमस्तुसमंत्रकइतिपारिजाते हो
मोप्यमंत्रःकार्योनवेतिवृत्तिकृद्वेवत्रातश्च जयंतस्त्वाह स्त्रियामप्येवमेवहोमकमग्निस्थापनपूर्णनिधानांतंकृत्वोदकसमानय
नादिक्षुरमार्जनपर्यवसानममंत्रकंभवतीति केचित्कर्मबोधनार्थइतिकृत्वाशीतोष्णाभिरितिप्रैषमिच्छंतीतिच आश्वलायन-
स्मृतौ होमकृत्यंतुपुंवत्स्यात्स्त्रीणांचूडाकृतीवपीति मनुः अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतइति एवंचामंत्रकहोमा
नुष्ठानमुचितमितिप्रतिभातिसूत्रमनुवाक्ययोःसंवादात् मंत्राणामुपगमेपितत्प्रमाणकदेवतानांहोमांगत्वसंभवेनतदुद्देश्यकत्या

गसंभवात् दक्षिणेऽग्नौ प्रतिप्रस्थातृकर्तृके दशान्तिसुक्तिहोमानां बौधायनीयकल्पभाष्ये प्रसिद्धत्वाच्चेत्यलम् शूद्रस्याप्यमंत्रकं चू-
डाकर्माह यमः शूद्रोऽप्येवंविधः कार्यो विनामंत्रेण संस्कृतः नकेनचित्समसृजच्छंदसा तं प्रजापतिरिति अतएव तदीयचूडाकर्मणि लग्न
विशेषमाह गुरुः चंद्रोदयेंगनानां तु प्रशस्तः क्षुरकर्मणि प्रशस्तः कथित स्तद्वद्विट्शूद्राणां यमोदय इति चंद्रोदयश्चंद्रदेवताकं लग्नं
यमोदयः शनिदेवताकं लग्नं नचैवं शूद्रस्य शिखाधारणं स्यात्तत्र च न शिखा नोपवीतं च नोच्चरेत्संस्कृतां गिरमिति प्रभासखंड वचो विरोध इ
ति शंक्यम् पारंपर्येणाशिखाधारणादि सदाचारयुक्तसच्छूद्रविषयत्वाद्विधेः निषेधस्य तदितरविषयत्वात् इति संस्कारकौस्तुभे
चौलम् अथाऽक्षरस्वीकारः नृसिंहः अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पंचमहायने उत्तरायणगे सूर्ये कुंभमासं विवर्जयेदिति
मुहूर्तसंग्रहे उत्तरायणगे सूर्ये कुंभमासं विवर्जयेत् पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विनेति बृहस्पतिः विद्यारंभो व्रतोद्देशः
क्षौरं चैव विशेषतः गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितमिति गलग्रहस्वरूपं राजमार्त्तंडः त्रयोदश्याश्चतुष्कं च सप्तम्यादि दिनत्रय
म् चतुर्थ्येकतः प्रोक्ता अष्टावेते गलग्रहा इति ल्यब्लोपे पंचमी तस्याः प्रतिप्रसवमाह देवरातः त्रयोदश्यक्षरे श्रेष्ठेति मार्कंडेयः
वारे दिनेश भृगुरुज्ञ बृहस्पतीनां विद्यानसौभवतीति वसिष्ठः रविवारे तु पूर्वाण्हे विद्यारंभो विधीयते चंद्रवारे पराण्हे तु विद्या गुर्वी वि
धीयत इति महेश्वरः हस्तादित्रितये तथाभिजिति भे पूर्वोत्य भेष्वश्विभे मित्रर्क्षे च मृगादि पंचकभे शुभः आरंभ आद्यः स्मृतः विद्यानां

हरिभत्रयेन्चदिवसेसूरे भृगोर्वादिनेऽनध्यायारव्यतदाद्यवर्जिततिथौकेंद्रस्थितैः सद्ग्रहैरिति राजमार्तंडः विद्यारंभः प्रशस्तोभवति
मधुरिपौप्राप्तबोधेशशांकेशस्तेतीक्ष्णद्युतौनत्रिदशपतिगुरावुद्गतेचाथशुक्रे स्वाध्यायेसिंहसंस्थखरकिरणयुतंदेवपूज्यंविहायशु-
क्रादित्येज्यवारेत्रिदशपतिगुरौकेंद्रसंस्थेतुपापे पापैर्निषिद्धस्थानस्थिते अक्षरारंभप्रकारस्तुमाधवीयेमार्कंडेयेनोक्तः पूजयित्वाहरिं
लक्ष्मींदेवींचैवसरस्वतीम् स्वविद्यासूत्रकारांश्चस्वविद्यांचविशेषतः एतेषामेवदेवानांनाम्नातुजुहुयाद्घृतम् दक्षिणाभिर्द्विजेंद्राणांक
र्तव्यंचात्रपूजनम् प्राङ्मुखोगुरुरासीतवरुणाभिमुखंशिशुम् अध्यापयेत्तुप्रथमंद्विजातिभिःस्रुपूजितइति अनेनगुरुपूजनमपि
कर्तव्यमितिसूचितम् सरस्वतीपूजनादिप्रकारमाहपारिजातेगर्गः स्नात्वाशुचौसमेदेशेगोचर्ममात्रमुपलिप्यसैकतंस्थलंकृत्वापा
लाशशाखयामृदंखनित्वातस्यांसरस्वतीमावाहयेत् भुवनमातःसर्ववाङ्मयरूपेणागच्छेति ततःप्रणवेणार्घ्यपाद्याचमनीयगंध
पुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनमस्कारान्कृत्वाचार्यैशक्तितोवस्त्रालंकारादिभिःपूजयित्वासरस्वतीविघ्नेशाचार्यौ
स्त्रिःप्रदक्षिणीकृत्यप्रणवपूर्वकमक्षरमारभेत ततआचार्याभिवंदनंकृत्वासरस्वत्यादीनावाहनक्रमेणोद्वासयेद्विद्यावृद्धिर्भवती
ति विष्णुधर्मोत्तरेधात्रीपूजनमंत्राधिकमुक्तम् ब्राह्मणानांगुरूणांचदेवतानामनंतरम् ततःसंपूज्यवित्तेनधात्रींरामगुरुंतथेति
गुरूणांपित्रादीनांगुरुमाचार्यम् इतिसंस्कारकौस्तुभेऽक्षरस्वीकारः अथानुपनीतधर्माः माधवीयेविष्णुपुराणे

भक्ष्याभक्ष्येतथापेयेवाच्यावाच्येतथानृते अस्मिन्कालेनदोषःस्यात्सयावन्नोपनीयतइति एतदपवादस्तत्रैवस्मृत्यंतरे स्यात्कामचा
रभक्ष्योक्तिर्महतःपातकाद्दतेति गौतमः यथोपपादितमूत्रपुरीषोभवतिनतस्याचमनकल्पोविद्यतेनब्रह्माभिव्याहरेदन्यत्रस्वधानिन
यनादि यथोपपादितेत्यनेनदिवासंध्यासूदङ्मुखत्वंरात्रौदक्षिणामुखत्वमित्यादिनियमाभावोज्ञाप्यते कल्पग्रहणाद्विरुन्मृजेत्या दी-
तिकर्त्तव्यतानिषेधोनत्वाचमनस्यैव शुध्येरन्स्त्रीचशूद्रश्चसकृत्स्पृष्टाभिरंततइतियाज्ञवल्क्यवचोव्याख्यावसरेचकारादनुपनीतोऽ
पीतिविज्ञानेश्वरेणानुपनीतस्याचमननिमित्तेस्त्रीशूद्रतुल्याचमनस्वीकाराच्च रजस्वलादिस्पर्शेतुपारिजातेस्मृतिदीपिकायांव्यवस्थो
क्ता शिरोरभ्युक्षणंप्रोक्तंबालस्याचमनंस्मृतम् रजस्वलादिसंस्पर्शेस्नानमेवकुमारके प्राक्चूडाकरणाद्बालःप्रागन्नप्राशनाच्छि-
शुः कुमारकस्तुविज्ञेयोयावन्मौंजीनिबंधनमिति विज्ञानेश्वरोक्तमनुपनीताचमनमपिकुमारावस्थायांबोध्यम् रजस्वलादिस्पर्श
निमित्तस्नानविधेस्तन्निमित्ताचमनविधेश्चसाहचर्यदर्शनात् अन्यत्रेत्यादिनापितृकर्मणिदाहादावनुपनीतस्यापिमंत्रोच्चारणंभवती
तिज्ञाप्यते तदपिकृतचूडस्यत्रिवर्षस्यवाज्ञेयम् अनुपनीतोपिकुर्वीतमंत्रवत्पैतृमेधिकम् यद्यसौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरइ
तिस्मृत्युक्तेः अत्रचूडाप्रथमवर्षातिरिक्तवर्षकृताज्ञेया कृतचूडस्तुकुर्वीतउदकंपिंडमेवच स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेदि-
ति व्याघ्रवचनस्यस्मृत्युवचनाविरोधायप्रथमवर्षकृतचूडविषयत्वात् तथैवमाधवादिभिरुक्तेः यत्तु असंस्कृतेनयत्प्राप्तसमिदानं-

समंत्रकम् कर्तव्यमितरत्सर्वंकारयेदन्यमेवहीनिि तदपि प्रथमवर्षे कृतचूडं प्रत्येवाग्निदानेन मंत्रप्रतिप्रसवार्थंलाघवात् शेषस्याश
क्तिप्राप्तार्थानुवादत्वसंभवात् नकृतचूडविषयं अत्यंताप्राप्तविशिष्टविधेरन्याय्यत्वात् नापिस्कृमंतुवाक्यविषयेप्यशक्तविषयम् अ
ग्निदानेऽश्रुतप्रतिनिधिनिरासपरत्वकल्पनायाअन्याय्यत्वात् एतच्चौरसविषयम् पित्रोरनुपनीतोपिविदध्यादौरसःकृतः औौर्ध्वदे
हिकमन्येतुसंस्कृताःश्राद्धकारकाइतिस्कांदात् नाभिव्याहारयेद्ब्रह्म यावन्मौंजीनिबध्यते मंत्राननुपनीतोपिपठेदेवैकऔरसइति
स्कृमंतूक्तेश्च इतिसंस्कारकौस्तुभेऽनुपनीतधर्माः अथबालपितृधर्माः विष्णुधर्मोत्तरे अपथ्यंनचबालानांतथाप्रा
गवपश्यताम् पश्यद्भिःपित्रादिभिरपथ्यंनिवारणीयमित्यर्थः बालकाश्चाप्यनुनेयाःस्युर्धर्मकामैःसदानरैः तेषांभोज्यप्रदानेनगो-
दानफलमाप्नुयात् तेषांक्रीडनकंदत्वामोदतेनंदतेदिवि तस्मात्सर्वप्रयत्नेनबालानग्रेतुभोजयेत् अभुक्तवत्सुबालेषुनचाश्नीयात्कदा
चनेति इतिसंस्कारकौस्तुभेबालपितृधर्माः अथोपनयनम् योगरूढमेतत्पदम् आचार्यसमीपनयनांगकोगायत्र्युप
देशोहिप्रधानम् गायत्र्याब्राह्मणमसृजदितिश्रुतौ गायत्र्याब्राह्मणमुपनयीतेतिकातीयवाक्ये तत्रयद्ब्रह्मास्यमौंजीबंधेननिन्हि
तम् सातस्यमातासावित्रीतिमनुवाक्येऽत्रास्यमातासावित्रीतिगौतमवाक्येच द्विजत्वसंस्कारेगायत्रीहेतुत्वसंकीर्तनस्य गायत्र्युप
देशहेतुकत्वाशयेनैववर्णनीयत्वात् समिद्दर्शनादिपदस्यैवांऽगवाचिनोप्युपनयनपदस्य तत्संबंधेनप्रधानसंज्ञात्वोपपत्तेः अ

तएवापरार्केणोक्तम् उपनयनंनाम बटोर्गायत्रीसंबंधकरणं तच्चाचार्यकर्तृकम् अधीहिभोरितिराचार्य प्रयोजकव्यापारउपनयनम्
अष्टवर्षंब्राह्मणआत्मानमुपनाययेदितिबुधस्मृतौस्पष्टाभिधानादिति यद्यपिकल्पतरुणाबुधवचनंपित्राद्युपनेतृभावविषयमितिव्या
ख्यातम् यद्यपिचमेधातिथिनापितुरभावेव्युत्पन्नमतिनामाणवकेनात्मोपनाययितव्यः गौतमंप्रतिजाबालस्यब्रह्मचर्यंभगवतिव
त्स्यामीतिप्रार्थलिंगादित्युक्तम् तथापिबहिःप्रयोगंप्रार्थनादिव्यापारांतस्यणिजर्थत्वांगीकारेणोपनयनपदएवापरार्कोक्तार्थादतिरिक्ता
र्थांगीकारस्तयोर्नतूपनयनशब्देतदुक्तार्थत्यागइतिमंतव्यम् अथोपनयनाधिकारिणः तत्रवृद्धगार्ग्यः पितापितामहोभ्रा
ताज्ञातयोगोत्रजाग्रजाः उपानयेऽधिकारीस्यात्पूर्वाभावेपरस्परइति भ्रातापितुर्भ्राता पितैवोपनयेत्पुत्रंतदभावेपितुःपिता तद-
भावेपितुर्भ्रातातदभावेतुसोदरइतिपितामहस्मरणात् अग्रजाइत्यत्राकारलोपश्छांदसः तथाचज्ञातिपदोक्तेषुसपिंडेषुतदतिरिक्ते
षुचगोत्रजेषुयेऽग्रजावृद्धाःबटोरपेक्षयेत्यर्थः उपनेयकनिष्ठाचार्यत्वस्यनिषिद्धत्वात् यत्तु असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृ
तैरितियोगीश्वरवचःतत्पितामहवचोनुरोधेनपितृव्यभावविषयम् पित्राद्युक्ताधिकार्यभावेकर्तारमाहशौनकः कुमारस्योपनयनंश्रुता
भिजनवृत्तवान् तपसाधूतनिःशेषपाप्माकुर्याद्द्विजोत्तमइति आचार्यंकुर्यादित्यधिकृत्यव्यासोपि वेदैकनिष्ठंधर्मज्ञंकुलीनंश्रोत्रियं
शुचिम् स्वशाखाध्यमनालस्यंविप्रंकर्त्तारमीप्सितमिति श्रोत्रियलक्षणंब्राह्मे जन्मनाब्राह्मणोज्ञेयःसंस्कारैर्द्विजउच्यते विद्यत्वात्

चापिविप्रत्वं त्रिभिः श्रोत्रिय उच्यते इति अविद्वत्कर्तृकोपनयने दोषमाह श्रुतिः उभयोस्तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वा
हानिति नचैतद्वचनेभ्यः कृत्स्नशाखाध्यायिन एवाचार्यत्वं नैकदेशाध्यायिन इति शंक्यं गोमधुपर्कार्हो वेदाध्याय आचार्य ऋत्विक्स्नातको
राजा धर्मयुक्तश्चेति धर्मप्रश्नव्याख्यावसरे उज्ज्वलाकृता अत एव वेदैकदेशाध्यायिनावप्यृत्विगाचार्यौ संभवत इत्यभिधानात् बटूपनेतु
रधिकारसिद्ध्यै प्रायश्चित्तमाह पारिजाते वृद्धविष्णुः कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेदिति आचार्यस्य गायत्र्युपदेशे योग्यतासि
द्ध्यै जपमप्याह स एव सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरन् सहस्रं द्वादशावृत्तं सावित्रीं प्रजपेद्बुधः स्वाधिकारार्थमेवास्याः प्रदानार्थं
हितत्स्मृतमिति अग्निपवित्राणि अग्निः शुचिव्रततम इत्यादीनि संस्मरन्निति लडादेशेन गायत्रीजपसंकल्प्यः तस्मात्पूर्वं मानसजप एते षांगा
यत्रीजपाधिकारसिद्ध्यर्थं कार्य इति ज्ञाप्यते इत्थं हि संस्मरणस्याभ्यसेदित्युक्तभावनासमकालत्वं लभ्यते सावित्रीपदसमानाधिकरण-
सहस्रपदस्य संख्यया विशिष्टसंख्येयपरत्वाच्च द्वादशावृत्तमित्यस्य न संख्यायामन्वयः पंचपंचाशतस्त्रिवृत्त इत्यत्र निवृत्तामिति विप-
रिणामाभावे पंचसंख्याया इव पंचाशत्संख्यायां संभवति तु विशेष्ये एकसंख्या परिच्छिन्नेपि संख्यांतरपरिच्छिन्नावृत्तिवैशिष्ट्यस्य वक्तुं
शक्यत्वात् ततश्च द्वादशाधिकसहस्रसंख्यो जपः कार्य इति तात्पर्यार्थः गायत्र्याः प्रदानार्थे योधिकारस्तदर्थमित्यंत्यार्धे योजना इ
त्युपनयनाधिकारिनिर्णयः अथोपनयनकालः याज्ञवल्क्यः गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् राज्ञामेकादशे सैके

विशामेकेयथाकुलमिति गर्भाधानमवधिंकृत्वाजन्मतोवाष्टमइतिव्याख्यामाहविज्ञानेश्वरः गर्भग्रहणंसर्वत्रानुवर्तते गर्भादेकादशे
राज्ञोगर्भात्तुद्वादशेविशइतिस्मृत्यंतरादप्याह हेमाद्रौपैठीनसिः गर्भपंचमेब्राह्मणमुपनयेद्गर्भाष्टमेवागर्भैकादशेराजन्यंगर्भद्वादशेवाग
र्भद्वादशेवैश्यंगर्भषोडशेवेति अत्रकामसंयोगंविनागर्भाष्टमात्पूर्वंपाठेनगर्भपंचमस्यापिनित्यत्वंज्ञाप्यते बौधायनः गर्भादिसंख्याव
र्षाणांतदष्टमेषुब्राह्मणमुपनयेद्राजन्यमेकादशेवैश्यंद्वादशइति तदष्टमेषुगर्भाष्टमेषुबहुवचनंषष्ठसप्तमयोःसंग्रहार्थं यस्मिन्वर्षेगर्भोभू
त्वाशेतेसगर्भइतिहरदत्तः गर्भसहचरितोब्दोगर्भशब्दे नोच्यतइतिभारुचिःकर्कश्च अब्दश्चात्रचांद्रश्चैत्रशुक्लप्रतिपदादिरितिकेचित् अ
न्येत्वष्टममासारंभंगर्भाधानमारभ्यवर्षप्रवृत्तिरित्याहुः तस्मात्पंचममितिपंचमीसमासः एवंगर्भाष्टमादिशब्देषुद्रष्टव्यम् उक्तवचनेषु-
अष्टमवर्षसंबंधेनैवाष्टवर्षत्वम् नत्वतीताष्टवर्षत्वेन इतिनित्यःकालः अथकाम्यः उशनाः जन्मतःपंचमेवर्षेब्राह्मणस्योपनायनं
राज्ञस्तुषष्ठेवैश्यस्यसप्तमेतुबलार्थिनइति बौधायनः अथकाम्यानिभवंतिसप्तमेब्रह्मवर्चसकाममष्टमेआयुःकामंनवमेतेजस्कामंदश
मेऽन्नाद्यकाममेकादशइंद्रियकामंद्वादशेपशुकामंत्रयोदशेमेधाकामंचतुर्दशेपुष्टिकामंपंचदशेभ्रातृव्यवंतंषोडशेसर्वकाममिति भ्रातृ-
व्यवंतमित्यनेनाभिचारकाममितिध्वन्यते हेमाद्रौसप्तमइत्यारभ्य पशुकाममित्यंतंबौधायनीयसद्दशमापस्तंबवचउदाहृत्याद्यवाक्यद्वय
मब्राह्मणविषयम् शेषंवर्णत्रयसाधारणमित्युक्तम् इतिकाम्यःकालः गौणकालावधीनाहवर्णभेदेनयाज्ञवल्क्यः आषोडशा

द्वाविंशाच्चचतुर्विंशाच्चवत्सरात् ब्रह्मक्षत्रविशांकालऔपनायनिकः परइति यद्यप्ययमाङ् अभिविधौषोडशाब्दानिविप्रस्येतिशंखस्मृते-
स्तथापिगर्भादि संख्यावर्षाणामित्युपक्रम्याषोडशाद्ब्राह्मणस्यापतितासावित्रीतिगौतमेनाभिधानात् पंचदशवर्षाण्येवगौणःकालइति
मंतव्यम् अतएवयमः सावित्रीपतितायस्यदशवर्षाणिपंचच सशिखंवपनंकृत्वाव्रतंकुर्यात्समाहितः एकविंशतिरात्रंचपिबेत्प्रसृति
यावकम् हविषाभोजयेच्चैव ब्राह्मणान्सप्तपंचवा ततोयावकशुद्धस्यतस्योपनयनंस्मृतमिति इदंचोक्तावधिगौणकालानंतरंवत्सरेसंभव
दुपनयनस्यज्ञेयम् तदुत्तरोत्तरसंवत्सरेषुतुक्रमेणामनूक्तंकृच्छ्रत्रयमापस्तंबोक्तंद्वैमासिकंत्रैमासिकंब्रह्मचर्यंवसिष्ठोक्तंत्रिरात्राधिकमासचतु
ष्टयसाध्यमुद्दालकव्रतम् सूक्तमेवाश्वयुधावभृथस्नानम् तदुक्तमेवव्रात्यस्तोमानुष्ठानमितिव्यवस्थयाकृतप्रायश्चित्तानामुपनयनंबो
ध्यम् अथोपनयनेऽयनादिनिर्णयः तत्राश्वलायनः उदगयनआपूर्यमाणपक्षेकल्याणेनक्षत्रेचौलकर्मोपनयनगोदानविवाहाइ-
ति कल्याणंज्योतिःशास्त्राविरोधीतिवृत्तिकृत् उदगयननियमापवादमाह वृद्धवसिष्ठः विप्रस्यक्षत्रियस्यापिमौंजीस्यादुत्तरायणे
दक्षिणेतुविशांकुर्यान्नानध्यायेनसंक्रमइति वर्णविशेषंप्रतिऋतुविशेषप्राशस्त्यमुक्तंश्रुतौ वसंतेब्राह्मणमुपनयीतग्रीष्मेराजन्यंश
रदिवैश्यंवर्षासुरथकारमिति अत्रमाहिष्येणकरण्यांतुरथकारःप्रजायतइत्युक्तरथकारस्यवर्षावधिः तदीयोपनयनेसप्रमाणत्व
स्यविज्ञानेश्वरेणोपन्यासात् नतुसौधन्वनस्य तस्योपनयनेप्रमाणाभावात् नचैवंविप्रंप्रतिवसंतनियमात् विनर्तुनावसंतेनकृष्णाप-

क्षेगलग्रहे अनध्यायेचोपनीतः पुनः संस्कारमर्हतीतिबृहस्पतिनावसंताभावे दोषकथनाच्चोत्तरायणस्यतंप्रतिनित्यप्राप्ततयाविधिवैय्य
र्थ्यमितिवाच्यम् केनापिनिमित्तेनवसंतालाभेतदन्योत्तरायणप्रापणार्थत्वात् तथाचगर्गः माघादिशुक्रांतकपंचमासाः साधारणावासं
कलद्विजानामिति वृद्धगार्ग्यः माघादिमासषट्केतुमेखलाबंधनंमतमिति नचैवमेताभ्यामेवशास्त्राभ्यांपौनरुक्त्यम् उत्तरायणश्रून्य
माघादिभागाषाढांत्यभागयोर्निवृत्त्यैउत्तरायणविधेरावश्यकत्वात् नचोत्तरायणविधिनैवमाघादिमासप्राप्तेस्तच्छास्त्रंव्यर्थमितिवाच्य
म् मकरार्कविशिष्टपौषनिषेधार्थत्वात् पंचसंख्याविधेर्मिथुनार्कविशिष्टपाठनिवृत्त्यर्थत्वाच्च षट्संख्याविधिस्तुवैश्यंप्रतिश्रावणा
दिनिषेधार्थत्वात् अनिहितंप्रतिदक्षिणायनविधिर्बृहस्पतिवृद्धवसिष्ठोक्तः विप्रस्यक्षत्रियस्यापिमौंजीस्यादुत्तरायणे दक्षिणेतुविशां
कुर्यान्नानध्यायेनसंक्रमइति शरदलाभेश्रावणाद्यन्यदक्षिणायनप्रापकस्यवक्तुंशक्यत्वाच्च एवंचब्राह्मणेनदक्षिणायनेउपनयनंन
कार्यंनापिपौषाषाढयोः सत्यप्युत्तरायणे उत्तरायणविशिष्टमाघादिपंचमासेषुकार्यंतत्रापिमीनार्कप्रभृतियावन्मिथुनप्रवेशंप्रशस्तःका
लः चांद्रसौरान्यतरवसंतलाभात् मीनमेषयोर्वावसंतइतिबौधायनोक्तेः मीनमेषयोस्तुप्रशस्ततरः मृगकुंभगतेभानौमध्यमंमीनमे
षयोः उत्तमंगोयुगस्थेऽर्केऽधमंचोपनायनमितिबृहस्पतिवचनात् मृगोमकरः गौर्वृषः युग्मंमिथुनम् मीनार्कविशिष्टश्चैत्रोनेकनि
षेधापवादकतयाप्रशस्ततमः मीनस्थितेऽर्केखलुचैत्रमासेशुभप्रदोब्राह्मणमौंजिबंधइतिबृहस्पतिवाक्यस्यतदर्थत्वात् अतएवोक्तं

तेनैव गोचराष्टकवर्षाभ्यां गुरुशुद्धिर्न लभ्यते तदोपनयनं कार्यं चैत्रे मीनगते रवौ शुक्रे नष्टे तथा जीवे दुर्बले चंद्रभास्करे व्रतोपनयनं कार्यं चैत्रे
मीनगते रवौ जीवभार्गवयोरस्ते सिंहस्थे देवताऽगुरौ मेखलाबंधनं शस्तं चैत्रे मीनगते रवौ अमुनैवाशयेनाह राजमार्त्तंडः वसंतसमये कु
र्यादब्दे गर्भाष्टमेऽपि वा मेधावी मेखलाबंधं जन्ममासेऽथ जन्मभे इति अत्र वसंतपदं मीनार्कविशिष्टचैत्रपदं निषेधसामान्यापवादकत्वेनक्क
प्तकालस्यैव निषेधविशेषापवादकत्वबोधने लाघवात् विप्रभस्यैव तद्विशेषप्रशस्ततमत्वज्ञापने लाघवात् गर्भाष्टमेऽपि वेत्यव्ययाभ्यां तद-
नादरो ध्वन्यते अत एव शौनकः गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबंधने तु ततोऽधिकं जन्मऋतारकाऋमासेऽथवा जन्मनि बाडवाना
मिति वाडवानां ब्राह्मणानां यन्मीनार्कैर्जन्ममासे जन्मनक्षत्रे चोपनयनं कर्त्तव्यमिति अनूद्यतद्गर्भाष्टकफलाधिकमिति तात्पर्यार्थः य
त्तु राजमार्त्तंडः जातं दिनं दूषयते वसिष्ठोऽत्यष्टौ च गर्गो नियतं दशात्रिः जातस्य पक्षं किल भागुरिश्च विशेषाः प्रशस्ताः खलु जन्ममासि
जन्ममासे तिथौ भे च विपरीतदले सति कार्यं मंगलमित्याहुर्गर्गभार्गवशौनका इति तन्मीनार्कचैत्रान्यकालविषयम् त्रिविधेष्वुक्त
समयेषु शुक्लपक्षः प्रशस्ततमः आपूर्यमाणपक्ष इत्याश्वलायनोक्तेः कृष्णपक्षे त्रेधा विभक्ते त्यक्तृतीयांशो निषिद्धः मध्यमप्रथमांशौ प्र
शस्ततरौ शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विनेति बृहस्पत्युक्तेः शुक्लपक्षः शुभः प्रोक्तः कृष्णपक्षे त्रिधा कृते अंत्यभागं
विना द्वौ द्वौ गणितौ मध्यमाधमाविति स्मृत्यंतराच्च अथ तिथयो नृसिंहः तृतीया पंचमी षष्ठी द्वितीया चापि सप्तमी उभयोः पक्ष

योऽप्येवविशेषेणसंपूजिताः धर्मकामौसितेपक्षेकृष्णेनप्रथमातथा कृष्णेत्रयोदशींकेचिदिच्छंतिमुनयस्तथा द्वादश्येकादशीनैवम
ध्यमेचप्रचक्षतइति धर्मोदशमी कामस्त्रयोदशी तेअपिसितेकृष्णेनेत्यन्वयः प्रथमातथाकृष्णे कृष्णेत्रयोदशीमितिमध्यममणिन्या
येनान्वयः मध्यमेचैवपक्षद्वयइतिबोध्यम् नारदः एकांचतुर्थीसंत्यज्यकृष्णापक्षेतुमध्यमाः आपंचम्यास्तुतिथयःपराःस्युरति
निंदिताइति परास्तृतीयांशगताः यस्तुप्रथमातथेतिप्रतिपद्विधिःसकृतप्रायश्चित्तव्रात्योपनयनविषयः प्रशस्ताप्रतिपत्कृष्णे
कदाचिच्छुभगेविधौ चंद्रेबलयुतेलग्नेवर्षाणामतिलंघनइतिव्यासोक्तेः एवं चंद्रेबलयुतेलग्नाच्छुभभावेशुभेक्षिते चतुर्दशींप्रशं
संतिकुमारेवयसाधिकेइति चतुर्दशीविधिरपि अतिलंघनाधिकशब्दाभ्यांगौणकालातिक्रमस्यविवक्षितत्वात् अपरार्के नष्टेचंद्रेष्ट
मेशुक्रेनिरंशेभास्करेतथा कर्तव्यंनोपनयनंनानध्यायेगलग्रहेइति निरंशस्वरूपमन्यत्रोक्तम् राशेःप्रथमभागस्थोनिरंशःसूर्यउ
च्यते युगादित्वादिनानध्यायानामपिप्रतिप्रसवमाहभारद्वाजः याचैत्रवैशाखसितातृतीयामाघस्यसप्तम्यथफाल्गुनस्य कृष्णेद्वि
तीयोपनयेप्रशस्ताप्रोक्ताभरद्वाजमुनींद्रमुख्यैरितिअत्रचैत्रसिततृतीयामाघशुक्लसप्तम्योर्मन्वादित्वोऽप्रतिप्रसवः मन्वादिषुतयोःस्मृ
त्यर्थसारेपाठात् वैशाखतृतीयायायुगादेरपि ज्येष्ठशुक्लद्वितीयातुआश्विनेदशमीसिता चतुर्थीद्वादशीमाघेएताःसोपपदाःस्मृ
ताइत्येतासामपितत्रैवानध्यायत्वमुक्तमितिताअपिवर्ज्याः गलग्रहाउक्तामुहूर्ततत्त्वे प्रतिपत्पूर्वंचतुष्कंनवमीपूर्वंत्रयंचतुर्थीच अ

ष्टेगलग्नहास्त्याज्यागर्गस्यमतेतथाषष्ठी. अत्राप्यपवादः षष्ठीसप्तमीत्रयोदशीनांविनायोगोपन्यासेनदर्शितःस्मृत्यंतरे अनध्याय
स्यपूर्वेद्युरनध्यायासरेहनि व्रतारंभंविसर्गंचविद्यारंभंविवर्जयेदिति एतदपवादोपिद्वितीयासप्तमीत्रयोदशीर्विनियोगेनदर्शितःअ
यंगलग्नहापवादश्चभूपाद्युपनयनविषयइतिकेचित् वासरनियममाहनारदः गुरुशुक्रबुधानांतुवाराःश्रेष्ठतमाःस्मृताः अधमःसो
मवाररक्तःसूर्यवार रक्तमध्यमः वारौमंदारयोर्वर्ज्यौकृष्णोवर्ज्योनिशापतेः अस्तंगतस्यसौम्यस्यवारोवर्ज्योद्विजन्मनीति तथा
शाखाधिपतिवारश्चशाखाधिपबलंतथा शाखाधिपतिलग्नंचदुर्लभंत्रितयंव्रतइति शाखाधिपवारानाहबृहस्पतिः बह्वृचानां
गुरोर्वारोयजुर्वेदजुषांकवेः सामगानांधरासूनोरथर्वविदुषांरवेरिति अमुनैववाक्येनबह्वृचशाखाधिपोगुरुरित्यादिध्वन्यते बलं
गोचराष्टवर्गादि शाखाधिपबलासंभवेदोषमप्याहमदनरत्नेवृद्धगार्ग्यः शाखाधिपेबलिनिकेंद्रगतेचमौंजीबंधस्तदीयदिवसेषुसु
भायकृत्स्यः अस्मिन्बलेरहितेतुपुनर्द्विजानांस्याद्वर्णसंकरइतिप्रवदंतितज्ज्ञाइति तथावर्णाधिपबलमप्यपेक्ष्यते मदानुकूलेचै-
कस्मिन्वर्णेशबलशालिनि ब्राह्मणादेःप्रकुर्वीतकुमारंव्रतचारिणामितिपराशरोक्तेः पतीसितेज्यौविप्राणांनृपाणांकुजभास्करौ
वैश्यानांशशभृत्सौम्याविति वर्णाधिपाःस्मृताइतित्तेनैवव्यवस्थाप्रदर्शनाच्च मदनरत्नेराजमार्तंडः पितुःसूर्यबलंश्रेष्ठंशाखावर्णेशयो
र्बटोः सर्वेषांगुरुचंद्रर्क्षबलंश्रेष्ठंव्रतादिषु मौंजीबंधेविवाहेचप्रतिष्ठायांविशेषतः गोचरेणैवकर्त्तव्यंवैधंबलमकारणमिति सर्वेषा

मित्यनेनन्येषांनशाखाधिपोगुरुस्तेषामपिबहूनांतस्मिंत्तृणांचगुरुबलमावश्यकम् उभयोरलाभेबटोरावश्यकमितिध्वन्यते वेधंवामवेधप्रसु
क्तं गर्भाष्टमादिनित्यकालेबटोर्गुरुबलालाभेशांत्यातल्लाभः अनित्यकालेनैवमित्याहनारदः बालस्यबलहीनोपिशांत्याजीवोबलप्र-
दः यथोक्तवत्सरेकार्यमनुक्तेनोपनायनमिति अनुक्ते नित्यत्वेनेतिशेषः केचिद्दुष्टस्थानेषुस्थितेबृहस्पतौशांत्यापिनोपनयनाधिकार
इत्याहवसिष्ठः बंधौतृतीयेरिपुराशिसंस्थे इच्छंतिपूजांदशमेरफरेज्ये नेच्छंतिपूजाजनिगेव्ययस्थेपुरातनाअष्टमगेपिसूराविति बंधुश्च
तुर्थः रिपुराशिःषष्ठः जनिर्जन्मराशिः अतिसंकटे एतेष्वपिराशिषु पूजाहोमादेर्द्विगुणत्वादिवृत्तिकल्पनयोपनयनंकार्यं नतूक्तसंव-
त्सरातिक्रमः कार्यः तथाचगुरुः तस्माद्गृहेभ्यःकालत्वाद्बलीसंवत्सरोमतइति राशिविशेषस्थस्यगुरोरष्टमादिस्थानस्थितस्यापिना
धिकारप्रतिबंधत्वमित्याहभरद्वाजः धनुर्मीनकुलीरस्थोजीवोजन्मांत्यमृत्युगः आतिसौख्यंबटोःकुर्याद्वसिष्ठवचनंयथेति धनुर्मी
नौहिगुरुस्वामिकौयथाहुर्दैवज्ञाः पंचाननेरविर्विद्यात्सोमंकर्कटकेतथा मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः गुरुर्धनुषिमीने
चतुलायांवृषभेगुरुः शनिस्तुमकरेकुंभेराशीनामधिपाःस्मृताइति कुलीरःकर्कः सचगुरोरुच्चस्थानं यथाहुः अजवृषभमृगांगना
कुलीराझषवणिजौचदिवाकरादितुंगाइति मृगोमकरः कुलीरःकर्क झषोमीनः वणिक्तुला वेदविशेषेणनक्षत्रविशेषविधि-
र्ज्योतिर्निबंधे मूलेहस्तत्रयेसार्पेशैवेपूर्वात्रयेतथा ऋग्वेदाध्यायिनांकार्यंमेखलाबंधनंबुधैः पुष्येपुनर्वसौपौष्णेहस्तेमैत्रेशशांक

भे ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौंजिबंधनम् पुष्यवासवहस्ताश्विशिववैष्णवोत्तरात्रयम् प्रशस्तं मेखलाबंधे बह्वृनां सामगायिनाम् मृगमैत्राश्विनीहस्तरेवत्यादित्यवासवम् अथर्वशाखिनां शस्तो भगणोयं व्रतार्पणइति हस्तत्रयं हस्तचित्रास्वातीति पूर्वात्रयं पूर्वाषाढापूर्वाभाद्रपदेति शैवमार्द्रा एषामसंभवेसारसमुच्चये मघाग्नेयविशाखैंद्रयाम्यं हित्वाचवारुणम् व्रतेशस्तानि सर्वेषां चेच्छाखोक्तं नलभ्यते आग्नेयं कृत्तिका इंद्रो ज्येष्ठा याम्यं भरणी वारुणं शततारका शार्ङ्गधरीये श्रवणादित्यपौष्णादिद्वये हस्तत्रये मृगे सर्वेषां मेखलाबंधः शुभः प्रोक्तो द्विजन्मनामिति आदित्यं पुनर्वसुः सच ऋक्सामशाखिव्यतिरिक्तविषयः व्यवस्थावाक्यानुसारेण ऋक्सामशाखवीतरान् प्रत्यप्रवृत्तेन चंद्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हतीति राजमार्त्तंडवाक्येनोक्तशाखिनः प्रत्येव व्यवस्थावाक्यप्राप्तायाः पुनर्वसुनिवृत्तेः सर्वसाधारणविनियोगविधिनाऽपवादप्रसक्तौ प्रतिप्रसवेलाघवात् वस्तुतस्तु ज्योतिर्वित्प्रसिद्धवसिष्ठादिसंहितासु क्वचिदपि पुनर्वसुनिषेधादर्शनात्तासु हेमाद्र्यादिमहानिबंधेषु च पुनर्वसुविधेरेवप्रतीतेर्दाक्षिणात्यसकलशिष्टानां पुनर्वसावुपनयनाचारस्योपलंभाच्च राजमार्त्तंडवाक्यं निर्मूलं समूलत्वेपि नयजुर्वेदिप्रभृतिविषयं उक्तव्यवस्थौचित्यात् यत्तु विप्रपदोपेतेतद्वाक्यबलेन यजुर्वेद्यादीन् प्रति पुनर्वसुविधिरेव क्षत्रियवैश्यविषयइति तन्न नक्षत्रांतरे वर्णत्रयसाधारणस्य तस्य तथात्वे वैरूप्यापत्तेः जातिवाचकविप्रपदोपेतत्वेन सामान्यशास्त्राद्व्यक्तिवाचिपदोपेतत्वेन विशेषशास्त्रस्योक्तविधेर्बलवत्त्वा

त्व सावकाशतायाउभयत्रतुल्यत्वेनाविनिर्गमकत्वात् आदित्यवारनिषेधात् नक्तविधेर्बलवत्वेमहानिबंधोक्तन्याये नकल्पनिषे-
धात् क्लृप्तविधेः स्वतरांबलवत्त्वाच्च प्रतिप्रसवत्वप्रयुक्तलाघवस्यसामान्यप्रवृत्तशास्त्रसंकोचतायाः पौष्णपेषणादौक्लृप्तत्वेनत
द्विरुद्धकल्पनायाअन्याय्यत्वाच्च विप्रान्प्रतिसर्वथैवपुनर्वसुनिषेधेसर्वेषांद्विजन्मनामितिबहुत्वोक्तेर्द्विजन्मद्वयेनुपपत्तेश्च अस्म
न्मतेतुउक्तनिषेधस्यनिर्मूलत्वेऽन्यशाखिनोपिप्रतिअनुकल्पत्वेनपुनर्वसुविध्यंगीकारेणतदुपपत्तेः समूलत्वेपियजुर्वेद्यात्मकत्रि
वर्णविषयत्वात् योगेषुव्यवस्थामाहश्रीपतिः सर्वेधृतिरस्तुव्यतिपातनामासर्वोप्यनिष्टः परिघस्यचार्धम् तिस्रस्तुयोगेप्रथ
मेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडेचषडेवनाड्यः शुभेषुकार्येषुविवर्जनीयाइति उक्तान्यविषयेत्वाहबृहस्पतिः
शिष्टाष्टादशयोगेषुप्रशस्तंत्वोपनायनमिति करणेव्यवस्थामाहसएव बवादीनांतुषट्कंस्यादुपनयनेसुपूजितम् शकुन्या-
दीनिविष्टिंचवर्जयेच्चविशेषतइति दिनभागव्यवस्थामाहमनुः सर्वदेशेषुपूर्वाण्हंमुख्यंस्यादुपनायनम् मध्यान्हेमध्यमंप्रो
क्तमपराण्हेचगर्हितमिति एवंव्यवस्थितेपिशुभकालेनिमित्तविशेषेणनिषेधमाहगर्गः ग्रहेरवींद्वोरवनिप्रकंपेकेतूद्गमो
ल्कापतनादिदोषे व्रतंदशाहानिवदंतितज्ज्ञास्त्रयोदशाहानिवदंतिकेचिदिति वर्ज्यानीतिशेषः अत्रतु दाहेदिशांचैवधराप्र
कंपेवज्रप्रपातेचविदारणेच केतौतथोल्कांसुकणप्रपातेत्र्यहंनकुर्याद्धृतमंगलानीति अत्रांशुकणेतिपदेननिमित्तलाघवएत

दितिसूच्यते तथालघुः व्रतेऽग्निपूर्वसंध्यायांवारिदोयदिगर्जति तद्दिनेस्यादनध्यायोव्रतंतत्रविवर्जयेदिति यत्तुज्योतिर्निबं
धे नांदीश्राद्धंकृतंचेत्स्यादनध्यायस्त्वकालिकः तदोपनयनंकार्यंवेदारंभंनकारयेदिति एतन्नबह्वृचविषयम् तेषामुपनयनेवे
दारंभाभावेननिषेधासंभवादितिबहवः केचित्तु कार्यमित्यंतंसर्वसाधारणंनिषेधस्तुसंभवत्याश्रमिकविशेषविषयोस्तु आर्षे
यंवृणीतेत्यादेःसाधारणत्वेपियाज्ञिकमतेनचतुरोवृणीतइत्यादिनिषेधयोर्द्याम्नुष्यायणविषयत्ववदित्याहुः उपनयनोत्तरंग र्जि
तसंभावनायांसतिगर्जितेचानुप्रवचनीयात्पूर्वंयत्कार्यंतदवसरेवक्ष्यामः अथोपकल्पनम् स्मृत्यर्थसारेनिरीक्षणकालेएकम
हतंकौपीनधारणोत्तरमपरम् अहतस्वरूपमाहप्रचेताः ईषद्धौतंनवंश्वेतंसदशंयन्नधारितम् अहतंतद्विजानीयात्सर्वकर्म
स्रुपावनमिति तच्चकार्पासम् शुक्लमहतंवासोब्राह्मणस्यकार्पासमितिवसिष्ठोक्तेः शाणंवा वासीरन्नानुपूर्व्येणशाणक्षौ-
मादिकानिचेतिमनूक्तेः प्रावरणार्थमैणेयमजिनंवासोवा ऐणेयेनवाजिनेनब्राह्मणमित्याश्वलायनोक्तेः एणीबिंदुरहितामृगी
तत्संबंध्यैणेयंतदभावेकृष्णहारिणंवा हारिणमैणेयंवाकृष्णंब्राह्मणस्येत्यापस्तंबोक्तेः तच्चनोपस्तीर्यासीतशयीतवातथैवत
दुक्तेः तत्परिणाममाहशाकलः अखंडंवात्रिखंडंवाष्टचत्वारिंशदंगुलम् चतुरंगुलविस्तीर्णंधारयेदजिनंसदेति खंडत्रयमानव्य
वस्थापिस्मृत्यंतरे त्र्यंगुलंतुबहिर्लोमयद्वास्याच्चतुरंगुलम् अजिनंधारयेद्विप्रश्चतुर्विंशाष्टषोडशैरिति चतुर्विंशांगुलएकः अष्टांगु

लोद्वितीयः षोडशांगुलस्तृतीयः एवंत्रिभिः षोडशैरष्टचत्वारिंशदंगुलं परिमंडलं धार्यमित्यर्थः उपवीतमाह मनुः कार्पासमुपवीतं-
स्याद्विप्रस्योर्ध्ववृतंत्रिवृदिति ऊर्ध्ववृतमाह संग्रहकारः करेणदक्षिणेनोर्ध्वगतेनत्रिगुणीकृतम् वलितंमानवैः सूत्रंशास्त्रेऊर्ध्ववृतं
स्मृतमिति तन्निर्माणप्रकारः स्मृत्यर्थसारे शुचौदेशेशुचिः सूत्रंसंहतांगुलिमूलकैः आवेष्ट्यषण्णवत्यातत्त्रिगुणीकृत्ययत्नतः अब्
लिंगकैस्त्रिभिः सम्यक्प्रक्षाल्योर्ध्ववृतंतुतत् अथप्रदक्षिणावृत्तंसावित्र्यात्रिगुणीकृतम् त्रिरावेष्ट्यदृढंबध्वाहरिब्रह्मेश्वरान्न्यसेत् य
ज्ञोपवीतंपरममितिमंत्रेणधारयेत् सूत्रंसलोमकंचेत्स्यात्ततः कृत्वाविलोमकम् सावित्र्यादशकृत्वोद्भिर्मंत्रिताभिस्तदुक्षयेदिति धारणे
विशेषः श्रुत्यैवोक्तः दक्षिणंबाहुमुद्धरतेवधत्तेसव्यमिति तथान्यच्च विच्छिन्नंचाप्यधोयातंभुक्त्वानिर्मितमुत्सृजेत् परिमाणांतरम
पितत्रैवोक्तम् यद्दत्युपक्रम्य पृष्ठदेशेचनाभ्यांचयत्धृतंतविंदतेकटिम् तत्धार्यमुपवीतंस्यान्नातिलंबंनचोच्छ्रितम् स्तनादूर्ध्वमधोना
भेर्नधार्यंतत्कथंचन ब्रह्मचारिणएकंस्यात्स्नातकेद्वेबहूनिवा तृतीयमुत्तरीयंवावस्त्राभावेतदिष्यते एतच्चवस्त्रोत्तरीयाभावेतृतीयो
पवीतधारणंकर्मांगम् बहूनिवेतिकाम्यम् बहूनिचायुष्कामस्येतिदेवलोक्तेः अस्यकंठादुत्तारणनिषेधंक्षालनार्थंतुशाखाविशेषे-
णतदपवादमाहभृगुः मंत्रपूतंस्थितंकायेयस्ययज्ञोपवीतकम् नोत्धरेच्चततःप्राज्ञोयइच्छेच्छ्रेयआत्मनः सकृच्चधारणात्तस्यप्राय
श्चित्तीभवेद्विजः तैत्तिरीयाः कठाः कण्वाश्चारकावाजपेयिनः कंठादुत्तार्यसूत्रंतुकुर्वंतुक्षालनंद्विजाः बह्वृचाः सामगाश्चैवयेचा

न्येयजुःशाखिनः कंठादुत्तरीयंसूत्रंतुपुनरर्हतिसंस्क्रियाम् संस्क्रियांमत्रेणोपवीतांतरधारणम् अभ्यंगेचोदधिस्नानेमातापित्रोर्मृ
तेऽहनि कंठादुत्तरीयंसूत्रंतुकुर्याद्विक्षालनंद्विजइति एतद्वाक्यबोधितविषयेष्वेवोक्तव्यवस्थाबोध्या मेखलामाहमनुः मौंजीत्रिवृत्समा
श्लक्ष्णाकार्याविप्रस्यमेखला त्रिवृताग्रंथिनैकेनत्रिभिःपंचभिरेववेति आश्वलायनः त्रिवृतामेखलाकार्यात्रिवारंस्यात्समावृता त
द्ग्रंथयस्त्रयःकार्याःपंचवासप्तवापुनः वेदत्रयेणावृतोहमितिमन्येतसद्विजः तद्ग्रंथयस्तदंगानितद्रहस्यानिसंस्मरेदिति ग्रंथिसं
ख्यानांप्रवरसंख्यानुसारेणव्यवस्थितविकल्पोबोध्यः मनुः मुंजाभावेतुकर्तव्याकुशाश्मंतकबल्बजैरितिदंडमाहाश्वलायनः पा
लाशोब्राह्मणस्येतिकेशसंमितोब्राह्मणस्येतिच गौतमः यज्ञियोवासर्वेषामिति मूर्धललाटनासाग्रप्रमाणाइतिच अतएवकेशांतत्वंमू
र्धाप्रमाणमितिकेचित् त्रिवृत्कटिसूत्रंकौपीनंभिक्षापात्रंकमंडलुमाच्छादनंद्विवाहवेदिंचसंपादयेत् इत्युपकल्पनम् पूर्वसंस्कारा
तिपत्तौतन्निमित्तंव्याहृतिहोमंकृच्छ्रानुष्ठानंचकृत्वातन्मंत्रेणनांदीश्राद्धंकृत्वोपनयनांगत्वेनमंडपदेवताप्रतिष्ठापनांतेचौलाद्याश्चसं
स्कारान्पूर्ववद्युःकुर्यात् चौलोपनयनेतुएकदिनएवकुर्यादितिपारिजाते अथोपनयनांतर्गतपदार्थेषुविशेषाः तत्रवासःपरिधानानं
तरंपूर्वोक्तानुपवीतस्याचमनरीत्याद्विराचमनंकार्यम् कारयंतिचशिष्टाभोजनरथ्याप्रसर्पणनिमित्ताचमनमनुपनीतावस्थायांउपवीतधा
रणानंतरंतुतत्तद्गुणान्वितविधिनैवाचमनम् आचांतमुत्तरेणाज्यमितिकारिकाद्युक्तेः यज्ञोपवीतिनंकृत्वायथाशास्त्रमाचामयतीति

जयंतोक्तेश्च अथजयंतोक्ताचमनप्रकारः अंतर्जानुकरःप्रणवसावित्रीब्रह्मशिरवोदक्षिणाहस्तंगोकर्णाकारंसंहतांगुलिंकृत्वाब्र
ह्मतीर्थेनवीक्षितमंबुफेनेनबुद्बुदविकृतगंधरसवर्जितंत्रिमंत्रिःपिबेत् ऋग्वेदःप्रीयतामितिप्रथमं यजुर्वेदःप्रीयतामितिद्वितीयम्
सामवेदःप्रीयतामितितृतीयम् पाणिंप्रक्षाल्यालोमकौसंवृतावोष्ठौसंहतांगुलिपाण्यंगुष्ठमूलेनद्विःपरिमृजाति अथर्ववेदःप्रीयता
मिति इतिहासपुराणानिप्रीयंतामितिद्वितीयम् ततःपाणीप्रक्षाल्यपादौशिरश्चाभ्युक्षेत् विष्णुःप्रीयतामिति अपःस्पृष्ट्वासंहता
भिस्तिसृभिरंगुष्ठेनचमुखंस्पृशेत् अग्निःप्रीयतामिति अपःस्पृष्ट्वाअंगुष्ठप्रदेशिनीभ्यांनासिकांप्राणःप्रीयतामिति अपःस्पृ-
ष्ट्वाअंगुष्ठानामिकाभ्यांचक्षुषीचंद्रादित्यौप्रीयेतामिति अपःस्पृष्ट्वातथैवकर्णौदिशःप्रीयंतामिति अपःस्पृष्ट्वांगुष्ठकनिष्ठिकाभ्यां
नाभिंपृथिवीप्रीयतामिति अपःस्पृष्ट्वाहृदयंतलेनरुद्रःप्रीयतामिति अपःस्पृष्ट्वासर्वाभिःशिरःसप्तर्षयःप्रीयंतामिति अपःस्पृ-
ष्ट्वाबाहूअग्रेणइंद्रःप्रीयतामिति एवंभोक्ष्यमाणसंध्योपासनादौचद्विराचमनमेवेति पारिजातेव्याघ्रपादः केशवादित्रिभिःपीत्वा
चतुर्थेनमृजेत्करम् पंचमेनचषष्ठेनद्विरोष्ठावुन्मृजेत्क्रमात् तौसप्तमेनचमृजेदेकवारंतुमंत्रवित् अष्टमेनतुमंत्रेणअभिमंत्र्यजलंस्पृ
शि वामंसंप्रोक्षयेत्पाणिंमनुनानवमेनतु दक्षिणंदशमेनांघ्रिंवाममेकादशेनवै मूर्धानंद्वादशेनाथस्पृशेदूर्ध्वोष्ठमृष्टकम् संकर्षणा
यनमइतिस्पृशेदंगुलिमूर्धभिः अंगुष्ठतर्जन्यग्राभ्यांसंश्लिष्टाभ्यांजलैःसह नासारंध्रेवासुदेवप्रद्युम्नाभ्यांस्पृशेच्छुभे अंगुष्ठाना

मिकाभ्यांच संश्लिष्टाभ्यांजलेः सह अनिरुद्धायनमइतिसंस्पृशेदक्षिदक्षिणम् पुरुषोत्तममंत्रेणताभ्यांवामांस्पृशेद्दृशं तथांगुष्ठ
कनिष्ठाभ्यांसंश्लिष्टाभ्यांजलेः सह अधोक्षजनृसिंहाभ्यांश्रोत्रेद्वेसंस्पृशेत्क्रमात् नाभिमच्युतमंत्रेणताभ्यामेवस्पृशेद्बुधः श्रीज-
नार्दनमंत्रेणतलेनहृदयंस्पृशेत् उपेंद्रायेतिमूर्धानंस्पृशेत्सजलपाणिना सर्वांगुल्यग्रभागैस्तुसमाश्लिष्टैर्जलैः सहः भुजौतुहरि
कृष्णाभ्यांसंस्पृशद्दक्षिणोत्तरौ आचामेदपएवंतुभगवन्नामभिःक्रमात् सद्यःपूतःसविहितेषूत्तरेष्वधिकारवानिति यत्तुतत्रैवभरद्वा
जः देव्याःपादैस्त्रिभिःपीत्वाअब्लिंगैर्नवधास्पृशेत् पुनर्व्याहृतिगायत्र्याशिरोमंत्रैर्द्विधास्पृशेत् देव्याःगायत्र्याः अब्लिंगैरित्यनंत
रंपादैरित्यनुषंगः आपोहिष्ठेत्यादिभिर्नवभिःपादैर्मुखघ्राण२नेत्र२श्रोत्र२नाभिहृदयानिनवस्थानानिसंस्पृश्यव्याहृत्यादिमंत्रैः
शिरोद्विःसंस्पृशेदित्यर्थः नायंविधिःप्रकृताचमनोपयोगीगायत्रीसाध्यस्यगायत्र्युपदेशोत्तरभाव्याचमनविषयतायाउचितत्वा-
दिति आचमनोत्तरंकार्यमुक्तंकारिकायाम् आचांतमुत्तरेणाज्येयज्ञपात्राणिचानयेत् अंतरेणाग्निमात्मानंदक्षिणेतूपवेशयेत्
आहचवृत्तिकारः ब्रह्मचारीतीर्थेनप्रविश्याचार्यस्यचदक्षिणतउपविशेत् तीर्थंनामप्रणीतानांपश्चिमोदेशः सर्वत्रतीर्थेनैवप्र
विश्यकर्मकुर्यादिति पश्चिमश्चपूर्वेणोत्करमपरेणाप्रणीताइतिसूत्रोक्तउत्कराभावेपितदुपलक्षणार्हो बोध्यः एकपुरोडाशायांअ
ग्नीषोमीयाभावेपितदुपलक्षितांतरालवत् ततःकर्तव्यंकारिकायाम् अंतरेणाग्निमात्मानंदक्षिणेतूपवेशयेत् बर्हिरास्तरणादि-

दिति आश्वलायनस्मृतौतु स्रुवसंमार्जनंकृत्वाकुर्याद्यज्ञोपवीतिनम् यज्ञोपवीतमिति एतेनबद्ध्वाचोप्यमेरुदक्कृतिष्ठंतमर्भ
कम् प्राङ्मुखंप्राङ्मुखस्तिष्ठन्कुर्याद्यज्ञोपवीतिनम् आचार्येणाजिनादीनिदातव्यानिस्थितस्यवै सम्यगाचमयित्वातमित्यादिनास्रु
वसंमार्जनांतेयज्ञोपवीतदानाद्याचमनांतमुक्तम् अवक्षारणेविशेषंशौनकः शिष्यांजलेरात्मांजलिस्थमवक्षार्योदकंगुरुःशिष्यांजलि
गतामपोवक्षार्यस्वेनपाणिनेति कस्येतिपरिदायैनंप्रजाधिपतयेततइति यद्यपिमंत्रस्यपरिदानेनकरणत्वंप्रतीयते तथापिजपो
यंपरिदानसंकल्पोत्तरंकार्यः आदित्यमीक्षयेच्छिष्यमथोपावपिपूर्ववत् तिष्ठेतामुत्तरेणाग्निमन्योन्याभिमुखौततः धात्रेपरिद
दाम्येनमितिसंकल्पपूर्वकम् कस्यब्रह्मादिकंमंत्रंददाम्यंतंगुरुंजपेदिति कारिकोक्तेः तथैवजयंताक्तेश्च जपत्वस्यवृत्तिकृदुक्तत्वा
च्च अवक्षारणादिसमिदाधानांतंगायत्र्युपदेशेसन्निपात्यंगमितिप्राहाश्वलायनः शुचित्वसिद्ध्येतस्यसावित्रीग्रहणेगुरुः अभि
मंत्र्ययथावारिसिंचत्येवतदंजलौ हस्तंगृहीत्वाशिष्यस्यमंत्रशिष्यत्वसिद्धये कर्मसाक्षिणमादित्यंतर्पयेत्तंयथोक्तवत् ततोव्रता
नांपतयेददातिरक्षयेबटुं रवेःसंमाननार्थायरक्षार्थेतद्बटोरपि असामर्थ्यात्समाहर्तुमात्मनस्तंगुरुःपुनः ददातिमंत्रवद्भूत्यप्रजानां
पतयेपुनः प्रजानांपतयेसूर्यायताभ्यांदत्तइतिस्मरन् गृहीत्वैवानयोःशिष्यंसमालभ्यात्मसात्करोत् सोमयोषाभ्यांदत्तःसताभ्यां
मत्यंपुनर्दत्तइतिस्मरन्नित्ययंःकरोतकरोतु कुर्वत्येवात्मसात्संतःसर्वान्पूर्वमुखस्थितान् तस्मात्पूर्वमुखंकृत्वागृण्हीयाच्छिष्यमे

वनम् गुरोरग्नेः प्रधानत्वात्प्रागग्नौ जुहुयाद्बहुरिति अग्नौ गुरुत्वोक्त्या गुरोरिवाग्नेरपि अभिवादनं कार्यमिति सूच्यते एतदंते आचारप्रा
प्तं गायत्रीपूजनं जान्वाच्यो पसंगृह्येति सूत्रोक्तप्रकारउपदेशश्चाग्नेरुत्तरदेशे कार्यः अथास्मै सावित्री मन्वाहोत्तरतोग्नेः प्रत्यङ्मुखायो
पविष्टाय सन्नाय दक्षिणतस्तिष्ठत आसीनायेत्येक इति पारस्करोक्तेः इत्थमेव कातीयसूत्राच्च कल्पसूत्राधिकरणोक्तरीत्या षडंगमेक
इति वदत्यत्र यैकीयत्वोक्त्या दक्षिणत उपविष्टायोपदेशस्यनाभिमतत्वसूचनाच्च उत्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मु-
ख इतर इति गायत्र्युपदेशपर शांखायनसूत्रवाक्यशेषस्याध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वेत्यस्य व्याख्यावसरे
एकः श्रोता दक्षिणतो निषीदेदित्येतन्निषिध्यते अनेन सूत्रेणेति तद्भाष्याच्च उदगग्नेरुत्सृज्य प्रागाचार्य उपविशति उदगग्रेषु दर्भेषु प्र
त्यङ्माणवक इति छंदोगसूत्रव्याख्यावसरे उत्तरत एवाग्नेरिति तद्भाष्योक्तेश्च उत्तरतोग्नेः प्राङ्मुख आचार्योवतिष्ठते पुरस्तात्प्रत्यङ्मुख
इतर इत्याश्वलायनेनापि गायत्र्युपदेशांगोऽवक्षारणादावुत्तरदेशोपदेशस्य प्रयोगविषयत्वेन गायत्र्युपदेशेपि तद्देशत्वौचित्यसूचना
च्च होमदेशनिरूपितोत्तरदेशस्योक्तसूत्रेषु विधित्सितत्वेन होमस्य सत्यप्यंगत्वे तद्देशत्वमनाशंक्यं तत्तद्धोमसमयेऽग्नेः पश्चादुभयो-
र्दक्षिणोत्तराभावेन जयंतादिभिरुपवेशनविधानाच्च अस्मादेव ब्रह्मचारिणो दक्षिणदेशे स्थितिनियमात् ब्रह्मचारिकर्तृकेसंस्थाज
पोपस्थानादौ परिभाषाप्राप्तं नाग्नेः प्रत्यगुदग्देशावस्थानं भवति अनियतदेशप्राप्तौ परिभाषाया नियमार्थत्वात् मानांतरनियतदेश

बाधेनापूर्वविधित्वासंभवात् योपिजयंतग्रंथः अथोभयोरपि अग्नेःपश्चाद्यथोपवेष्टुंशक्यंतथोपविशत्याचार्यस्तस्याभिमुखोब्रह्म-
चारीति ब्रह्मचारिणाग्नेःपश्चतः करणस्यपरिभाषाविरुद्धत्वात् अनेकोदात्ततत्स्त्रानुरोधाच्च अग्नेःप्रत्यगुदग्देशएवपश्चादितित
त्रनिर्दिष्टइतिद्रष्टव्यम् अग्नयेसमिधमितिमंत्रोऽविज्ञातस्वरत्वाविभाषाच्छंदसीत्येकश्रुत्यविधानाच्चैकश्रुत्यैनैवप्रयोक्तव्योऽतःसर्व
त्राप्यविज्ञातस्वरामंत्राएकश्रुत्यैनैवप्रयोक्तव्याइतिजयंतः अथोपसंग्रहणम् तत्रकारिकाकारः जान्वाच्यदक्षिणंपादमाचा
र्यस्योपगृत्यचेति पादावुपसंगृत्येतिजयंतः उपसंग्रहणंनामामुकगोत्रोदेवदत्तशर्माहंभोअभिवादयइत्युक्त्वाकर्णौदक्षिणोत्तरौ
पाणिभ्यांस्पृष्ट्वादक्षिणेनपाणिनागुरोर्दक्षिणपादंसव्येनसव्यंगृहीत्वाशिरोवनमनमिति अनेनैवाशयेनविष्णुः तस्यचव्यत्य
स्तकरःपादावुपस्पृशेदिति अत्रविशेषमाहबौधायनः श्रोत्रेसंस्पृश्यमनःसमाधायाऽधस्ताज्जान्वोरापद्भ्यामन्योपसंग्रहण-
मिति अन्यस्यगुर्वादेः अत्रापिविशेषमाह्निकपारिजाते भारद्वाजः कर्णयुग्मंस्वहस्ताभ्यांस्पृष्ट्वाजानुद्वयादिकम् चरणांगु
ष्ठयुग्मांतंसमृज्यतुशनैःशनैः दक्षश्रोत्रसमंबाहुंदक्षिणंतुप्रसार्यच बाहूपरिशिरोनम्रमुक्तंतदभिवादनमिति यद्यपिस्मृत्यर्थसा
रेगुरुषूपसंग्रहणंवृद्धतरेष्वभिवादनंदृष्ट्वानमस्कारंकुर्यादितिउक्त्वाऽभिवादनेपादग्रहणंनास्तिपादस्पर्शनंकार्यंनवेत्युक्तंतथापिअ
भिवादनविशेषात्मकोपसंग्रहणविषयाभरद्वाजोक्तिरितिनविरोधः गोत्रपरिचर्यार्थंप्रवरकीर्त्तनमपिकार्यमितिवृद्धाः यद्यपिस

सं॰कौ॰
१२३

र्वत्रप्रत्युत्थायाभिवादनमिति आपस्तंबोक्तिस्तथापीह जान्वाच्योपसंगत्यस्तत्रादुपपाद्यते अथ प्रत्यभिवादनम् मनुः आयुष्मा
न्भवसौम्येतिवाच्याविप्रोभिवादने अकारश्चास्यनाम्नोंते वाच्यः पूर्वाक्षरः प्लुत इति तथाचायुष्मान्भवसौम्यदेवदत्तशर्मन् अ इतिवा-
क्यंसंपद्यते इति केचित् प्रत्यभिवादेऽशूद्रे एचोप्रगृह्यस्य दूराद्धूतेपूर्वस्यार्धस्यादुत्तरस्येदुताविति पाणिनीयसूत्रयोरनुसारेणतु अ
कारांतं देवदत्तादिनाम्नोंते विद्यमानस्याकारस्यप्लुतत्वं हरेशंभोइत्यादौ हरा३इ शंभा३उ इत्येवं संध्यक्षरविश्लेषेणाक्षरपूर्वभागाकारस्य प्लु
तत्वं विधीयते इति मनुवाक्यार्थः संभवति पूर्वकार्य इतिवच्च पूर्वाक्षरइत्यप्यक्षरपूर्वार्द्ध इत्यर्थे संभवति लभ्यते नैवम् मनुवाक्यस्यामे
त्रितेयोंत्यस्वरः प्लुतसंध्यक्षरमप्रगृह्यमाईआउभावंवापद्यते इतिवसिष्ठवाक्यसंवादोपि तस्मादायुष्मान्भवसौम्यदेवदत्ता३ इत्येवप्र
त्यभिवादउचितः सगच्छते चैवंसति देवदत्ता३ अग्निभूता३इ पठा३उ ई दृश प्रत्यभिवादवाक्योदाहरणं वैयाकरणानाम् पारिजातादि
प्रयोगकाराणांचदेवदत्ता३ इति प्लुतांतप्रत्यभिवादकथनंसंगच्छते नोक्तमनुवाक्यव्याख्यावसरे व्याख्यातॄणामीदृशग्रंथः अभिवादकस्य
यन्नामतस्यांतोयो ऽकारादिस्वरः नाम्नामकारांतत्वानियमाभावात्सप्लुतः कार्यइत्युपक्रम्य पठितः एतच्च प्रत्यभिवादे ऽशूद्रे इति प्लुतं-
स्मरन्पाणिनिः स्फुटमुक्तवानिति यदिशर्मान्नित्येवप्लुतोविवक्षितस्तदाकारांतत्वनियमाभावोक्तिः पाणिनीयवाक्योदाहरणंचसंभवतः
अतश्चस्मृत्यर्थसारे प्रत्यभिवादपक्षेषुबहुषुसत्स्वपि देवदत्ता३ इति प्लुतांगीकारपक्ष एवश्रेयानितिमंतव्यम् ब्रह्मचार्योपदेशोवेदमधीष्वेति

१२३

सूत्रकृतेतिकरणप्रयोगादुपदेशसमाप्तिः प्रैषार्थमेवसुक्त्वातुकालमेकंविनिर्दिशेदितिकारिकायामपिन्यायप्राप्तंशाकस्यवैकल्पि-
ककालावधारणमुक्तं नतुपूर्वोपदेशवदर्यंनित्योपदेशः यस्त्वस्मिन्नवसरेपारिजातादौसायंप्रातर्भिक्षेथाःसायंप्रातःसमिधमाधेहि
इत्युपदेशपाठः सकर्मकुर्वन्नित्यनेनैवगतार्थत्वात्प्रमादपाठः अनुप्रवचनीयार्थभिक्षायामेवभिक्षांभवान्ददात्विति भिक्षांभवती-
ददात्वित्यनुप्रवचनीयमितिवेति भवच्छब्दमध्यकभिक्षावाक्यप्रयोगनियमोनसायंप्रातर्भिक्षायाम् तत्रत्वादिमध्यावसानेषुभवच्छ
ब्दोपलक्षितेनिस्मृत्युक्तप्रकारेणैवतद्वाक्यप्रयोगइतिभाष्यकारः इत्युपनयनपदार्थेषुविशेषकथनम् अथोपनयनप्रयोगंवक्तुं
द्वितीयजन्मप्रदत्वेनेतरकर्माधिकारसाधकत्वेनेतरसंस्कारेभ्यस्तस्यवैशिष्ट्यात्तत्फलप्राप्तौविघ्नपरिहारायविनायकशांतिरुच्यते तत्र
याज्ञवल्क्यः एवंविनायकंपूज्यग्रहांश्चैवविधानतः कर्मणांफलमाप्नोतिश्रियंचाप्नोत्यनुत्तमामिति बृहत्पराशरः चतुर्थ्यांशुक्ल
पक्षेतुश्रवणेचोत्तरेतथा पुण्यार्थंसर्वसिद्ध्यर्थंकुर्याच्छांतिंविनायकीम् नक्षत्रांतराणिविष्णुधर्मे इमांशांतिंप्रकृत्य हस्तपुष्याश्व
मृगसौम्यवैष्णवान्यतमेशुभे नक्षत्रेचमुहूर्तेचमैत्रेवाब्रह्मदैवतइति भविष्ये शुक्लपक्षेचतुर्थ्यांचवारेणधिषणस्यच तिष्येचवीरन-
क्षत्रेतस्यैवपुरतोनृपेति एतद्वचनमुदाहृत्यापरार्कः तच्छ्रीकामस्यविनायकस्नपनविषयम् उपस्पृष्टविषयंतुपुण्याहविधा-
नम् उपस्पृष्टस्यविलंबायोगात् धिषणोगुरुः तस्यैवविनायकस्येत्यर्थइतिउपनयनादिफलप्राप्त्यैक्रियमाणायामपिविनायकशां

तौउपनयनकालाविरोधेन संभवत्कालोपसंग्रहः कार्योनतुतद्विराधेनेतिबोध्यम्   अथप्रयोगः   उक्तकालेपवित्रपाणिरधिकारीप्रा-
णानायम्यदेशकालौसंकीर्त्यास्यकुमारस्योपनयनकर्मणोनिर्विघ्नफलसिध्यर्थंविनायकशांतिंकरिष्यइतिसंकल्प्यतदंगत्वेनगणेशपूजादि-
नांदीश्राद्धांतंकृत्वाचार्यवरणंकुर्यात्  आचार्यस्त्वयथास्वर्गे॰ चतुर्णामृत्विजांच अस्ययागस्यनिष्पत्तौ॰ पंचानांवस्त्रादिभिःपूजनम्  ततआ-
चार्योपिपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्याचार्यकर्मकरिष्यइतिसंकल्प्य यदत्रसंस्थितमिति सर्षपान्विकीर्य श्युचीवइत्यद्भिर्भूवंप्रो-
क्ष्यस्वस्त्यनंताक्ष्यमिति मंत्रद्वयेन प्रार्थ्य प्रतिमाहूयस्याःग्न्युत्तारणंकृत्वामध्यदेशेशुचौक्लृप्तेस्थंडिलेपंचवर्णैःपिष्टैः स्वस्तिकंकृत्वातस्मि-
न्प्राचीनग्रीवमुत्तरलोमानडुहंरक्तमरक्तंवाचर्मास्तीर्यतत्रश्रीपर्णीपीठंनिधायतच्छेतवाससाच्छाद्यपूर्वादिक्रमेणचतसृषुदिक्षुस्वस्तिकानि
कृत्वातेष्विमान्पदार्थान् कांडानुसमयेनकुर्यात्  महीद्यौरितिभुवंस्पृष्ट्वा ओषधयःसमितिधान्यंनिःक्षिप्य आकलशेष्विति एकरूपमव्र-
णंकलशंनिधाय इमंमेगंगेइतिसंगमोदकेनह्रदोदकेनवापूर्य उत्धृतासिवराहेण कृष्णेनशतबाहुना मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृत-
मिति अश्वस्थानगजस्थानवल्मीकसंगमह्रदमृदोनिःक्षिप्य गंधद्वारामितिचंदनागरुकेसरकस्तूरिकर्पूरगोरोचनानिनिःक्षिप्य तूष्णीं
गुग्गुलंचनिक्षिप्य याओषधीरिति सर्वौषधीः ओषधयःसमितियवान्  कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपल्लवान् याःफलिनी-
रितिफलम् सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यं युवासुवासाइतिवस्त्रेणावेष्ट्यचंदनमाल्यभूषितंकृत्वा पूर्णादर्वीतिपूर्ण

पात्रं निधाय कलशस्य मुखे विष्णुः॰ यजमानस्य दुरितक्षयकारकाः॰ सर्वे समुद्राः सरितः॰ देवदानवसंवादे मथ्यमान इति च पठेत् द-
क्षिणपश्चिमोत्तरकलशेष्वित्यंते कर्मण्याचार्येण कृते चत्वार ऋत्विजः पवित्रपाणय आचम्य प्राङ्मुखास्तत्त्वायामीति वरुणमावाह्य
षोडशोपचारैरभ्यर्च्य पूर्वकलशे श्रीसूक्तं दक्षिणे महित्रीणां पश्चिमकलशे नहि तेक्षत्रं उत्तरकलशे वामदेव्यं आनोभद्रा इति बह्वृचाः
नमो वाच इति॰ शं नो वातः पवतामिति तैत्तिरीयाः पठेयुः तदेवाचार्यो भद्रासनप्राग्देशे होमार्थं स्थंडिलं कृत्वा तदैशान्यां वेद्यां पीठे-
वा वस्त्रादौ प्रतिमाद्वये विनायकांबिकयोरावाहनादिभिर्नैवेद्यांतैरुपचारैः पूजां कुर्यात् तत्र मंत्रौ तत्पुरुषाय विद्महे वक्रतुंडाय धी
महि तन्नो दंती प्रचोदयात् सुभगायै विद्महे काममालिन्यै च धीमहि तन्नो गौरी प्रचोदयात् अपरार्के हेमाद्रिमते प्रतिमयोरुत्त
रतो नमोंतैर्नाममंत्रैरन्या देवता आवाह्य षोडशोपचारैः पूजयेत् मंत्राः व्योमकेशाय नमः पार्वत्यै॰ भीमतायै॰ कृष्णस्य पित्रे॰
अर्काय॰ आराय॰ सिताय॰ धिषणाय॰ क्लेदपुत्राय॰ कोणाय॰ लक्ष्मवते॰ विधुंतुदाय॰ केतवे॰ बाहुलेयाय॰ नंदकस्य धारिणे॰
१५ ततो होमार्थे स्थंडिले यजमानगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्यान्वादध्यात् तत्र चक्षुषी आज्येनेत्यंते ऽत्र प्रधानं मितं संमितं शा-
लंकटंकटं कूष्मांडं राजपुत्रं व्योमकेशं नंदकस्य धारिणं पार्वतीं भीमतां कृष्णस्य पितरं अर्कं आरं सितं धिषणं क्लेदपुत्रं कोणं लक्ष्म
वंतं विधुंतुदं केतुं बाहुलेयं एताः प्रधानदेवताः एकैकया चर्वाहुत्या शेषेणेत्यादि निर्वापकाले मिताय त्वेत्यादिभिरेकविंशतिमंत्रैः

प्रत्येकंचतुरावृत्तैश्चतुरशीतिवारंनिरूप्य तथैवप्रोक्ष्य बर्हिष्यासादनांतंकृत्वागव्याज्यलोलीकृतेनसिद्धार्थपिष्टेनोद्वर्त्तितांगस्यसर्वौष
धैः सर्वगंधैश्चविलिप्तशिरसोयजमानस्य मंगलवेदघोषेणवस्त्राच्छादनादिनोक्तपीठात्मकभद्रासनोपर्याचार्येणोपवेशनंकार्यं उपवेश
नोत्तरमुहूर्त्तनंमदनरत्नोक्तंतु मिताक्षरामहार्णवादिमहानिबंधेविरोधादुपेक्ष्यम् सर्वौषधानि प्रियंगुनागकेसरादीनीतिमिताक्षरा
याम् अपरार्केवृद्धवसिष्ठः चिक्कणाइति बालाचशंखपुष्पीचकुष्ठंचैववचातथा नागकेसरचूर्णंचसर्वौषधिगणोमृगोइति छंदो
गपरिशिष्टेतु कुष्ठंमासीहरिद्रेद्वेमुराशैलेयचंदने वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताइति महार्णवेतु मुरामांसीवचाकुष्ठंशैले
यंरजनीद्वयम् सटीचंपकमुस्ताचसर्वौषधिगणःस्मृतइति सटीकचोराइति सर्वगंधामदनरत्ने कुंकुमागरुकर्पूरकस्तूरीचंदनंत
था जातीफलमितिप्रोक्ताःसर्वगंधाःसदाबुधैरिति हेमाद्रौगारुडे कर्पूरंचंदनंदर्पःकुंकुमंचसमांशुकम् सर्वगंधमितिप्रोक्तंसमस्त-
सुरवल्लभमिति भद्रासनमुपविष्टोयजमानःऋत्विग्भिर्गृह्योक्तविधिनास्वस्तिवाचनंकुर्यात् तत्रजीवत्पतिपुत्रादिभिःसुवेषा-
भिःस्त्रीभिर्नीराजितस्तास्यःसकंचुकानिवस्त्राणिदद्यात्शिष्टाचारात् ततआचार्योयजमानदक्षिणतउदङ्मुखस्तिष्ठन्ऋत्वि
ग्दत्तपूर्वादिकुंभत्रयेणाक्रमेणैकैकमंत्रेणस्नापयेत् सहस्राक्षंशतधारमृषिभिःपवमानंकृतं तेनत्वामभिषिंचामिपावमान्यःपुनंतु
ते भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः २ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि ललाटेक

र्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ३ उत्तरकलशेमंत्रत्रयसमुच्चयइतिहेमाद्रिमिताक्षरामहार्णवकृन्मतम् प्रतिकलशंमंत्रत्रयावृत्तिरित्यपरा
र्कः ततश्चतुर्भिर्मीलितैः कलशैर्कैलिग्धृतैः र्दूहस्राशरोक्तैर्मंत्रैरभिषेकंकारयेत् मंत्रान्स्वयंपठेदाचार्यः एतद्वैपावनंस्नानसहस्रा
क्षमृषिस्मृतम् तेनत्वाशतधारेणपावमान्यःपुनंत्विमाः शक्रादिदशदिक्पालाब्रह्मेशाःकेशवादयः आपस्तेघ्नंतुदौर्भाग्यंशांतिंदद
तुसर्वदा ॐमित्र्यानआपओषधयःसंतुदुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः समुद्रागिरयोनद्योमुनयश्चपतिव्रताः
दौर्भाग्यंघ्नंतुतेसर्वेशांतिंयच्छंतुसर्वदा पादगुल्फोरुजंघास्यनितंबोदरनाभिषु स्तनोरोबाहुहस्ताग्रग्रीवाअंसांगसंधिषु नासाललाट
कर्णभ्रूकेशांतेषुचयत्स्थितम् तदापोघ्नंतुदौर्भाग्यंशांतिंयच्छंतुसर्वदेति ततआचार्यउपविश्यसव्यपाणिगृहीतकुशत्रयांतर्हिते
यजमानमूर्धनिऔदुंबरेणस्रुवेणसार्षपंतैलंजुहुयात् ॐमितायस्वाहा ॐसंमितायस्वाहा ॰ॐशालाय ॰ॐकटंकटाय ॰ॐकू
ष्मांडाय ॰ॐराजपुत्रायस्वाहेतियथामंत्रलिंगंत्यागंयजमानः शालकटंकटाकूष्मांडराजपुत्रायेतिसमासांगीकारेणआहुतिंचतु
ष्टयमित्यपरार्कः ततइध्माधानादिमितादिषण्मंत्रैरग्नाववदानधर्मेणाहोमः व्योमकेशायस्वाहेत्येवंपंचदशाहुतयश्च ततःस्वि
ष्टकृतादिपूर्णपात्रनिनयनसंस्थाजपांतंकृत्वाचरुशेषेणाभिषेकशालायांलोकपालेभ्योबलीन्दद्यात् ओंइंद्रायनमः ईशाना
यनमइत्यष्टदिक्षु ब्रह्मणेनमःअनंतायनमःईशानपूर्वयोर्मध्येबलिद्वयं अथयजमानःस्नातः शुक्लानुलेपनमाल्यांबरधरआ

चार्यसहितस्तीर्णकुशेशूर्पेनिहितमुपहारंगायत्र्याविनायकायैतमुपहारंनिवेदयामीत्यंतयाविनायकायनिवेदयेत् सक्तुद्रवहता-
स्तंडुलास्तिलपिष्टमिश्रौदनः पक्कमत्स्याः ३अपक्काः ३माषविकारास्तदाकारावा पक्कमपक्कंचमांसंताद्दशमाषविकारोवा चित्रंस्र
गंधिपुष्पं चंदनादिस्रगंधिद्रव्यं त्रिविधासुरा गुडमधुपिष्टमिश्राणिससैंधवानिपात्रत्रयस्थितानिक्षीराणिवा मूलकं३पूरिकाः३
अपूपाः३औंडेरकस्रजः३ दध्योदनः पायसंगुडमिश्रितंतंडुलादिपिष्टं लड्डुकाः३ इत्युपहाराः इद्दशमेवोपहारमंबिकागायत्र्यां
बिकायैएतमुपहारंनिवेदयामीत्यंतयांबिकायैनिवेदयेत् ततआचमनफलतांबूलदक्षिणानीराजनपुष्पांजलिभिरभ्यर्च्यशिरसाभू
मिंगत्वोक्तगायत्रीभ्यांविनायकमंबिकांचनमस्कुर्यात् गंधपुष्पदूर्वासर्षपयुक्तेनकुंकुममात्रयुतेनवोदकेनांजलिमापूर्यपूर्वोक्त-
गायत्रीभ्यामर्घ्यंदत्वादूर्वासर्षपपुष्पपूर्णांजली ताभ्यांदत्वाविनायकमुपतिष्ठेत् रूपंदेहियशोदेहिभगंभवतिदेहिमेपुत्रान्दे
हि॰ यथापाठेमंत्रेणांबिकामुपतिष्ठेतेतिमहार्णवः बृहत्साराशरेणोपस्थानेमत्रांतरमुक्तम् सौभाग्यमंबिकेदेहिभगंरूपंय-
शोपिच स्त्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे गणेशमातस्त्वंबालेयत्किंचिन्मदभीप्सितम् एकनाम्नैवतद्देहिदेहिगौ
रिवरानूनमेति ततआस्तीर्णकुशेशूर्पेसर्वप्रकारमुपहारशेषंनिधायचतुष्पथभुवमुपलिप्यतत्रगुरुःशूर्पंनिदध्यात् यज
मानःप्रक्षालितपादआचांतोमंत्रोक्तदेवताभ्योबलिंदद्यात् मंत्राः बलिंगृण्हंत्विमेदेवाआदित्यावसवस्तथा मरुतश्चा

शिवनौरुद्राः सुपर्णाः पन्नगाग्रहाः असुरायातुधानाश्च पिशाचामातरोनगाः शाकिन्योयक्षवेतालायोगिन्यः पूतनाःशिवाः जृं-
भकाः सिद्धगंधर्वानागाविद्याधरानदाः दिक्पालालोकपालाश्च येचविघ्नविनायकाः जगतांशांतिकर्त्तारो ब्रह्माद्याश्च महर्षयः मा
विघ्नंमाचमेपापंमासंतुपरिपंथिनः सौम्याभवंतुतृप्ताश्च भूतप्रेताः सुखावहाइति ततोयजमानोगृहमागत्यक्षालितपादआचम्याचा-
र्यंसंपूज्यसदक्षिणंवस्त्रयुग्मंतस्मैदद्यादृत्विग्भ्योयथाशक्तिहेमदक्षिणांदत्वाऽन्येभ्यश्च भूयसींदद्यात् स्थापितदेवतानामुत्तरपूजा-
विसर्जनपूर्वकमाचार्यायसमर्पणंविधायपरिस्तरणविसर्जनादिविभूतिधारणांतंकृत्वागच्छगच्छेत्यग्निंविसृज्यदशावरान्ब्राह्मणान्भो-
जयेदीश्वरार्पणंकुर्यात् विवाहाद्यारंभेविवाहकर्मणोनिर्विघ्नतासिद्ध्यर्थंइत्येवंसंकल्पवाक्योहः एवमुपसर्गनिवृत्तिकामइ-
तिश्रीकामइतिवाऽन्यत्रतदूहोबोध्यः इतिवैनायकीशांतिः समवादियथामति अनंतेनभवेदेषागणेशांबिकोयोर्मुदे
अपरार्कमतेकलशेषुपूजांतेव्योमकेशादिदेवतापूजनं ततउत्सादनादिसंस्कृतस्योपवेशनम् ततः सहस्राक्षमितिमंत्रत्रयाद्दृ
त्याचतुर्भिः कलशैरभिषेकः ततोमितायस्वाहेतिचतुर्भिर्मंत्रैस्तैलहोमः तैरेवचतुर्भिर्मंत्रैश्चतुष्पथेबलिदानंततोऽर्घ्यदानमु
पस्थानंततः शुक्लवस्त्रादिधारणंब्राह्मणभोजनंगुरवेवस्त्रयुग्मदानंगुरुवत्पूजनंचेतिप्रयोगः अत्रोपकल्पनश्लोकामहार्णवे
अथोच्यंतेऽत्रसंभारारोचनापंचमृत्तिकाः अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् चंदनागरुकस्तूरीकर्पूराद्याः सगंधयः

गौरसर्षपकल्कस्तु गव्याज्येनविमिश्रितः गुग्गुलुश्चापिसंशुद्धः सर्वौषधिगणास्तथा पुरा चत्वारः कलशाएकवर्णाश्चासुदिना
व्रणाः ह्रदोदकयुतावापिनिम्नगासंगमोदकाः सग्रीवपुच्छमारक्तंचर्मचानडुहंतथा श्रीपर्णिकाष्ठपीठंचसहकारस्यपल्लवाः
अश्वत्थपल्लवाःस्रुक्श्वसुगंधिसुमनांस्यपि स्रजःशोभनगंधाश्चविचित्रकुसुमानिच कलशावेष्टनार्थंतुनववस्त्रचतुष्टयं पीठ
स्याच्छादनार्थंतुशुभवस्त्रमथापरम् गणेशांबिकयोरर्थेवस्त्रयुग्मंसुशोभनम् आचार्यदक्षिणार्थंतुमहार्हवसनद्वयम् पंचवर्णा
निपिष्टानिस्वस्तिकस्यविनिर्मितैः तैलंचसार्षपंतद्वदुदुंबरविनिर्मिताः स्रुवःकुशाश्चरुस्थालीपाकार्थंतंडुलाःशुभाः किंचिद्दं
तिश्रियांकुष्मास्तंडुलाश्चापरेतथा तिलपिष्टेनसंयुक्तओदनःशूर्पमेवच पक्वाश्चमत्स्याश्चापक्वामांसंपक्वमपक्वकम् गौडीपैष्टी
चमाध्वीचेत्येवंवैत्रिविधासुरा मत्स्यादिकंसुरांतंचनिषिद्धंयच्चयस्यतत् नग्रात्यंतुविशेषेणद्विजै स्त्याज्यासुरासदा यजमा
नस्तुशूद्रश्चेद्द्विजैस्तानियोजयेत् प्रत्यक्षमूलकंवास्यादुक्तभक्षस्तथाकृतः अपूपापूरिकाश्चैवतथवोंडेरकस्रजः दध्यन्नंपा
यसंचैवपिष्टंचगुडमिश्रितम् लड्डुकाश्चतथादूर्वाःसर्षपागौरसंज्ञिताः गणेशप्रतिमाचैवगौर्याश्चप्रतिमातथा एवंसंभृतसंभारः
शांतिंकुर्याच्छुभेदिने इतिविनायकशांतिः अथपरिशिष्टोक्तविधिनाग्रहमखउच्यते तत्रपरिशिष्टे आदित्य
इंदुरंगारकःसौम्योगुरुर्भार्गवःशनैश्चरोराहुःकेतुरितिनवग्रहाः तेंहिस्वगत्यादिभिर्गृण्हंतितानयनादिषुपुण्यकालेषुयजेत्शांत

येसद्यो हुतेष्वाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यात् अनाभ्युदयिकं हि शांतिकर्म यदि तदानुकूल्यकामः स्यात्कामं प्रा
गभ्युदयात् संप्राहान्यंतरीत्यकुर्यात्तं दशावराहुतिस्स्वयमेकः कुर्यात् ऊर्ध्वमापंचाशतश्चत्वार ऋत्विजः शतावरान्हुतावष्टौ नव
म आचार्यः स्वयमेव वायदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात् तान्विधिवद्वरयित्वार्चयेत् आचार्य आदित्याय जुहुयात्
इतरेभ्य इतरे पूर्वोत्तरं तंत्रमाचार्यः कुर्यादितरे तमन्वालभेरन्निति अभ्युदयकामं प्रत्यनादि पुण्यकालनियममुक्त्वा हुताख्यो सा
नैमित्तच्छांत्यर्थं प्रयोगेऽयनादिपुण्यकालापेक्षेति सद्य इत्यनेनोक्तं आभ्युदयिकमित्यादेर्व्याख्यानमुक्तं पारिजाते विवाहोपनयना
दिष्वाभ्युदयिकेषु कर्मसु आदौ ग्रहयज्ञं कुर्यात् अनाभ्युदयिके श्राद्धातिरिक्तकर्मसु ग्रहानुकूल्यकामो ग्रहयज्ञं कुर्यादिति आभ्युद-
यिककर्माव्यवहितपूर्वकालेऽसंभवतो ग्रहयज्ञस्य नियतव्यवहितकालेनानुष्ठानमभ्यनुजानाति व्यवहितानुष्ठानेपि समदिनाधिक
व्यवधानं कार्यमित्यर्थः होमगतसंख्यानिमित्तां कर्तृसंख्याव्यवस्थामाह दशेत्यादिना ऊर्ध्वमिति दशाभ्य ऊर्ध्वं पंचाशतमभिव्याप्य च
त्वार ऋत्विजः तत ऊर्ध्वं शतपर्यंतमष्टौ ऋत्विजो नवम आचार्यः स इति आचार्यकर्म स्वयमेव वा कुर्यादित्यर्थः अस्मिन्पक्षे आचार्यायदे
यां दक्षिणां ग्रहकल्पविदे दद्यात् इतरेभ्यः सोमादिभ्यः तत्रानुष्ठानकाले ऋत्विग्भिराचार्यान्वारंभः कार्य इति विधीयते अथ प्रयो
गः पत्न्या बटुना सह कृताभ्यंगस्नानो यजमानो देशकालौ संकीर्त्याऽस्य कुमारस्य करिष्यमाणोपनयने निर्विघ्नफलसिद्धिकामो

बह्वृचगृह्यपरिशिष्टोक्तरीत्याग्रहमखंकरिष्येइति संकल्प्यगणपतिपूजनमाचार्यर्त्विग्वरणतत्पूजनांतंकुर्यात् ततआचार्योग्रहप्रति
मानामग्न्युत्तारणंकुर्यात् तद्विधिःपरिशिष्टे ताम्रंस्फाटिकंरक्तचंदनंस्वर्णंतद्वैरजतंत्रपोह्यसीसंकांस्यंइतिनवग्रहप्रतिमाद्र
व्याणि स्वर्णमेकमेववासर्वेषामिति तद्दोषेतिबृहस्पतेरपिबुधवत्सौवर्णीप्रतिमेत्याशयः आचार्योयजमानानुज्ञयाचार्यकर्मक
रिष्येइतिसंकल्प्य हस्तमात्रावरंचतुरस्रंस्थंडिलंकुंडंवासंस्कृत्य ततऐशान्यांकुंडवदायतांचतुरस्रांद्व्यंगुलोच्छ्रितत्रिभूमिकांग्र
हवेदिंकृत्वातस्यांशुक्लैर्व्रीहितंडुलैःसकर्णिकमष्टदलमंबुजमुल्लिखेत् आहुतिसंख्यावृत्त्यनुसारेणकुंडादौहस्ताधिकपरिमाण-
व्यवस्थासंवत्सरकौस्तुभांतर्गतमाघकृत्येद्रष्टव्या कुंडतुल्यैवग्रहवेदिर्वृद्धैःकल्प्या कर्णिकायांग्रहपीठानिकुर्यात् कर्णिका-
यांमध्येरक्ताक्षतैर्वर्तुलं आग्नेयदलेशुक्लाक्षतैश्चतुरस्रं दक्षिणेरक्ताक्षतैस्त्रिकोणं ऐशान्येहरिताक्षतैर्बाणाकारं उत्तरेपीताक्षतैर्दी
र्घचतुरस्रं पूर्वस्मिन्शुक्लाक्षतैःपंचकोणं पश्चिमेकृष्णाक्षतैश्चापाकारं नैरृतेतादृशैःशूर्पाकारं वायव्येचित्राक्षतैर्ध्वजाकारमिति त
तउदीच्यांरंगवल्लीपद्मेधान्येनकुंभयोग्यंपीठंकल्प्यतत्रनवमव्रणंतैजसंमृन्मयंवाऽऽतुलिप्तमक्षतपुष्पमालाद्यलंकृतंकुंभंस्थापये-
त् आकलशेष्वित्यस्यगाधिपुत्रोविश्वामित्रःपवमानसोमोगायत्री कलशस्थापने॰ ततःकुंभंशुद्धाद्भिःपूरयेत् इमंमेगंगेइत्यस्यसिं
धुक्षित्प्रैयमेधोनद्योजगतीउदकपूरणेवि॰ ततःकर्तव्यक्रमःपरिशिष्टे अद्भिःपूरयित्वापंचगव्यानिपंचामृतानिनवपर्वतधातून्

पवित्रमृदोनवरत्नानिप्रक्षिप्यदूर्वापल्लवैर्मुखमवच्छाद्यवस्त्रयुग्मेनवेष्टयित्वासमुद्रादीनितीर्थान्यावाह्यकुंभमभिमृश्याऽब्लिंगा
वारुणीः पावमानीश्चजपेदिति तत्रआप्यायस्वेत्यस्यराहूगणोगोतमः सोमोगायत्री क्षीरप्रक्षेपेवि० दधिक्राव्णइत्यस्यगौत-
मोवामदेवोदधिक्रावानुष्टुप् दधिप्रक्षेपेवि० उक्तमंत्राभ्यांक्षीरदधिनीक्रमेणप्रक्षिप्यशुक्रमसिज्योतिरसीतिघृतंगंधद्वारामि-
त्यस्यानंदःश्रीरनुष्टुप् गोमयप्रक्षेपे० इतिगोमयं गायत्र्याविश्वामित्रःसवितागायत्री गोमूत्रप्रक्षेपे० इतिगोमूत्रं पुनराप्यायस्वे
त्यादिभिस्त्रिभिः क्षीरदधिघृतानिप्रक्षिप्यमधुवाताइतितिसृणांराहूगणोगौतमोविश्वेदेवागायत्री मधुप्रक्षेपे० मधुप्रक्षिप्य
स्वादुःपवस्वेत्यस्यरेणुर्भार्गवः पवमानसोमस्त्रिष्टुप् शर्करांप्रक्षेपे० शर्करांचप्रक्षिप्य नूतनाल्हृतपवित्रपर्वतधात्तून्त्यवराल्हय
गजवल्मीकन्हृदगोष्ठराजद्वारचतुष्पथेभ्योनूतनाल्हृतपवित्रमृदश्चक्षिपेत् उध्दृतासिवराहेणकृष्णेनशतबाहुना मृत्तिकेहन
मेपापंयन्मयादुष्कृतंकृतमिति सहिरत्नानीत्यस्यश्यावाश्वःसवितागायत्री नूतनाल्हृतरत्नानिप्रक्षिप्य रुवतिभीमइत्यस्यवैश्वा
मित्रोरेणुः पवमानसोमोजगती त्वग्प्रक्षेपे० न्यग्रोधाश्वत्थप्लक्षजंबूचूतत्वचःप्रक्षिप्य याओषधीरित्यास्याथर्वणोभिषगोष
धयोनुष्टुप् अनेनशतौषधानितदभावेदशमूलानिस्तवर्णवानिःक्षिप्य गंधद्वारामितिगंधं कांडात्कांडादितिदूर्वाः ततःप्रवोय
ज्ञेइत्यस्यवसिष्ठोविश्वेदेवाअनुष्टुप् पल्लवप्रक्षेपे० न्यग्रोधाद्युक्तपल्लवैर्मुखमाच्छाद्य युवंवस्त्राणीतिवस्त्रयुग्मेनवेष्टयित्वा कुंभे

तीर्थान्यावाहयेत् सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः गंगेचयमुनेचैवगोदावरिसरस्व
ति नर्मदेसिंधुकावेरि जलेस्मिन्संनिधिंकुरु्विति इमंमेगंगेइतिच ततःकुंभमभिमृश्यजपेत् आपोहिष्ठेतितृचस्यांबरीषःसिंधु
द्वीपआपोगायत्री नहितेक्षत्रमिति तिसृणांसजीगर्तिःशुनःशेपोवरुणस्त्रिष्टुप् स्वादिष्ठयेति तिसृणांमधुच्छंदाःपवमानसोमोगाय-
त्री सर्वासांजपे॰ मूलेरूग्लिंगबहुवचनाच्छब्दैस्तिसृणामेवर्चांविनियोगप्रतीतेः येचांसूक्तोपन्यासश्चिंत्यः काम्येस्वयमेवायंजपआ
चार्येणकार्यः नैमित्तिकेस्वाशक्तौमंत्रविदमन्यंनियुंजीत अथयजमानःप्राङ्मुखःसमाहितचित्तःआचार्यर्त्विक्सहितःपुण्याहवाचनं
कुर्यात् अस्यनवग्रहकर्मणःपुण्याहंभवंतोब्रुवंत्विति एवंस्वस्तीत्यादि ततोग्रहपूजांकरिष्येइतिसंकल्प्य ततःपूर्वनिर्मितपीठेषुयथास्था
नमुखीग्रहप्रतिमाःस्थापयित्वातद्दक्षिणवामपार्श्वयोरधिदेवताप्रत्यधिदेवताप्रतिमेतदभिमुख्यौस्थापयेत् तत्प्रतिमानामसंभवेपु-
ष्पाक्षतादिषुदेवताआवाहयेच्च प्रणवव्याहृतिभिर्वक्ष्यमाणरीत्यावात्याकृष्णेनेत्यृगंतेभगवन्नादित्येत्याद्यावाहयामीत्यंतंपरिशिष्टोक्तं
गंधमंत्रंपठित्वाकर्णिकास्थतान्प्रतिमायांप्राङ्मुख्यांपुष्पांजलिंनिक्षिपेदित्यावाहनं एवंप्रत्यावाहनंपुष्पांजलिप्रयोगोबोध्यः तत्रायं
क्रमः व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतयऋषयःअग्निवायुसूर्यप्रजापतयोदेवताःगायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि
आवाहने॰ ॐभूरादित्यमावाहयामि ॐभुवआदित्य॰ ॐस्वरादित्यमा॰ ॐभूर्भुवःस्वरादित्यमावाहयामि आकृष्णेनेत्यस्याहि

रण्यस्तूपऋषिः सवितादेवता त्रिष्टुप्छंदः आवाहनेविनियोगः ओं आकृष्णेनरजसा॰ पश्यन्नितिमंत्रंसमुच्चार्य भगवन्ना
दित्यग्रहाधिपतेकाश्यपगोत्रकलिंगदेशेश्वरजपापुष्पोपमांगद्युते द्विभुजपद्माभयहस्तसिंदूरवर्णांबरमाल्यानुलेपनज्वलन्मा
णिक्यरत्नखचितसर्वांगाभरणभास्करतेजोनिधे त्रिलोकप्रकाशकात्रैदेवतामयमूर्त्तेनमस्तेसन्नद्धारुणध्वजपताकोपशोभितेनसप्त
श्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाग्निरुद्राभ्यांसहपद्मकर्णिकायांताम्रप्रतिमांप्राङ्मुखवर्तुलपीठेधितिष्ठपूजार्थंत्वामावा
हयामि इत्यादित्यमावाहयेत् तद्दक्षिणपार्श्वे ओं भूरादित्याधिदेवमग्निमावाहयामि ॐ भुव आदित्याधिदेवमग्निमावाहयामि ॐ स्व
रादित्याधिदेवमग्निमावा॰ ॐ भूर्भुवः स्वरादित्याधिदेवमग्निमावा॰ ॐ अग्निंदूतमित्यस्य काण्वोमेधातिथिर्ऋषिः अग्निर्देवता
गायत्रीछंदः आवाहने॰ ॐ अग्निंदूतमितिमंत्रमुच्चार्य पिंगलश्मश्रुकेशांपिंगाक्षित्रितयं अरुणवर्णंछागस्थं साक्षसूत्रंसप्तार्चिषंश
क्तिधरंवरदहस्तद्वयमादित्याधिदेवमग्निमावाहयामि तद्वामपार्श्वे ॐ भूरादित्य प्रत्यधिदेवंरुद्रमावाहयामि ॐ भुवआदित्यप्रत्यधि
देवंरुद्रमावाह॰ ॐ स्वरादित्यप्रत्यधिदेवंरुद्रमावा॰ ॐ भूर्भुवः स्वरादित्यप्रत्यधिदेवंरुद्रमावा॰ त्र्यंबकमित्यस्य वसिष्ठऋषिः त्र्यं
बकोदेवता अनुष्टुप्छंदः आवाहने॰ ॐ त्र्यंबकंयजामहे॰ मृतात् इमंमंत्रंसमुच्चार्य त्रिलोचनोपेतंपंचवक्त्रंवृषारूढंकपालशूलखट्वां
गधारिणंचंद्रमौलिंसदाशिवमादित्यप्रत्यधिदेवंरुद्रमावा॰ १ तद्दक्षिणपूर्वदले ॐ भूः सोममावाह॰ ॐ भुवः सोममा॰ ॐ स्वः सो

सं॰कौ॰ १३०

ममावाह॰ ॐ भूर्भुवःस्वः सोममावाह॰ आप्यायस्वेत्यस्यगौतमऋषिःसोमोदेवता गायत्रीछंदः आवाहने॰ ॐ आप्यायस्वसमेतुते॰
इमंमंत्रमुच्चार्य भगवन्सोमद्विजाधिपते सुधामयशरीर अत्रिगोत्रयमुनातीरदेशेश्वरक्षीरधवलांगकांते द्विभुजगदावरदानांकि
तकरशुक्लांबरमाल्यानुलेपन सर्वांगयुक्तमौक्तिकाभरणारमणीयसमस्तलोकाप्यायकदेवतास्वाद्यमूर्ते नमस्तेसन्नद्धधवलध्वजपता
कोपशोभितेनदशश्वेताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाद्रिरुमयासहाग्नेयदलमध्येस्फाटिकप्रतिमांप्रत्यङ्मुखींचतु
रस्रपीठेधितिष्ठपूजार्थंत्वामावा हयामि तद्दक्षिणपार्श्वे ॐ भूःसोमाधिदेवताअपआवाहयामि ॐ भुवःसोमाधि
देवता अपआवा॰ ॐ भूर्भुवःस्वःसोमाधिदेवताअपआवा॰ ॐ भूर्भुवःस्वःसोमाधिदेवताअपआवा॰ अप्सुमइत्यस्यसिंधुद्वीपऋ
षिःआपोदेवताःगायत्रीछंदःआवाहने॰ ॐ अप्सुमेसोमो॰ शंभुवं इमंमंत्रमुच्चार्य स्त्रीरूपधारिणीःश्वेतवर्णाःमकरवाहनाःपा
शकलशधारिणीःमुक्ताभरणभूषिताःसोमाधिदेवताअपआवा॰ तद्वामपार्श्वे ॐ भूःसोमप्रत्यधिदेवतामुमामावाह॰ ॐ भुवःसो
मप्रत्यधिदेवतामुमामावा॰ ॐ स्वःसोमप्रत्यधिदेवतामुमामा॰ ॐ भूर्भुवःस्वःसोमप्रत्यधिदेवतामुमामावाह॰ गौरीर्मिमायेत्य
स्यदीर्घतमाऋषिःउमादेवताजगतीछंदःआवाहने॰ ॐ गौरीर्मिमायसलिला॰ परमेव्योमन् इमंमंत्रमुच्चार्य अक्षसूत्रकम १३०
लदर्पणकमंडलुधारिणींत्रिदशपूजितांसोमप्रत्यधिदेवतामुमामावाह॰ २ दक्षिणदेशे ॐ भूरंगारकमावा॰ ॐ भुवोंगारकमावाहया॰

ॐ स्वरंगारकमावाह० ॐ भूर्भुवःस्वरंगारकमावाह० अग्निर्मूर्द्धेत्यस्य विरूपऋषिः अंगारकोदेवता गायत्री छंदः आवाहने० ॐ अ
ग्निर्मूर्धा० जिन्वति इमंमंत्रंसमुच्चार्य भगवन्नंगारकाख्याकृते भारद्वाजगोत्र अवंति देशेश्वर ज्वालापुंजांगद्युते चतुर्भुजशक्तिशूल
गदाखड्गधारिन् रक्तांबरमाल्यानुलेपन प्रवालभूषिताभरण सर्वांग दुरालोकदीप्तेनमस्तेसन्नद्धरक्तध्वजपताकोपशोभितेनरक्तमे
षरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छभूमिस्कंदाभ्यांसहपद्मदक्षिणदलमध्येरक्तचंदनप्रतिमांदक्षिणासुरवींत्रिकोणपीठेधितिष्ठ
पूजार्थंत्वामावाहयामि तद्दक्षिणपार्श्वे ॐ भूरंगारकाधिदेवतांभूमिमावाह० ॐ भुवोंगारकाधिदेवतांभूमिमावाह० ॐ स्वरंगार
काधिदेवतांभूमिमावा० ॐ भूर्भुवःस्वरंगारकाधिदेवतांभूमिमावाह० स्योनापृथिवीत्यस्यमेधातिथिर्ऋषिः पृथिवीदेवता गायत्रीछं
दःआवाहने० ॐ स्योनापृथिवि० इमंमंत्रंसमुच्चार्य शुक्लवर्णादिव्याभरणभूषितांचतुर्भुजांसौम्यवपुषंचंडांशुसदृशांबरांरत्नपात्रस
स्यपात्रौषधिपात्रपद्मोपेतकरांचतुर्दिग्भागपृष्ठगतां अंगारकाधिदेवतांभूमिमावाहयामि तद्वामपार्श्वे ॐ भूरंगारकप्रत्यधिदेवंस्कं-
दमावा० ॐ भुवोंगारकप्रत्यधिदेवंस्कंदमावा० ॐ स्वरंगारकप्रत्यधिदेवंस्कंदमावा० ॐ भूर्भुवःस्वरंगारकप्रत्यधिदेवंस्कंदमावा० कु
मारश्चित्पितरमित्यस्य गृत्समदऋषिः स्कंदोदेवता त्रिष्टुप्छंदः आवाहने० ॐ कुमारश्चित्पितरं० इमंमंत्रंसमुच्चार्य षण्मुखंशिखं
डकविभूषणांरक्तांबरधरंमयूरयानंकुक्कुटघंटापताकाशक्त्युपेतंचतुर्भुजमंगारकप्रत्यधिदेवंस्कंदमावाह०३ ततःप्रागुत्तरदले ॐ भूः

बुधमावा॰ ॐ भुवो बुधमावा॰ ॐ स्वर्बुधमावा॰ ॐ भूर्भुवः स्वर्बुधमावा॰ उद्बुध्यध्वमित्यस्य बुधऋषिः सौम्यो देवता त्रिष्टुप्छं-
दः आवाहने॰ ओं उद्बुध्यध्वंसमनसः॰ इमंमंत्रंसमुच्चार्य भगवन् सौम्य सौम्याकृते सर्वज्ञानमय अत्रिगोत्र मगधदेशेश्वर कुंकु
मवर्णांगद्युते चतुर्भुज खड्ग खेट गदा वरदानांकित पीतांबर माल्यानुलेपन मरकताभरणालंकृत सर्वांग विबुधपते नमस्ते सन्नद्ध पीतध्व
ज पताकोपशोभितेन चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरुषाभ्यां सहैशानदलमध्ये सुवर्णप्रतिमासु उदङ्मुखी
बाणाकारपीठेधितिष्ठ पूजार्थं त्वामा॰ तद्दक्षिणपार्श्वे ॐ भूः सौम्याधिदेवं विष्णुमावा॰ ॐ भुवः सौम्याधिदेवं विष्णुमावा॰ ॐ स्वः सौ-
म्याधिदेवं विष्णुमावा॰ ॐ भूर्भुवः स्वः सौम्याधिदेवं विष्णुमावा॰ इदं विष्णुरित्यस्य काण्वो मेधातिथिर्ऋषिः विष्णुर्देवता गायत्री छंदः
आवाहने॰ ॐ इदं विष्णुर्वि॰ इमंमंत्रंसमुच्चार्य कौमोदकीपद्मशंखचक्रोपेतं चतुर्भुजं सौम्याधिदेवं विष्णुमावा॰ तद्वामपार्श्वे ॐ भूः सौ
म्यप्रत्यधिदेवं पुरुषमावा॰ ॐ भुवः सौम्यप्रत्यधिदेवं पुरुषमावा॰ ॐ स्वः सौम्यप्रत्यधिदेवं पुरुषमावा॰ ॐ भूर्भुवः स्वः सौम्यप्रत्यधिदे
वं पुरुषमावाहयामि सहस्रशीर्षेत्यस्य नारायणऋषिः पुरुषो देवता अनुष्टुप्छंदः आवाहने॰ ॐ सहस्रशीर्षापुरुषः॰ इमंमंत्रंस-
मुच्चार्य कौमोदकीपद्मशंखचक्रोपेतं चतुर्भुजं सौम्यप्रत्यधिदेवं पुरुषमावा॰ उत्तरदले ॐ भूः बृहस्पतिमावा॰ ॐ भुवः बृहस्पति
मा॰ ॐ स्वः बृहस्पतिमावाहयामि ॐ भूर्भुवः स्वः बृहस्पतिमावाह॰ बृहस्पते अतीत्यस्य गृत्समदऋषिः बृहस्पतिर्देवता त्रिष्टुप्छंदः

आवाहने॰ ॐ बृहस्पते अति यदर्यो अर्हात्॰ इमंमंत्रंसमुच्चार्य भगवन्बृहस्पते समस्तदेवताचार्यांगिरसगोत्र सिंधुदेशेश्वर दीप्तस्कव-
र्णसदृशदीप्तचतुर्भुजदंडकमंडल्वक्षसूत्रवरदानांकितपीतांबरमाल्यानुलेपनपुष्परागमयाभरणरमणीयसमस्तविद्याधिपतेनमस्ते
सन्नद्धपीतध्वजपताकोपशोभितेनपीताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छेंद्रब्रह्माभ्यांसह पद्मोत्तरदलमध्ये स्कवर्णप्रतिमासु
दशांगुलवींदीर्घचतुरस्रपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि तद्दक्षिणपार्श्वे ॐ भूर्बृहस्पत्यधिदेवेंद्रमावाहयामि ॐ भुवर्बृहस्पत्य
धिदेवेंद्रमावाह॰ ॐ स्वर्बृहस्पत्यधिदेवेंद्रमावा॰ ॐ भूर्भुवः स्वर्बृहस्पत्यधिदेवेंद्रमावाह॰ इंद्र श्रेष्ठानीत्यस्य गृत्समदऋषिः इंद्रोदे
वतात्रिष्टुप्छंदः आवाहनेविनि॰ ॐ इंद्र श्रेष्ठानिद्रविणानि॰ इमंमंत्रंसमुच्चार्य चतुर्दंतगजारूढंवज्रांकुशधरंशचीपतिंनानाभर
णभूषितंबृहस्पत्यधिदेवमिंद्रमावाहयामि तद्वामपार्श्वेॐ भूर्बृहस्पतिप्रत्यधिदेवंब्रह्माणमावाहयामि ॐ भुवः बृहस्पतिप्रत्यधिदे
वंब्रह्माणमावा॰ ओं स्वर्बृहस्पतिप्रत्यधिदेवंब्रह्माणमा॰ ॐ भूर्भुवः स्वर्बृहस्पतिप्रत्यधिदेवंब्रह्माणमावा॰ ब्रह्मणातेब्रह्मयुजेत्यस्य
विश्वामित्रऋषिः ब्रह्मादेवता त्रिष्टुप्छंदः आवाहनेविनि॰ ॐ ब्रह्मणातेब्रह्मयुजायुनज्मि॰ इमंमंत्रंसमुच्चार्य पद्मासनस्थंजटिलं
चतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधारिणं कृष्णाजिनवाससंपार्श्वस्थितहंसंबृहस्पतिप्रत्य॰ ब्रह्माणमा॰ ततः प्राग्दले ॐ भूः शु
क्रमावाहयामि ॐ भुवः शुक्रमावा॰ ॐ स्वः शुक्रमावाह॰ ॐ भूर्भुवः स्वः शुक्रमावा॰ शुक्रंते अन्यदित्यस्य भरद्वाजऋषिः शुक्रोदेव-

तात्रिष्टुप्छंदः आवाहनेवि० ॐ शक्रं कंते अन्यद्यजतंते० इमंमंत्रंसमुच्चार्य भगवन् भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशश्व
रजतोज्वलांगकांते चतुर्भुज दंड कमंडल्वक्षसूत्र वरदानांकित शुक्लांबरमाल्यानुलेपन वज्राभरणभूषितसर्वांग समस्तनीतिशास्त्र
निपुणमते नमस्तेसन्नद्धशुक्लध्वजपताकोपशोभितेन शुक्लाश्व सहितेन रथेन मेरुंप्रदक्षिणीकुर्वन्नागच्छेंद्राणींद्राभ्यांसहपूर्वदलमध्ये
रजतप्रतिमांप्राङ्मुखींपंचकोणपीठेऽधितिष्ठ पूजार्थंत्वामावाहयामि तद्दक्षिणपार्श्वे ॐ भूः शुक्राधिदेवतामिंद्राणीमावाहयामि
ॐ भुवः शुक्राधिदेवतामिंद्राणीमावाह० ॐ स्वः शुक्राधिदेवतामिंद्राणीमावा० ॐ भूर्भुवः स्वः शुक्राधिदेवतामिंद्राणीमावा० इंद्रा
णीमासुवित्यस्य वृषाकपिर्ऋषिः इंद्राणी देवता पंक्तिश्छंदः आवाहनेवि० ॐ इंद्राणीमासुनारिषु० इमंमंत्रंसमुच्चार्य संतानमंजरी
वरदानधरांहस्तभुजांशुक्राधिदेवतामिंद्राणीमावा० वामपार्श्वे ॐ भूः शुक्रप्रत्यधिदेवमिंद्रमावाहयामि ओंभुवः शुक्रप्रत्यधिदेवमिंद्र०
ॐ स्वः शुक्रप्रत्यधिदेवमिंद्रमावा० ॐ भूर्भुवः स्वः शक्रप्रत्यधिदेवमिंद्रमावा० इंद्रमिद्देवतातय इत्यस्य मेधातिथिर्ऋषिः इंद्रो देवता प्रगा
थाबृहतीछंदः आवाहनेवि० ॐ इंद्रमिद्देवतातय० इमंमंत्रंसमुच्चार्य चतुर्दंतगजारूढंवज्रांकुशधरं शचीपतिं नानाभरणभूषितं भा
र्गवप्रत्यधिदेवमिंद्रमावाह० पश्चिमदले ॐ भूः शनैश्चरमावाह० ॐ भुवः शनैश्चरमावा० ॐ स्वः शनैश्चरमावा० ॐ भूर्भुवः स्वः
शनैश्चरमा० शमग्निरित्यस्य रिरिंबिठिः शनैश्चरो देवता उष्णिक्छंदः आवाहने० ॐ शमग्निरग्निभिः० इमंमंत्रंसमुच्चार्य भगवन्

शनैश्चर भास्करतनय काश्यपगोत्र सौराष्ट्रदेशेश्वर कज्जलमीनांगकांते चतुर्भुजचापतूणीरकृपाणाभयांकित नीलांबरमाल्यानुले-
पननीलरक्तभूषणालंकृत सर्वांग समस्त भुवनभीषणामर्षमूर्तेनमस्तेसन्नद्ध नीलध्वजपताकोपशोभितेन गृध्ररथवाहनेन मेरुं प्रद-
क्षिणीकुर्वन्नागच्छ प्रजापतियमाभ्यांसह पश्चिमदलमध्ये कालायसप्रतिमां प्रत्यक्षुरर्वीचापाकारपीठे अधितिष्ठ पूजार्थंत्वामावा-
हयामि तद्दक्षिणपार्श्वे ॐ भूः शनैश्चराधिदेवं प्रजापतिमावाहयामि ॐ भुवः शनैश्चराधिदेवं प्रजापतिमावा० ॐ स्वः शनैश्चरा-
धिदेवं प्रजापतिमावाह० ॐ भूर्भुवः स्वः शनैश्चराधिदेवं प्रजापतिमावा० प्रजापतेनत्वदित्यस्य हिरण्यगर्भऋषिः प्रजापतिर्दे-
वतात्रिष्टुप्छंदः आवाहनेवि० ॐ प्रजापतेनत्व० इमंमंत्रंसमुच्चार्य यज्ञोपवीतिनंहंसस्थमेकवक्त्रं अक्षमालास्रुवपुस्तककमं-
डलुसहितचतुर्भुजं शनैश्चराधिदेवं प्रजापतिमावा० तद्वामपार्श्वे ॐ भूः शनैश्चरप्रत्यधिदेवं यममावा० ॐ भुवः शनैश्चरप्र-
त्यधिदेवं यममावाहयामि ॐ भुवः शनैश्चरप्रत्यधिदेवं यममावा० ॐ स्वः शनैश्चरप्रत्यधिदेवं यममावा० ॐ भूर्भुवः स्वः शनै-
श्चरप्रत्यधिदेवं यममावाहयामि यमायसोमंसुनुतेत्यस्य यमऋषिः यमोदेवता अनुष्टुप्छंदः आवाहने० ॐ यमायसोमंसुनुत०
इमंमंत्रमुच्चार्य ईषत्पीनंदंडहस्तं रक्तसदृशं पाशधरं कृष्णवर्णं महिषारूढं सर्वाभरणभूषितं शनैश्चरप्रत्यधिदेवं यममावाह०
पश्चिमनैर्ऋतदले ॐ भूराहुमावाह० ॐ भुवोराहुमावा० ॐ स्वोराहुमावा० ॐ भूर्भुवः स्वोराहुमावा० कयानश्चित्र इत्यस्य वाम

देवऋषिः राहुर्देवता गायत्रीछंदः आवाहनेवि॰ ॐ कयानश्चित्रआभु॰ इमंमंत्रंसमुच्चार्य भगवन्राहोरविसोममर्दनसिंहिका
नंदनपैठीनसगोत्रबर्बरदेशेश्वरकालमेघद्युतेव्याघ्रवदनचतुर्भुजखड्गचर्मशूलवरदानांकितकृष्णांबरमाल्यानुलेपनगोमेदकाभ
रणाभूषितसर्वांगशौर्यनिधेनमस्तेसन्नत्थकृष्णध्वजपताकोपशोभितेनकृष्णसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छसर्प
कालाभ्यांसहपद्मनैर्ऋतदलमध्येसीसकप्रतिमांदक्षिणासुरवींसूर्पाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि तद्दक्षिणपार्श्वे
ॐ भूराह्वधिदेवान्सर्पानावाह॰ ॐ भुवोराह्वधिदेवान्सर्पानावा॰ ॐ स्वोराह्वधिदेवान्सर्पानावाह॰ ॐ भूर्भुवःस्वोराह्वधिदे
वान्सर्पानावाहयामि आयंगौरित्यस्यसार्पराज्ञीऋषिः सर्पादेवताःगायत्रीच्छंदः आवाहने॰ॐ आयंगौःपृश्नि॰ इमंमंत्रंस-
मुच्चार्य अक्षसूत्रधरान्कुंडिकाकारपुच्छयुक्तान् एकभोगानराह्वधिदेवान्सर्पानावाहयामि तद्वामपार्श्वे ॐ भूराहुप्र
त्यधिदेवंकालमावा॰ ॐ भुवोराहुप्रत्यधिदेवंकालमावा॰ ॐ स्वोराहुप्रत्यधिदेवंकालंआवाहयामि ॐ भूर्भुवःस्वोराहुप्रत्यधिदे
वंकालमावा॰ परंमृत्योरित्यस्यसंकुसुकऋषिः मृत्युर्देवता त्रिष्टुप्छंदः आवाहने॰ॐ परंमृत्योअनुपरे॰ इमंमंत्रंसमुच्चार्य करालव
दनंनित्यगं भीषणंपाशदंडधरंसर्पवृश्चिकरोमाणंराहुप्रत्यधिदेवंकालमावाहयामि मत्स्यगुत्तरदले ॐ भूः केतुमावाहयामि ॐ
भुवःकेतुमावा॰ ॐ स्वः केतुमावा॰ ॐ भूर्भुवःस्वः केतुमावाहया॰ केतुंकृण्वन्नित्यस्यमधुच्छंदाऋषिः केतुर्देवता गायत्रीछंदः

आवाहने॰ ओंकेतुंकृण्वन्नकेत॰ इमंमंत्रंसमुच्चार्य भगवन्केतोकामरूपजैमिनिगोत्रमध्यदेशेश्वर धूम्रवर्ण ध्वजाकृते द्विभुजगदा-
वरदानांकितविचित्रांबरमाल्यानुलेपनवैडूर्यमयाभरणभूषितसर्वांगचित्रशक्तेनमस्ते सन्नद्धचित्रध्वजपताकोपशोभितेन कपोतरथवा
हनेन मेरुंप्रदक्षिणीकुर्वन्नागच्छ ब्रह्मचित्रगुप्ताभ्यांसहपद्मवायव्यदलमध्येकांस्यप्रतिमांदक्षिणासुरवींध्वजाकारपीठेधितिष्ठपूजार्थं
त्वामावा॰ तद्दक्षिणपार्श्वे ॐ भूः केत्वधिदेवंब्रह्माणमावा॰ ॐ भुवः केत्वधिदेवंब्रह्माणमावा॰ ॐ स्वः केत्वधिदेवंब्रह्माणमावा॰
ॐ भूर्भुवः स्वः केत्वधिदेवंब्रह्माणमावा॰ ब्रह्मजज्ञानमित्यस्यनकुलऋषिः ब्रह्मादेवता त्रिष्टुप्छंदः आवाहनेवि॰ ॐ ब्रह्म-
जज्ञानंप्रथमं॰ इमंमंत्रंसमुच्चार्य पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थित
हंसंकेत्वधिदेवंब्रह्माणमावाह॰ तद्वामपार्श्वे ॐ भूः केतुप्रत्यधिदेवंचित्रगुप्तमावा॰ ॐ भुवः केतुप्रत्यधिदेवंचित्रगुप्तमावाह॰
ॐ स्वः केतुप्रत्यधिदेवंचित्रगुप्तमावा॰ ॐ भूर्भुवः स्वः केतुप्रत्यधिदेवंचित्रगुप्तमावाह॰ सचित्रचित्रमित्यस्य भरद्वाजऋषिः चि
त्रगुप्तोदेवता त्रिष्टुप्छंदः आवाहनेवि॰ ॐ सचित्रचित्रंचितयंत॰ इमंमंत्रंसमुच्चार्य उदीच्यवेषधरंसौम्यदर्शनंलेखनीपत्रोपे
तद्विभुजंकेतुप्रत्यधिदेवंचित्रगुप्तमावा॰ ९ अथकर्मसाद्गुण्यकरदेवतावाहनं शुक्लतंडुलपीठेषुकुर्यात् तत्राग्र्यंक्रमः शनैर्वा
गुप्रदेशे ॐ भूः विनायकमावा॰ ॐ भुवः विनायकमावा॰ ॐ स्वः विनायकमा॰ ॐ भूर्भुवः स्वः विनायकमावा॰ आतूनइंद्रेत्य

स्यकाण्वऋकुसीद ऋषिः विनायकोदेवता गायत्री छंदः आवाहने॰ ॐ आतूनइंद्रक्षुमंतं॰ इमंमंत्रं समुच्चार्य चतुर्भुजंत्रिनेत्रंगजाननंनागयज्ञोपवीतिनंचंद्रधरं दंताक्षमालापरशुमोदकोपेतंचतुर्भुजंविनायकमावा॰ १ तद्दक्षिणतः ॐ भूः दुर्गामावाहयामि ॐ भुवः दुर्गामा॰ ॐ स्वः दुर्गामावा॰ ॐ भूर्भुवः स्वः दुर्गामावा॰ जातवेदसइत्यस्यकश्यपऋषिः दुर्गादेवता त्रिष्टुप्छंदः आवाहनेविनि॰ ॐ जातवेदसेसुनवाम॰ इमंमंत्रं समुच्चार्य शक्तिबाणशूलखड्गचक्रचंद्रबिंबखेटकपालपरशु टंकोपेत दशभुजांसिंहारूढांदुर्गाख्यं दैत्यासुहारिणींदुर्गामावा॰ २ तद्दक्षिणतः ॐ भूः क्षेत्रपालमावा॰ ॐ भुवः क्षेत्रपालमावा॰ ॐ स्वः क्षेत्रपालमावाह॰ ॐ भूर्भुवः स्वः क्षेत्रपालमावा॰ क्षेत्रस्यपतिनेत्यस्यवामदेवऋषिः क्षेत्रपतिर्देवता अनुष्टुप्छंदः आवाहनेवि॰ ॐ क्षेत्रस्यपतिनावयं॰ इमंमंत्रंमुच्चार्य श्यामवर्णंत्रिलोचनमूर्ध्वकेशंरुद्रं दंष्ट्रंभ्रुकुटीकुटिलाननंनूपुरालंकृतांघ्रिंसर्पमेखलायुतसर्वांगमतिरुद्रं क्षुद्रघंटिबद्धं गुल्फावलंबिनृकरोटिमालाधारिणंउरगकोपीनंचंद्रमौलिंदक्षिणहस्तैःशूलवेतालखड्गडुंडुभीन्दधानंवामहस्तैःकपालघंटाचर्मचापान्दधानंभीमंदिग्वाससममितद्युतिंक्षेत्रपालमावाहयामि ३ तद्दक्षिणतः ॐ भूः वायुमावाह॰ ॐ भुवोवायुमा॰ ॐ स्वर्वायुमावा॰ ॐ भूर्भुवः स्ववायुमावा॰ आणोशिशुरित्यस्यत्रितऋषिः वायुर्देवता उष्णिक्छंदः आवाहने॰ ॐ आणोशिशुर्महीनां॰ इमंमंत्रंसमुच्चार्य धावद्धरिणपृष्ठगतंध्वजवरदानधारिणंधूम्रवर्णंवायुमावाह॰ ४ तद्दक्षिणतः ॐ भूराकाशमावाह॰ ॐ भुव आकाशमावा॰ ॐ स्वरा-

काशमावा० ॐ भूर्भुवः स्वराकाशमावा० आदित्प्रत्नस्येत्यस्य वत्सऋषिः अंतरिक्षंदेवता गायत्री छंदः आवाहनेवि० ओं आदित्प्रत्नस्य
रे० इमंमंत्रंसमुच्चार्य नीलोत्पलाभंनीलांबरधारिणंचद्राकोपेतद्विभुजं षंढमाकाशमावाह ५ तद्दक्षिणतः ॐ भूरश्विनावावाह० ॐ भुवो
श्विनावावाह० ओंस्वरश्विनावावाह० ॐ भूर्भुवः स्वरश्विनावावाह० अश्विनावर्तिरस्मदेत्यस्य राहूगणोगौतमऋषिः अश्विनौदेवते उ-
ष्णिक् छंदः आवाहनेवि० ओं अश्विनावर्तिरस्मदा० इमंमंत्रंसमुच्चार्य प्रत्येकं औषधिपुस्तकोपेत दक्षिणवामहस्तावन्योन्यसंयुक्त
देहौ एकस्य दक्षिणपार्श्वे अपरस्य वामपार्श्वे रत्नभांडकर शुक्लांबरधारि नारीयुग्मोपेतौ देवभिषजावश्विनावावाहयामि ६ अथक्रतु
संरक्षकेंद्रादिलोकपालावाहनंपूर्ववत्तंडुलपीठेषु कुर्यात् तत्राऽयंक्रमः तत्रप्राग्दलाग्रे० भूरिंद्रमावाह० भुवइंद्रमावा० ॐ स्वरिंद्र
मावा० ॐ भूर्भुवः स्वरिंद्रमावा० इंद्रंवइत्यस्य मधुच्छंदाऋषिः इंद्रोदेवता गायत्री छंदः आवाहने० ॐ इंद्रंवोविश्वत० इमंमंत्रंसमु०
स्वर्णवर्णसहस्राक्षं वज्रपाणिं शचीप्रियमिंद्रमावाह० १ आग्नेयदलाग्रे ॐ भूरग्निमावाह० ॐ भुवोग्निमावा० ॐ स्वरग्निमावाह०
ॐ भूर्भुवः स्वरग्निमावा० अग्निमीळइत्यस्य मधुच्छंदाअग्निर्गायत्री आवाहने० ओं अग्निमीळे० इमंमंत्रंसमुच्चार्य रक्तवर्णसप्ता
र्चिषं सप्तहस्तं शक्त्यन्नस्रुक् स्रुवतोमर व्यंजन घृतपात्राणि दधानं स्वाहाप्रियं मेषवाहनमग्निमावाहयामि २ याम्यदलाग्रे ॐ भूर्य
ममावाह० ॐ भुवोयममावा० ॐ स्वर्यममावाह० ॐ भूर्भुवः स्वर्यममावा० यमायसोममित्यस्य यमोयमोनुष्टुप् आवाहनेवि०

ॐ यमायसोमंसुनुत॰ इमंमंत्रंसमुच्चार्य रक्तवर्णंदंडधरंमहिषवाहनमिलाप्रियंयममावा॰३ नैर्ऋतदलाग्रे ॐ भूः निर्ऋतिमा॰
ॐ भुवः निर्ऋतिमावा॰ ॐ स्वः निर्ऋतिमावा॰ ॐ भूर्भुवः स्वः निर्ऋतिमावा॰ मोषुणइत्यस्यघोरः कण्वोनिर्ऋतिर्गायत्री आवा
हने॰ ॐ मोषुणःपरापरा॰ इमंमंत्रंसमुच्चार्य नीलवर्णंखड्गचर्मधरंऊर्ध्वकेशंनरवाहनंकालिकाप्रियंनिर्ऋतिमावाहयामि४
पश्चिमदलाग्रे ॐ भूः वरुणमावाह॰ ॐ भुवः वरुणमावा॰ ॐ स्वः वरुणमावा॰ ॐ भूर्भुवः स्वः वरुणमावा॰ उदुत्तमंमुमुग्धि
नइत्यस्यशुनःशेपऋषिः वरुणोदेवतागायत्रीछंदः आवाहने॰ ओंउदुत्तमंमुमुग्धिनो॰ इमंमंत्रंसमुच्चार्य रक्तभूषणंनागपाश
धरंमकरवाहनंपद्मिनीप्रियंसुवर्णवर्णंवरुणमावा॰ ५ वायव्यदलाग्रे ॐ भूः वायुमावा॰ ॐ भुवोवायुमावा॰ ॐ स्वर्वायु-
मावाह॰ ॐ भूर्भुवः स्वर्वायुमावा॰ तववायोइत्यस्यांगिरसोव्यश्वऋषिः वायुर्देवता गायत्रीछंदः आवाहने॰ ॐ तववायवृत॰
इमंमंत्रमुच्चार्य श्यामवर्णंहेमदंडधरंकृष्णमृगवाहनंजगत्प्राणरूपंमोहिनीप्रियंवायुमावाहयामि ६ उत्तरदलाग्रे ॐ भूः कु-
बेरमावाह॰ ॐ भुवः कुबेरमावा॰ ॐ स्वः कुबेरमावा॰ ॐ भूर्भुवः स्वः कुबेरमावा॰ त्वंनःसोमइत्यस्यगोतमोराहूगणः कुबेरो-
गायत्री कुबेरावाह॰ ॐ त्वंनःसोमविश्वतो॰ इमंमंत्रंसमुच्चार्य स्वर्णवर्णंनिधीश्वरंकुंतपाणिमश्ववाहनंचित्रिणीप्रियंकुबेर
मावाह॰ ७ ऐशानदलाग्रे ॐ भूरीशानमावा॰ ॐ भुवईशानमावा॰ ॐ स्वरीशानमावा॰ ॐ भूर्भुवःस्वरीशानमावाहया॰

कद्रुद्रायेत्यस्य कण्वऋषिः रुद्रोदेवता गायत्री छंदः आवाहने ॰ ॐ कद्रुद्राय प्रचेतसे ॰ इमं मंत्रं समुच्चार्य शुद्धस्फटिकवर्णं वरदाभ
यशूलाक्षसूत्रधरं वृषवाहनं गौरीप्रियमीशानमावाह ॰ ८ एवमेकचत्वारिंशद्देवता आवाह्य कलशे च वरुणमावाह्य पूजयेत् तत्र चंद
नादिषु ग्रहभेदेन व्यवस्था विधिः परिशिष्टे रक्तचंदनो मलयजो देवदारुः कुंकुमो मनःशिला शंखपिष्टं तिलपिष्टं केतकीरजः कस्तू
रिका तेन वानुलेपनानि मलयजमेव वा रक्तपद्मं कुमुदं रक्तकरवीरम् पाटलं चंपकं कुंदमिंदीवरं कृष्णधत्तूरं तच्चित्रवर्णमिति नव
पुष्पाणि मल्लिकैव वा कृष्णावर्णाः अक्षताः अहतवस्त्रयुग्मानि च कंदरसो मयूरशिखा दशांगः सर्जरसो बिल्वफलं श्रीवासः कृ
ष्णागरुः जटामांसी मधूकमिति नव धूपाः गुग्गुलरेक एव वा सर्पिषा दीपस्तिलतैलेन वा हविष्यान्नं पायसं पललान्नं क्षीरोदनः
दध्योदनः कृसरो माषान्नं चित्रान्नमिति नवोपहारास्त्रिवृदन्नमेकमेव वा माणिक्यं मौक्तिकं प्रवालं मरकतं पुष्परागः वज्रो
नीलः गोमेदिकं वैडूर्यमिति नवरत्नान्येकमेव वा माणिक्यमिति पूजायां विशेषांतरमपि तत्रैवोक्तं पुष्पांजलिप्रयोगेणावाहनमं
त्रैरावाह्य नमोंतैर्नामभिः क्रमेण धूपदीपांतानुपचारानर्पयेदिति नामभिः ॐ आदित्याय नमः इत्येवंरूपैः क्रमेणेति असनपाद्या
र्घादीनां प्रसिद्धक्रमेणैवार्पणं कार्यमित्युच्यते तेन पुष्पानंतरं पठितानामप्यक्षतवस्त्राणां स्वकाल एवार्पणं बोध्यम् दीपांतानित्य
तद्गुणसंविज्ञानबहुव्रीहिः पुष्पांतानिति यावत्प्राकृस्विष्टकृतो ग्रहाणां घंटादिशब्दैर्धूपदीपैरुपहारानुपहृत्येति होमोत्तरं परिशिष्टे

क्तेः पारिजातादिप्रयोगेषु होमात्पूर्वं ग्रहाणां पूर्वोक्तद्रव्यैः पुष्पसमर्पणपर्यंतं पूजां कुर्यात् अन्यदेवतामलयजगंधशतपत्रपुष्पैस्तथै
व पूजयेदित्युक्तेः होमोत्तरं च सर्वदेवतानां धूपदीपप्रभृतिपूजाया एवोपदेशात् अतो होमात्पूर्वोत्तरकालयोर्व्य वस्थया विभक्ता पूजा
कार्या तत्र पूर्वकाले गंधपुष्पेषु यथोपदेशो शक्तं प्रतिद्रव्यव्यवस्था अशक्तं प्रत्येकोपदेशः उत्तरपूजायां नैवेद्येषु सपुष्परत्ननिवेदनेषु
च तथैवोपदेशा इति बोध्यम् उत्तरपूजावसर एव रत्नासंभवे सुवर्णपुष्पाणि दद्यादित्युक्तं परिशिष्टे एवं ग्रहपीठगतसर्वदेवतानां पुष्पांतपूजां
कृत्वा स्थंडिले कुंडे वाचार्योऽग्निं प्रतिष्ठाप्यान्वादध्यात् तत्र परिशिष्टम् अथाग्निमुपसमाधाय सह र्त्विग्भिः समिच्चर्वाज्यानि प्रत्ये-
कं शतेकावराभिः सहस्रपराभिराहुतिभिर्निमित्तशक्त्यपेक्षया जुहुयात् प्रधानदशांशेन पार्श्वदेवतयोस्तदर्द्धेनेतरेषां स्वाहांतैर्नामभि
र्होमस्तल्लिंगमंत्रैर्वा सकृदवदानेन चरुहोमः पाणिना प्रसृतिमितान् ब्रीहींस्तिलांश्च व्याहृतिभिर्हुत्वेति स यदि मंत्रैरिष्टस्तदेते मंत्रा-
गवंत्याकृष्णेनेत्यादि चर्वाहुतिप्रमाणं सिद्धांतशेखरे अन्नं ग्राससमं ग्राह्यमिति हेमाद्रौ स्कांदे अष्टोत्तरसहस्रं वा शतमष्टोत्तरं
तथा अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् नैवेद्यशेषं हुत्वा च होममंत्रैस्ततः परम् अथव्याहृतिभिर्हुत्वा एकैकस्य यथाक्र
ममिति पचनाग्नौ पक्वमन्नं गुडादिमिश्रं कृत्वा किंचित्किंचित्सूर्यादिभ्यो निवेद्य तच्छेषं मंत्रैर्जुहुयादित्यर्थः एतद्बह्वृचान्यविषयं बह्वृ
चानां तु परिशिष्टे होमानंतरमेव नैवेद्यसमर्पणस्योक्तत्वात्तथैवानुष्ठानं युक्तमिति पारिजातः अनेनाहुतिसंख्यादावपि परिशिष्टोक्तपक्ष

स्यैवबह्वृचैरादरः कार्यइत्युक्तंभवति यद्यप्याश्वलायनेनाष्टोत्तरशतंहोममष्टाविंशतिमेववा कुंडेवास्थंडिलेवैकः कुर्यात्कुर्वन्पृथ-
क्पृथगितिस्मृतिरूपेणोक्तम् तत्रैकः कुर्वन्कुर्यादित्येकाचार्यपक्षेनियमपरम् प्रधानहोमानंतरंहोमांतरमाहपारिजातेभगवान्
अथस्रुवेणजुहुयात्सूर्यपाकरुद्रकान् सूर्योनोपंचकंसूक्तमुदुत्यंजातवेदसम् नमोमित्रस्यवरुणश्चित्रंदेवानामित्यपि उद्वेतिसुभगः
पंचर्चाभिऋग्भिर्घृताहुतीः त्वमग्नेप्रथमंसूक्तमित्यष्टादशकर्चकम् त्वमग्नेद्युभिःषोडशभिर्घृतेनजुहुयात्ततः अथरुद्रायजुहुयात्कद्रु
द्रायषड्वाहुतीः इमारुद्रायचतथासूक्तेनचततः परम् आतेपितर्मरुतामितिसूक्तेनचघृताहुतीरिति आश्वलायनः पूर्णाहुतिंचव
स्त्वंतेहोमेग्रहमखेगुरुरित्निवस्त्वंतेहोमांतेइतिव्याख्यातंपारिजाते अतः प्रायश्चित्तहोमांतेपूर्णपात्रनिनयनात्प्राक्पूर्णाहुतिःकार्येत्यर्थः
पूर्णाहुत्यनंतरंप्रणीतानिनयनाद्यर्चनांतंकृत्वाऽभिषेकः होमंसमापयेदितिप्रकृत्याऽथयजमानाभिषेकइतिपरिशिष्टात् एवंप्रकृत्यतद्वि
धिरुक्तस्तत्रैव ग्रहवेदेःप्रागुदीच्यां शुचौदेशेसंमृष्टालंकृतेप्राक्प्रवणेचतुष्पादंदीर्घंचतुरस्रंसोत्तरच्छदंपीठंनिधायतत्रोदगग्रानमू-
लान्हरितदर्भानास्तीर्यप्राङ्मुखंकर्तारंसामात्यमुपवेश्याचार्यः सहर्त्विग्भिरभिषेककुंभमादायप्रत्यङ्मुखस्तिष्ठन्नौदुंबर्याद्र्ययाशाख
यासपलाशयासहिरण्यपवित्रयासकुशदूर्वापल्लवयांतर्धायकुंभोदकपृषद्भिरभिषेचयेत् अब्लिंगाभिर्वारुणीभिरन्याभिः शांतिपवि
त्रलिंगाभिर्ग्रहाभिषेकमंत्रैः श्रीसूक्तेनेमाआपःशिवतमाइतितृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरितिचव्याहृतिभिरेवमभिषिक्त-

स्तेभ्योग्रहोक्तांदक्षिणांदद्यात् गौःशंखोरक्तोनड्वान्हिरण्यंपीतंवासः श्वेतोऽश्वः कृष्णागौः कालायसंहस्ती छागोवेतिपुनर्हिरण्ये
नसंमितांकुर्यादभावेसर्वेषांहिरण्यमेववातुष्टिकरंदद्यात् द्विगुणमाचार्यायत्रिघृतान्नेनब्राह्मणान्भोजयित्वाशांतिःपुष्टिस्तुष्टिश्चास्त्व
तिवाचयेत् ज्ञातिसंबंधिबांधवांश्चतोषयेदेषग्रहयज्ञः सर्वारिष्टशमनः सर्वपुष्टिकरः सर्वाभीष्टप्रदइति त्रिघृतान्नेनेतिस्थानेघृतान्नेने
तिक्वचित्पाठः अभिषेकादौविशेषःपारिजाते वसिष्ठः स्वस्तिकंकल्पयेत्पश्चात्कुंडस्यैशानदेशतः यजमानाभिषेकार्थंतत्रभद्रा
सनंन्यसेत् प्राङ्मुखस्योपविष्टस्ययजमानस्यतत्रच अभिषेकंततःकुर्यादाचार्योब्राह्मणैःसह वक्ष्यमाणैःस्वमंत्रैश्च अब्लिंगैर्वेदमंत्र
कैः स्वमंत्रैर्ग्रहमंत्रैः कुंभोदकैःपुण्यतमैरुक्तद्रव्यसमन्वितैः ततस्तस्याभिषिक्तस्यरक्षार्थंबलिमुत्सृजेत् दिग्विदिक्षुचचित्रान्नै
र्दीपैर्नीराजयेत्ततः शुक्लमाल्यांबरधरःशुक्लगंधानुलेपनः ततोमंडपमागत्यध्यायेदग्निंग्रहान्सुरान् प्रत्येकंप्रतिमंत्रैश्चदद्यात्पुष्पां
जलिंततइति उद्वासनविधिःपारिजातेवामनीये प्रणवंत्वादितःकृत्वाभूर्भुवःस्वस्ततःपरम् चतुर्थ्यानामसंयुक्तंनमस्कारांत
योजितम् अनेनावाहनंकुर्यादनेनैवविसर्जनम् आचार्यप्रभृतिभ्यश्चग्रहार्चनफलंततः समिदाज्यचरूणांचतिलहोमफलंततः
ब्रह्मत्वेकुंभपूजायांचार्चनस्यफलंचयत् लोकपालगणेशाद्यास्तत्रयाअंगदेवताः तासांहोमफलंतद्वद्गृह्णीयाज्जलपूर्वकम् आज्यं-
निरीक्ष्यदत्वाचब्राह्मणान्भोजयेत्ततइति ब्राह्मणभोजनेशक्ताशक्तभेदेनव्यवस्थोक्तामात्स्ये एकमेकाहुतेर्विप्रंहोमेत्वन्नेनभो

१३७

जयेत् अत्याद्यो मध्यमश्चापि विप्रमेकं शताहुते॥ सहस्रस्याहुतेर्वैकं जघन्योविप्रभोजयेत् अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संश-
यः अन्नतः प्राहरेद्राष्ट्रं मंत्रश्चर्त्विजो गुरुम् होमः कारयितारं च स्रुकृतोपि त्वदक्षिणः तस्माद्दातुमशक्तो यो दक्षिणाश्चान्नमेव
च जपैः प्रणामैः स्तोत्रैश्च तोषयेत्तर्पयेत् ग्रहानिति अन्वाधानादिप्रयोगः ऋत्विग्भिरन्वारब्ध ॥ समिद्द्वयमादाय चक्षुषी आज्येने-
त्यंते आदित्यं प्रत्येकं शतसंख्याभिरर्कसमिच्चर्वाज्याहुतिभिः अग्निं रुद्रं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः सोमं प्रत्येकं १०० शत
संख्याभिः पलाशसमिच्चर्वाज्याहुतिभिः अपः गौरीं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः अंगारकं प्रत्येकं शतसंख्याभिः खदि
रसमिच्चर्वाज्याहुतिभिः पृथिवीं स्कंदं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः बुधं प्रत्येकं शतसंख्याभिरपामार्गसमिच्चर्वाज्याहुतिभिः
विष्णुं पुरुषं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः बृहस्पतिं प्रत्येकं शतसंख्याभिरश्वत्थसमिच्चर्वाज्याहुतिभिः इंद्रं ब्रह्माणं च
प्रत्येकं दशसंख्याभिस्तदाहुतिभिः शुक्रं प्रत्येकं शतसंख्याभिरौदुंबरसमिच्चर्वाज्याहुतिभिः इंद्राणीमिंद्रं च प्रत्येकं दशसंख्या-
भिस्तदाहुतिभिः शनिं प्रत्येकं शतसंख्याभिः शमीसमिच्चर्वाज्याहुतिभिः प्रजापतिं यमं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः
राहुं प्रत्येकं शतसंख्याभिर्दूर्वासः र्वाज्याहुतिभिः सर्पान्कालं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः केतुं प्रत्येकं शतसंख्याभिः
कुशसमिच्चर्वाज्याहुतिभिः ब्रह्माणं चित्रगुप्तं च प्रत्येकं दशसंख्याभिस्तदाहुतिभिः ९ विनायकं दुर्गां क्षेत्रपालं वायुमाकाशं

अश्विनाविंद्रमग्निंयमंनिर्ऋतिंवरुणंवायुंकुबेरंमीशानंच प्रत्येकं पंचसंख्याभिः पालाशसमिच्चर्वाज्याहुतिभिः अग्निंवायुंसूर्य-
प्रजापतिंचैकैकयाव्रीहितिलाहुत्यासूर्यंत्रयोदशवारमाज्येन अग्निंचतुस्त्रिंशद्वारंरुद्रंद्वात्रिंशद्वारमाज्येन शेषेणास्विष्टकृतमित्या
दिपात्रासादनकालेबह्वीनांचरूद्वासनस्थालीनामाज्यस्थालीनांस्रुवाणांचबहूनामासादनंकार्यंयुगपदनेककर्तृकचर्वाज्यहोम-
निर्वाहायकालेलोकसिद्धान्ततिलव्रीहिभिः सहाज्यस्यत्रिः पर्यग्निकरणम् स्रुवाणांसंमार्गोंतेदर्व्याःसंमार्गः ततोऽन्नंपात्रांत
रेपृथक्कृत्वाऽग्नावधिश्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्याद्दक्षिणतोव्यवहितदेशेबर्हिष्यासाद्यप्रत्यभिघार्यतदुत्तरतोव्रीहितिला-
नासाद्यर्त्विगन्वारब्धइध्माधानादिआज्यभागांतंकुर्यात् ततोयजमानस्त्यागंकुर्यात् शतशतसंख्याआर्कादिजातीयसमि
धःशतशतसंख्याहुतिपर्याप्तश्चरुःशतशतसंख्याहुतिपर्याप्तमाज्यंच आदित्यायसोमायांगारकायबुधायबृहस्पतयेशुक्रायश
नैश्चरायराहवेकेतवेचनमम दशदशसंख्याअर्कादिजातीयसमिधः दशदशसंख्याहुतिपर्याप्तश्चरुः दशदशसंख्याहुतिपार्या-
प्तमाज्यंच अग्नयेरुद्रायाऽप्योगौर्यैपृथिव्यैस्कंदायविष्णावेपुरुषायेंद्रायब्रह्मणइंद्राण्याइंद्रायप्रजापतयेयमायसर्पेभ्यःकालायब्रह्म
णेचित्रगुप्तायनमम पंचपंचसंख्यापलाशसमिधःपंचपंचसंख्याहुतिपर्याप्तश्चरुःपंचपंचसंख्याहुतिपर्याप्तमाज्यंच विनाय
कायदुर्गायैक्षेत्रपालायवायवेआकाशायाऽश्विभ्यां इंद्रायाऽग्नयेयमायनिर्ऋतयेवरुणायवायवेकुबेरायेशानाय एकैकाहुतिप

यौ सास्तिलव्रीहयो ऽग्नयेवायवेसूर्याय प्रजापतये त्रयोदशाहुति पर्याप्तमाज्यं सूर्याय चतुस्त्रिंशदाहुतिपर्याप्तमाज्यमग्नये द्वात्रिं
शदाहुति पर्याप्तमाज्यं रुद्रायेति ततो ऽष्टर्त्विक्सहिताचार्यपक्षेआचार्यआदित्यायजुहुयादितरे इतरग्रहेभ्यः ऋत्विक्चतुष्टयप
क्षे द्वाभ्यांद्वाभ्यांग्रहाभ्यामेकैकोजुहुयात् तत्रद्व्यंगुलादूर्ध्वंमध्यमानामिकांगुष्ठैर्मूलभागेसमिधमादायदधिमध्वाज्याक्तांजुहुयात्
पाणिनाग्रासमंचरुं आज्यंस्रुवेण तदभावे ऽश्वत्थादियज्ञियपर्णेनसर्वंप्राङ्मुखाउदङ्मुखात्हृदयनिहितोर्ध्ववामपाणयोजुहुयुः
आचार्यः प्रभूततिलव्रीहीन् व्यस्तसमस्तव्याहृतिभिर्हुत्वा ऽज्यहोमंकुर्यात् सूर्योनइतिपंचर्चस्यसूक्तस्यसूर्यपुत्रश्चक्षुः सूर्योगायत्री
ग्रहमखांगाज्यहोमेविनियोगः उदुत्यमित्यस्यकाण्वः प्रस्कण्वः सूर्योगायत्री नमोमित्रस्येत्यस्यसूर्यपुत्रोभितपाः सूर्योजगती चि
त्रंदेवानामित्यस्यांगिरसः कुत्सः सूर्यस्त्रिष्टुप् उद्वेतिसुभगइति पंचर्चस्यसूक्तस्य मैत्रावरुणोवसिष्ठः सूर्यस्त्रिष्टुप् त्वमग्नेप्रथ-
मइत्यष्टादशर्चस्य सूक्तस्यांगिरसोहिरण्यस्तूपोग्निर्जगती अंत्याष्टमीषोडश्यस्त्रिष्टुभः त्वमग्नेद्युभिरित्यस्यषोळशर्चस्य
सूक्तस्य गृत्समदोग्निर्जगती कद्रुद्रायेतिनवर्चस्यसूक्तस्यघोरः कण्वोरुद्रोगायत्री इमारुद्रायतवसेत्येकादशर्चस्यसूक्तस्यकु-
त्सोरुद्रोजगत्यंत्येत्रिष्टुभौ आतेपितरितिपंचदशर्चस्यास्सूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् एवमेकोनाशीतिमंत्रैः स्वाहांतैस्तावती
राहुतीर्हुत्वाग्रहवेदिस्थदेवताभ्योवरुणायचघंटाशब्देनधूपदीपनैवेद्यतांबूलादीन्पुष्पांजल्यंतानुपचारान्समर्पयेत् धूपदीप

नैवेद्येषु पूर्वोक्तव्यवस्थाविधिस्तदसंभवे तूक्तसाधारणविधिः स्वीकार्यः तत्र सूर्याय भद्रमुस्ताख्यकंदधूपः सोमाय मयूरशिखा
भौमाय दशांगः बुधाय रालाख्यः सर्जरसः गुरवे बिल्वफलं शुक्राय बीडाख्यः श्रीवासः शिष्टत्रिभ्यः क्रमेण कृष्णागरुजटामांसी
मधूकानीति धूपाः दीपः सर्पिषा तिलतैलेन वा सर्वेषां षाष्टिकमादित्याय सोमाय पायसं भौमाय पयोमिश्रितौदनः बुधाय गुडमि-
श्रितक्षीरमोदनं च पृथग्गुरवे भृगवे दध्योदनः शनये कृसरः मांसस्थानीयमाषविकारमिश्रितौदनो राहवे चित्रान्नं केतवे इति नैवेद्या
नि माणिक्यप्रभृतिरत्नानि स्वपुष्पाणि पुष्पांजलिरूपेण दद्यात् माणिक्यान्येव वा तावंति स्ववर्णपुष्पाणि वा प्रसीदंतु भवंत इति तान् सं-
प्रार्थ्य ऋत्विगन्वारब्धः स्रुवाज्यतिलव्रीहिशेषेण स्विष्टकृतं हुत्वा प्रायश्चित्तहोमांतं कुर्यात् ततः सामात्ययजमानोन्वारब्ध आचार्यो द्वा
दशगृहीतेन पूर्णाहुतिं कुर्यात् ततः पूर्णपात्रं निनीय संस्थाजपेनोपस्थाय परिस्तरणविसर्जनाद्यग्न्यर्चनांतं कुर्यात् अथ ग्रहवेदेः प्राग्‍उ
दीच्यां शुचौ संमृष्टे रंगवल्या स्वस्तिकालंकृते प्राक्प्रवणे चतुष्पदं दीर्घचतुरस्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रान् समूलान् हरितदर्भाना
स्तीर्य तत्र प्राङ्मुखं सामात्यं यजमानं परिहितनववस्त्रमभिषिंचेत् आपोहिष्ठेति तिसृणामांबरीषः सिंधुद्वीप आपो गायत्री अभिषेके
वि॰ तत्त्वायामीति तिसृणां शुनःशेपो वरुणस्त्रिष्टुप् अभिषेके॰ स्वादिष्ठयेति तिसृणां मधुच्छंदाः पवमानसोमो गायत्री अभिषेके॰
शंन इंद्राग्नी इति तिसृणां वसिष्ठो विश्वेदेवास्त्रिष्टुप् अभिषेके॰ पवित्रं त इति तिसृणामांगिरसः पवित्रः पवमानसोमो जगती अभि॰

ग्रहमंत्रैः ग्रहाणामादिरादित्योलोकरक्षणकारकः विषमस्थानसंभूतांपीडांहरतुतेरविः रोहिणीशः सुधामूर्तिः सुधागात्रः सुधा
शनः विषमस्थानसंभूतांपीडांहरतुतेविधुः भूमिपुत्रोमहातेजाजगतांभयकृत्सदा वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः उत्पातरू
पोजगतांचंद्रपुत्रोमहद्युतिः सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः देवमंत्रीविशालाक्षः सदालोकहितेरतः अनेकशिष्यसंपूर्णः पीडां
हरतुतेगुरुः दैत्यमंत्रीभृगुस्तेषांप्राणदश्चमहामतिः प्रभुस्ताराग्रहाणांचपीडांहरतुतेभृगुः सूर्यपुत्रोदीर्घदेहोविशाक्षःशिवप्रियः
मंदचारः प्रसन्नात्मापीडांहरतुतेशनिः महाशिरामहावक्त्रोमहादंष्ट्रोमहाबलः अतनुश्चोर्ध्वकेशश्चपीडांहरतुतेतमः अनेकरूपवर्णै-
श्चशतशोथसहस्रशः उत्पातरूपोजगतांपीडांहरतुतेशिखी सुरास्त्वाम भिषिंचंत्वित्यादिपौराणमंत्रैश्चप्रतिमंत्रमभिषिंच्य हिर
ण्यवर्णांहरिणीमित्यस्यसूक्तस्यानंदादयऋषयः श्रीर्देवता अनुष्टुबादीनिच्छंदांसि प्रत्यृचमभिषिच्येमा आपः शिवतमाइतितृचेनदे
वस्यत्वेतियजुषाभूर्भुवः स्व रितिव्याहृतिभिश्चाभिषिंचेत् ततोऽभिषेकशालायामेवाभिषिक्तयजमानस्यपूर्वादिदिक्षुचचित्रान्नैरा-
चार्योदिग्देवताभ्योबलिमुत्क्षिपेत् इंद्रायनमः अग्नयेनमः यमायनमइत्यादिनाममंत्रैः ततोयजमानस्यसुवासिनीभिर्नी
राजनंकारयेत् ततोयजमानोऽभिषेकवस्त्रमाचार्यायदत्वाश्वेतांबरेधृत्वाश्वेतचंदनेश्वेतपुष्पाणिचधृत्वाऽभिषेकशालातोग्निस-
मीपमागत्याऽग्नेर्ग्रहपीठदेवतानांचपंचोपचारपूजांतेऽग्निंग्रहांस्तदुपदेवताश्चध्यात्वा अग्नयेनमः आदित्यायनमइतिमंत्रैः प्रणवादि-

भिः प्रत्येकं पुष्पांजलिमर्पयेत् तत आचार्यउद्वासनंकुर्यात् ॐ भूर्भुवःस्वः आदित्यायनमः आदित्यमुद्वासयामीति एवंसोमादीनामु
द्वासनवाक्यमूह्यम् ततोब्राह्मणेभ्योजपहोमफलंगृहीत्वाचार्यादिभ्योदक्षिणांदद्यात् सूर्यप्रीत्यर्थमाचार्यायगां अथर्त्विग्भ्यःसोम
प्रीत्यर्थंशंखं अंगारकप्रीत्यर्थंरक्तमनड्वाहं बुधप्रीत्यर्थंसुवर्णं बृहस्पतिप्रीत्यर्थंपीतंवासः शुक्रप्रीत्यर्थंश्वेतमश्वं शनिप्रीत्यर्थंकृ
ष्णांगां राहुप्रीत्यर्थंकालायसं केतुप्रीत्यर्थंहस्तिनंछागंवेति तत्तद्धोमकर्तृव्यवस्थयातांतांदक्षिणांदद्यात् तत्रमंत्राः कपिले
सर्वदेवानांपूजनीयासिसर्वदा सर्वदेवमयीयस्मादतःशांतिंप्रयच्छमे त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे पांचजन्यंप्रदास्या
मित्यतःशांतिंप्रयच्छमे धर्मस्त्वंवृषरूपेणजगदानंदकारकः अष्टमूर्तेरधिष्ठानमतःपाहिसनातन हिरण्यगर्भगर्भस्थंहेम॰
पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभम् प्रदानात्तस्यमेविष्णोरतःशांतिंप्रयच्छमे विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः चंद्रा
र्कवाहनोनित्यमतःशांतिंप्रयच्छमे येनत्वंपृथिवीसर्वाधेनोवैकृष्णसन्निभे सर्वपापहरानित्यमतःशांतिंप्रयच्छमे यस्मादाय
सकार्याणित्वदधीनानिसर्वदा लांगलाद्यायुधादीनितस्माच्छांतिंप्रयच्छमे यस्मात्त्वंछागयज्ञानामंगलत्वेनव्यवस्थितः यानंविभा
वसोर्नित्यमतःशांतिंप्रयच्छमइति एषामर्थानांविषममूल्यत्वेपिन्यूनताप्तवद्भिःसुवर्णदानेनलाभसाम्यंसंपादनीयम् उक्तदक्षि
णानामभावेसर्वेभ्यस्तुष्टिकरंहिरण्यमेवदद्यात् अतोनात्रमूल्याध्यायोक्तमूल्यदानंसर्वस्मिन्पक्षे आचार्यायद्विगुणंदद्यात्

कांस्यपात्रगतमाज्यमवेक्ष्यसदक्षिणंब्राह्मणायदत्वायावत्यः प्रधानाहुतयस्तावतोब्राह्मणान्भोजयेत् यावंतितदाहुतिशतानि
तावतोवायावंतितत्सहस्राणितावतोवा भुक्तवद्भ्योयथाशक्तिदक्षिणांदत्वाप्रार्थयेत् शांतिःपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंत्वि-
तितेचवदेयुः शांतिःपुष्टिस्तुष्टिश्चास्त्विति ततोऽच्युतानंतगोविंदेतिनामत्रयंजपेदिति पारिजाते ततोज्ञातिसंबंधिबांधवानां
भोजनवस्त्रादिदानेनतोषंसंपाद्येश्वरार्पणंकृत्वाभुंजीतेति परिशिष्टोक्तमार्गेणग्रहयज्ञनिरूपणम् अकार्येनतदेवेनदेवेशस्तेन
तुष्यतु इतिसंस्कारकौस्तुभेनवग्रहमखः एतदसंभवेउपनयनकालेच बृहस्पतेरानुकूल्याभावेतच्छांतिःकार्या उक्तेऽपि
वर्षेनबलीगुरुश्चेच्छांत्याप्रशस्तंव्रतबंधकर्मेतिवृद्धवसिष्ठोक्तेः तामाहशौनकः कन्यकोद्वाहकालेतुआनुकूल्यंनविद्यते ब्राह्म
णस्योपनयनेगुरोर्विधिरुदाहृतः स्रुवर्णेनगुरुंकृत्वापीतवस्त्रेणवेष्टयेत् ईशान्यांधवलंकुंभंधान्योपरिनिधायच दमनंमधुपु-
ष्पाणिपत्रपालाशसर्षपान् मांसीगुडुच्यपामार्गविडंगंशंखिनीवचा सहदेवीविष्णुक्रांतासर्वौषधिशतावरी कुंभेनिक्षिपेदि-
तिशेषः कृत्वाज्यभागपर्यंतंस्वशाखोक्तविधानतः ग्रहोक्तमंडलेऽभ्यर्च्यपीतपुष्पाक्षतादिभिः देवपूजोत्तरेकालेततःकुंभानुमंत्र
णं अश्वत्थसमिधश्चाज्यंपायसंसर्पिषायुतम् यवव्रीहितिलाःसाज्यामंत्रेणैवबृहस्पते अष्टोत्तरशतंसर्वंहोमशेषंसमापयें-
त् पुत्रदारसमेतस्यअभिषेकंसमाचरेत् कुंभाभिमंत्रणोक्तैश्चसमुद्रज्येष्ठमंत्रतः प्रतिमाकुंभवस्त्रंचआचार्यायनिवेदयेत्

ब्राह्मणान्भोजयेत्सम्यक्छुभदःस्यान्नसंशयः इतिबृहस्पतिशांतिः तथामदनरत्नेस्कांदेगुरुपूजोक्ता कन्याविवाहकालेतुगु-
रोःशुद्धिर्नविद्यते ब्राह्मणस्योपनयनेयस्यस्याद्दुःस्थितंततः दुःस्थितंदुःस्थानमष्टमादिआगतोगुरुरितिशेषः तदापूजागुरोःका
र्याविधिवद्भक्तिभावितैः मदंतीकामपुष्पाणिपत्रंपालाशसर्षपाः मदंतीयूथिका कामोदमनः गुडूचीचाप्यपामार्गंविडं
गंशंखिनीवचा सहदेवीविष्णुक्रांतासर्वौषध्यःशतावरी कुष्टंमांसीहरिद्रेद्वेसुराशैलेयचंदनम् वचाकचोरमुस्तंचसर्वौषध्यःप्रकी
र्तिताः तथैवाश्वत्थपत्रांगांश्चपंचगव्यंजलंतथा नूतनंसोदकुंभंचपीतवस्त्रसमन्वितम् पंचरत्नैःसमायुक्तमीशान्यांस्थाप्यचानलात्
अनलदेशात् याओषधीरितिमंत्रेणसर्वास्तस्मिन्विनिक्षिपेत् कुंभस्योपरिभागेतुस्थापयित्वाबृहस्पतिम् सुवर्णपात्रेसौवर्णींप्रतिमां
तुयुधिष्ठिर कारयेत्तुयथाशक्त्यावित्तशाठ्यविवर्जितः पीतवस्त्रयुगच्छन्नांपीतयज्ञोपवीतिनींपूजयेद्गंधपुष्पाद्यैस्ततोहोमंसमाच
रेत् समिधोऽश्वत्थवृक्षस्यहोम्याअष्टोत्तरंशतम् तिलव्रीहियवंमिश्रंहोतव्यंचयथाक्रमम् अनेनग्रहमखवद्दृष्टस्यसमिद्धोमानंत
रंभाविनश्चर्वाज्यहोमस्यानंतरमागंतुःअयंहोमःकार्यइतिज्ञाप्यते बृहस्पतेतिमंत्रेणऋषिच्छंदःसमन्वितम् ततोहोमावसानेतु
पूजयेच्चबृहस्पतिम् पीतगंधैस्तथापुष्पैर्धूपैर्दीपैश्चभक्तितः दध्योदनंचनैवेद्यंफलतांबूलसंयुतम् नमअंगिरसांनाथवाक्पतेथ
बृहस्पते क्रूरग्रहैःपीडितानाममृतायनमोनमः पूजयित्वासुराचार्यंपश्चादर्घ्यंनिवेदयेत् गंभीरदृढरूपांगदेवेज्यसुमतेप्रभो

नमस्तेवाक्पतेशांतगृहाणार्घ्यंनमोस्तुते अर्घ्यंदत्वासुरेशायजपंहोमंसमर्पयेत् भक्त्यायत्तेसुराचार्यहोमपूजादियत्कृतम् तत्त्वंगृ
हाणशांत्यर्थंबृहस्पतेनमोनमः मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः वाचस्पतिर्देवमंत्रीस्तु
भंकुर्यात्सदामम सर्वोपचारसंयुक्तांप्रतिमांतांयुधिष्ठिर प्रणम्यचगवायुक्तामाचार्यायनिवेदयेत् अथाचार्यस्तुनियतोवेदवेदांग
पारगः यजमानंसपत्नीकंशांतचित्तोजितेंद्रियः कुंभोदकंगृहीत्वाथमंत्रैरेतैःप्रसिंचयेत् इदमापोथमंत्रेणतामग्निमित्यृचातया
याओषधीरश्वावतीकूश्मांडैश्चाभिषेचयेत् पश्चात्संभोजयेद्विमान्यथाशक्तियुधिष्ठिर संक्रांतावपिकौंतेयतथास्वाभ्युदयेपुच
कुर्वन्बृहस्पतेःपूजामभीष्टफलमाप्नुयादिति संक्रांतौगुरोः इतिसंस्कारकौस्तुभेस्कांदोक्तागुरुपूजा अत्रचशौनकोक्तौस्कां
दोक्तौचशाखाभेदेद्वादशकपालैकादशकपालादिभेदस्येवयूथिकासदसत्त्वादिभयुक्तेषड्वैलक्षण्यस्यापिकर्मभेदकत्वासंभवादुभय
गतगुणोपसंहारेणकुंभाद्यमंत्रणादिसाधारणधर्माणांदीर्घचतुरस्रमंडलाद्यसाधारणधर्माणांविनियोगवशेनापेक्षितानांग्रहमखवा
त्स्वीकारेणतावद्भिरेवग्रहमेधीयवन्नैराकांक्ष्यसंभवेनावियुक्ततत्रत्यधर्मानादरेणप्रयोगंवदामः अस्यकुमारस्योपनयनकालेबृ-
हस्पत्यानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंबृहस्पतिशांतिंकरिष्येइतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ततःआ
चार्यःकर्षतदर्धादिपरिमितहेम्नायथाशक्तिनिर्मितप्रतिमायाअग्न्युत्तारणंकृत्वायदत्रसंस्थितंभूतमित्यादिदेशसंस्कारांतेहोमदेश

स्यैशानदेशेमही द्यौरितिस्पृष्ट्वाभुवि ओषधयइतिधान्यंप्रक्षिप्याकलशोष्वितिधवलकुंभंस्थाप्येमंमेगंगइतितीर्थोदकेनापूर्याश्वत्थेवो-
निषदनमितिअश्वत्थपल्लवान् गायत्र्यादिमंत्रैःपंचगव्यंदेवस्यत्वा मभिषिंचामीतिकुशोदकंनिक्षिप्ययुवासुवासाइतिपीतवस्त्रेणसं
वेष्ट्यसहिरत्नानीतिपंचरत्नानिप्रक्षिप्ययाओषधीरितिवक्ष्यमाणान्सर्वान्निक्षिपेत् यूथिकादमनसुधुसु ष्याणिपत्रंभाषायां पत्रजमि
तिप्रसिद्धम् पलाशंसर्षपान् जटामांसींगुडूचीं अपामार्गंविडंगंशंखिनींवचांसहदेवींविष्णुक्रांतांशतावरीं कुष्टंमांसींहरिद्रेद्वेमु
राशैलेयचंदनम् वचाकचोरमुस्तांचेति ततश्चंदनादिनाकुंभमभ्यर्च्यपूर्णादर्वीतियथाविभवंसौवर्णादिपूर्णपात्रंनिधायतत्राष्टद
लोत्तरदलेहरिताक्षतनिर्मितदीर्घचतुरस्रपीठेहैमींबृहस्पतिप्रतिमांस्थापयित्वास्थंडिलेऽग्निप्रतिष्ठापनादिअन्वाधानेचक्षुषीआज्ये-
नेत्यंतेबृहस्पतिमष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिस्तावतीभिराज्याहुतिभिस्तावतीभिःसर्पिर्मिश्रपायसाहुतिभिस्तावतीभिः-
साज्ययवव्रीहितिलाहुतिभिश्चशेषेणस्विष्टकृतमित्यादिस्वशाखोक्तविधिनाज्यभागांतंकृत्वाकुंभोपरिस्थापितप्रतिमायामावाहनादिं
षोडशोपचारैर्बृहस्पतिंपूजयेत् तत्रविशेषाः पीतवस्त्रयुग्मंपीतंयज्ञोपवीतंपीतंचंदनंपीताक्षतान् चंपकादिपीतपुष्पं बिल्वमज्जा
धूपं घृतदीपं दध्योदनंनैवेद्यं दक्षिणायांपुष्परागोमाणिक्यंयथाशक्तिहेमवा पूजांतेऽब्लिंगाभिर्वारुणीभिःपावमानीभिश्चग्रह
मखोक्ताभिःकुंभाभिमंत्रणम् ततोयजमानोयथान्वाधानंबृहस्पतयइदंनममेतित्यागंकुर्यात् अथाचार्योबृहस्पतिमंत्रेणप्रणवादि-

नाकृष्यादिस्मरणपूर्वकंदधिमध्वक्ता अष्टोत्तरशतमश्वत्थसमिधोजुहुयात्तावतीराज्याहुतीः सर्पिर्मिश्रलोकसिन्दूपायसाहुतीः साज्यय
वव्रीहितिलाहुतीश्च ततः स्विष्टकृदादिहोमशेषंपरिस्तरणविसर्जनाद्यर्चनांतंकुर्यात् ततोबृहस्पतेर्गंधादिभिः पूर्वोक्तैः फलतांबूलां-
तैः पूजनंकृत्वासयजमानोनमस्कुर्यात् ततस्ताम्रपात्रेशुद्धोदकंप्रक्षिप्यतत्रपीतानिगंधाक्षतपुष्पाणिफलंचप्रक्षिप्यार्घ्यंदद्यात् गं
भीरदृढरूपांगदेवेज्यसुमतेप्रभो नमस्तेवाक्पतेशांतगृहाणार्घ्यंबृहस्पतइति ततोयजमानोबृहस्पतयेकृतकर्मार्पणंकुर्यात् भक्त्या
यत्तेसुराचार्यहोमपूजादियत्कृतम् तत्त्वंगृहाणशांत्यर्थंबृहस्पतेनमोनमइति ततः प्रार्थयेत् जीवोबृहस्पतिः सूरिराचार्योगुरुरं
गिराः वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदाममेति ततोविसर्जनंकृत्वाचार्यंप्रणम्यसर्वोपचारसंयुक्तांगोयुक्तामिमांप्रतिमांतुभ्यमहंसंप्र
ददइतितादृशप्रतिमांदद्यादभिषेकोत्तरंवाप्रतिमादानंकुंभोदकेनाचार्यः पुत्रदारसमेतंयजमानमभिषिंचेत् आपोहिष्ठेतितिसृणा-
मांबरीषः सिंधुद्वीपआपोगायत्री तत्त्वायामीतितिसृणांशुनःशेपोवरुणास्त्रिष्टुप् स्वादिष्ठयेतितिसृणांमधुच्छंदाः पवमानसोमो
गायत्री समुद्रज्येष्ठाइतिमंत्राणांवसिष्ठआपस्त्रिष्टुप् इदमापइत्यस्यसिंधुद्वीपआपोनुष्टुप् तामग्निवर्णामित्यस्यहिरण्यगर्भो
दुर्गात्रिष्टुप् याओषधीरित्यस्याभिषगोषधयोनुष्टुप् अश्वावतीर्गोमतीरित्यस्यवसिष्ठउषसस्त्रिष्टुप् यद्देवादेवहेडनंयददीव्यमा
युष्टेविश्वतोदधदित्यापस्तंबशाखोक्तैरनुवाकैश्च तच्छंयोरावृणीमहइति ततोयथाशक्तिब्राह्मणान्भोजयेत् इतिसंस्कार

कौस्तुभे बृहस्पतिशांतिः अथोपनयनप्रयोगः उपनयनात्पूर्वेद्युरहतवस्त्रमजिनं यज्ञोपवीतं मेखलां दंडं कटिसूत्रं कौपीन-
मित्येतान्युक्तलक्षणानि संपाद्य भिक्षापात्रं जलपात्रं च संपाद्य स्वस्योपनेतृत्व योग्यतायै कृच्छ्रत्रयं संकल्प्य तिलसहस्रहोमगोदानाद्य-
न्यतरं भत्याम्नायेन तदाचरणपूर्वकं द्वादशसहस्रं गायत्रीजपं तद्योग्यतायै कृत्वोपनेयत्वयोग्यतायै बटुनापि कृच्छ्रत्रयं कारयित्वा यदि
जातकर्मादिसंस्कारा अतीतास्तदा जातकर्मादिसंस्काराणां कालातिपत्ति प्रायश्चित्तहोमं करिष्य इति संकल्पपूर्वकं पूर्वोत्तराज्यभा-
गांतं स्विष्टकृदादितंत्रयुता अतिपन्नसंस्कार संख्या भूर्भुवस्स्वःस्वाहेत्याज्याहुतीर्हुत्वा प्रमादादतिपत्तौ प्रत्येकं पादकृच्छ्रं चौलस्यार्द्धकृच्छ्रं
बुद्धिपूर्वकाकरणे तूक्तद्विगुणं कुमारेण कारयेत् चौलं कुलधर्मप्राप्ततृतीयवर्षादिनियतकालातिपत्तावेतत् सहोपनीत्येत्यस्य कुलध
र्मप्राप्तत्वे तु नैतत् पत्न्या सहोपविश्य देशकालौ संकीर्त्य अस्य कुमारस्य गर्भांबुपानजनितदोषनिबर्हणायुर्मेधाभिवृद्धि बीजगर्भस
मुद्भवैनोनिबर्हणद्वाराश्री परमेश्वरप्रीत्यर्थं अतिक्रांतं जातकर्म बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्री
परमेश्वरप्रीत्यर्थं नामकर्म आयुरभिवृद्धिद्वारा॰ र्थं सूर्यावलोकनं॰ आयुःश्रीवृद्धि बीजगर्भसमुद्भवैनोनिबर्हणार्थं निष्क्रम-
णं आयुरभिवृद्धिद्वाराश्री परमेश्वरप्रीत्यर्थं उपवेशनं मातृगर्भमलप्राशनशुद्धि अन्नाद्य ब्रह्मवर्चसतेज इंद्रियायुरभिवृद्धि



बीजगर्भ॰ प्रीत्यर्थं अन्नप्राशनं वा द्यक रिष्ये बीजगर्भसमुद्भवैनोनिबर्हण बलायुर्वर्चोभिवृद्धिद्वाराश्री परमेश्वरप्रीत्यर्थं चौलं

द्विजत्वसिद्ध्यावेदाध्ययनाधिकारार्थं उपनयनंचश्वः करिष्ये इतिसंकल्प्य तदंगत्वेन स्वस्तिपुण्याहवाचनं मातृकापूजनंनांदीश्रा
धंचकरिष्ये उपनयनांगत्वेननंदिन्यादिमंडपदेवतानांपूजनपूर्वकंतासांकुलदेवतादीनांच स्थापनंकरिष्ये तदादौनिर्विघ्नतासिद्ध्य
र्थंगणेशपूजनं करिष्येइतिसंकल्प्य तंत्रेणनांदीश्राद्धांतंकुर्यात् सर्वेषांसद्यः करणेसर्वसंकल्पांते अद्यकरिष्येइतिसंकल्पः ब
हूनांसंकल्पेकृत्स्यंतामिति चौलोपनयनयोः संकल्पेकृत्स्येतामिति उपनयनमात्रसंकल्पेकृत्स्यतामिति नांदीश्राद्धांतेमातृका-
अविसृज्ययथाचारंबद्धाकुशाखास्रुनंदिन्यैनमः नंदिनीमावाहयामि नलिन्यैनमः नलिनीमावा॰ मैत्रायैनमः मैत्रामावाह॰
उमायैन॰ उमामा॰ पशुवर्द्धिन्यै॰ पशुवर्द्धिनीमा॰ भगवत्यै॰ भगवतीमा॰ अविघ्नगणपतयेनमः अविघ्नगणपतिमा॰ सापिधा
नकलशयोः गृहावैप्रतिष्ठेत्यावाहितदेवताः प्रतिष्ठाप्यासनाद्याचमनांतसमर्पणेकृतेत्रिसूत्रवेष्टितकुंभचतुष्टयमध्यस्थाभिषे
कपात्रेताः शाखानिधाय पत्न्यातन्नीराजनंश्रियेजातइतिकारयित्वाकनिक्रददितितैलेनाभ्यज्यस्नुगंधिपिष्टेन स्नानिक्षिप्योष्णो
दकेनाभिषिच्यापोहिष्ठेतितृचेनकुंभचतुष्टयोदकेनाभिषिच्याचमनादिपुष्पांतोपचार समर्पणांते दधिक्राव्णइतिदध्याकांडात्कांडा
त्प्ररोहंतीतिदूर्वाभिश्चाभ्यर्च्यधूपादिपूजांसमाप्यमंत्रहीनमितिसंप्रार्थ्यमातृकासहितास्ताः शाखाः स्वयमादधन्तौकलशौपत्नी-
यंत्रादिवाद्यघोषेणकनिक्रददितिसूक्तेनचप्रतिष्ठापनदेशंगत्वासूपलिप्तेऽलंकृतेतस्मिन् देशेगृहावैप्रतिष्ठेतिकलशाभ्यांसहिताः

शारवाः प्रतिष्ठाप्य पंचोपचारैः संपूज्य स्थापितदेवताप्रीत्यर्थं यथाशक्ति ब्राह्मणान्सुवासिनीश्च भोजयिष्ये तेभ्यो यथाशक्ति वस्त्र
दक्षिणादानं च करिष्य इति संकल्पयेत् ततो नीराजिताभ्यां दंपतीभ्यां सुहृदो वस्त्राणि दद्युः युवं वस्त्राणि पीवसा॰ अभि वस्त्रा सुव॰
भद्रा वस्त्रा समन्या॰ वसिष्वा हि मियेध्य॰ सतु वस्त्राण्यध पेशनानि॰ वेदिषदे प्रियधामाय॰ प्रसेनानीः शूरो अग्रे रथानां॰ उभा उ नू-
नं तदिदर्थ॰ इमान्मंत्रान्पठेयुः ततोऽतिक्रांतजातकर्मादि संस्कारानुष्ठानानां केचिन्मंडपनिर्माणपूर्वकं देवतास्थापनं कुर्वंति तदि
त्थम् आग्नेय्यां आम्रेण जंबूवा वा स्तंभः नैर्ऋत्यां खादिरेण धात्र्या वा वायव्यामुदुंबरेण शम्या वा ऐशान्यां बदर्या श्मंतकेन वा
यथाकुलधर्मं शाम्यकादिजातीय यज्ञियवृक्षस्य षट्शारवा युग्मानि सूत्रवेष्टितानि कार्याणि षष्ठं छुरिकागर्भं देवकमित्युच्यते आ
ग्नेयस्तंभः शारवा दधिक्राव्ण इति या ओषधीरिति च मंत्राभ्यां चतुर्णां ब्राह्मणानां हस्ते दत्वाग्नेयस्तंभे गंगायै नमः गंगामावाहयामी
त्यावाहनादि षोडशोपचारैः संपूज्य स्फुट्दातिस्थिरा भवेति प्रार्थयेत् एवं नैर्ऋत्ये गौरीं वायव्ये धरणीं ऐशान्ये लक्ष्मीं तत आग्ने
यस्तंभे नंदिनीमावाहयामि गृह्णा वै प्रतिष्ठा सूक्तमिति शारवायुग्मं प्रतिष्ठापयेत् एवं नैर्ऋत्ये नलिनीं वायव्ये मैत्रां ऐशान्ये उमां
मंडपाच्छादनोपरि देशमध्ये पर्जुवार्ह्निन्यै नम इति यथाचारं मुसलमंडकादियुक्तं शारवायुग्मं रोपयेत् सर्वत्र गृहा वै प्रतिष्ठेत्यस्यावृत्तिः
ततस्तां मंडपदेवताः षोडशोपचारैः संपूज्य मंडपमध्ये आग्नेयादिक्रमेण कलशस्थापनविधिनोदकपूर्णं साम्रपल्लवादियुतं कुंभं च-

तुष्टयंस्थापयित्वासूत्रयेत्तन्मध्येत्नुपहतपीठेदंपतीदवकस्थापनमित्थंकुरुतः वंशपात्रस्थंपूर्वोक्तदेवकेभगवत्या आवाहनाद्याचम
नांतोपचारार्पणे कृतेचततस्त्रः सुवासिन्योनीराजनाभ्यंगोद्वर्तनोष्णोदकशीतोदकस्नानानिकारयेयुः ततः कनिक्रददितिसूक्तेनदे
वकसहितंवंशपात्रंउक्तपीठेस्थाप्यगृहावेप्रतिष्ठेतिप्रतिष्ठाप्यवस्त्राद्युपचारैःपूजयेत् भगवत्यैनमइतिमंत्रेणभगवतीपूजनेनसहावि
घ्नगणपतिपूजनंचतत्रैवकार्यं ततोब्राह्मणभोजनादिसंकल्पःपूर्ववत्कार्यइति बहुहस्तेनचतुर्हस्ताचतुरस्राहस्तोच्छ्रिताश्ल-
क्ष्णासोपानांकिताप्रागुदक्प्रवणाकदलीस्तंभतोरणपुष्पमालाद्यलंकृतावेदिःकार्येत्यपिकेचित् इतिपूर्वदिनकृत्यम् परदिने-
ऽतिक्रांतचौलंकृत्वाप्रागेवजातचौलंत्वभ्यंगस्नानेनस्नापयित्वामात्रासहभोजयेत् ततोब्रह्मचारिभ्योऽन्नदानमाचारात्कार्यं
ततोदेशकालौसंकीर्त्याऽस्यकुमारस्यद्विजत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगायत्र्युपदेशंकर्तुंतत्प्राच्यांगभूतंवापनादिकष्ये इतिसंक
ल्प्यवापनंकारयेत् मुख्यशिखाधिकशिखानांचौलेधृतानामत्रवापनम् ततःस्नापितमहतांबरंबद्धशिखंमंगलतिलकंबटुंकुर्युः
मौहूर्तिकंसंपूज्यतदुक्तशुभमुहूर्तेआचार्योवेद्यांप्राङ्मुखउपविष्टस्तन्मुखमीक्षेत कृतनमस्कारंतंस्वांकेकुर्वीत ततोब्राह्मणायेयज्ञं
तिमंत्रैर्यथाचारमुभयोःशिरस्यक्षतान्क्षिपेयुः नदस्तगृहावेप्रतिष्ठेतिच ततःकुमारंदक्षिणउपवेश्याचम्यप्राणानायम्यदेशका-
लौसंकीर्त्योपनयनहोमंकर्तुंस्थंडिलादिकरिष्यइतिसंकल्प्यस्थंडिलादिकुर्यात् आघारावाज्येनेत्यंतेत्रिरग्निंपवमानंप्रजापतिंचा-

ज्येनशेषेणस्विष्टकृमित्यादि कुमारेणान्वारब्धःसमिद्धोमंकुर्यात् ततोबर्हिःसन्नहना घाज्योत्पवनांतंकुर्यात् ततःस्वदक्षिण
तःकुमारंप्राङ्मुखमवस्थाप्य स्वयंचोत्थायतमुत्थाप्येत्यर्थः अयोत्थायगुरोर्वन्हेरित्यादिशौनकोक्तेः त्रिवृत्कार्पाससूत्रंकटावाबध्य
कौपीनंपरिधाप्याहतंशुक्लंवासःसमंत्रंपरिधापयेत् युवंवस्त्राणीत्यस्योचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् वासोधारणेविनियो-
गः वाससैवप्रावरणपक्षेमंत्रावृत्तिः ततउत्तरतोनीतेनकुमारेणद्विवारमुदकप्राशनंकारयित्वोपवीतधारणादि अजिनेनप्रावरण
पक्षेतदादिवाकुर्यात् मित्रस्यचक्षुरित्यस्यवामदेवोजिनंत्रिष्टुप् अजिनधारणेवि॰ ॐमित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थ
विरंसमिद्धम् अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहम् उक्तप्रकारमजिनंधारयित्वागायत्र्यादशकृत्वोभिमंत्रिताद्भिरुपवी
तंप्रोक्ष्यतद्धारयेत् यज्ञोपवीतमितिमंत्रस्यपरब्रह्मऋषिःपरमात्मादेवता त्रिष्टुप्छंदःश्रौतस्मार्तकर्माधिकारसिद्ध्यर्थेउपवीतधारणे
विनियोगः अध्ययनकाले मंत्राक्षराणांसंधिवशेनयेविकारास्तानत्यज न्मंत्रंवाचयित्वातद्दक्षिणबाहुमुद्धार्योपवीतंधारयित्वाकु
मारमात्मनोग्नेश्चमध्येनयज्ञपात्रोत्तरभागेननीत्वाजयंतोक्तेनविधिनापारिजातोक्तेनवाचमय्यप्रणीतापूर्वभागेनीत्वातत्सम्मिमभागा
त्मकतीर्थेनप्रपन्नंपूर्ववदानीतंदक्षिणतउपवेश्यबर्हिष्याज्यमासाद्यस्रुवसंमार्गाद्यर्चनंकृत्वाब्रह्मचार्यन्वारब्धइध्माधानाद्याज्यभा-
गवर्ज्यंचौलवदाज्याहुतिचतुष्टयंहुत्वाचार्यउत्तरतोग्नेःप्राङ्मुखस्तिष्ठेत् कुमारस्तयोर्मध्येनगत्वाचार्याभिमुखस्तिष्ठेत् ततआ-

चार्येणानुच्छिष्टजलेनशिष्यांजलिमापूर्यस्वांजलिपूरणमन्येनकारयित्वा तत्सवितुरित्यस्याग्नेयःश्यावाश्वःसवितानुष्टुप् अवसारणे
विनियोगः ओंतत्सवितुर्वृ०मंत्रांतेस्वांजलिस्थोदकेशिष्यांजल्युदके आसिच्यस्वदक्षिणपाणिधृतेनतदंजलिनातज्जलमवसारयेत्
ततःस्वदक्षिणपाणिनाकुमारस्यसांगुष्ठदक्षिणपाणिग्रहणंकुर्यात् देवस्यत्वासवितुः० असुकशर्मन्निति अभिवादनिकंनामशर्मांतं
संबुद्ध्या निर्दिशेत् पुनर्द्वितीयःपूर्ववत्पूरणादि सवितातेहस्तमग्रभीदितिमंत्रांते पूर्ववन्नामग्रहणपूर्वकंहस्तग्रहणंद्वितीयपर्याये तृती
येतुअग्निराचार्यस्तवेत्यंते ततोयत्रदेशेब्रह्मचारिणआदित्येक्षणंभवतिब्रह्मचारिणासहतंदेशंगत्वादेवसवितरेषतेब्रह्मचारीतंगो
पायसमामृतेत्युक्त्वाचार्यब्रह्मचारीयथादित्यमीक्षेततथाकुर्यात् ततोऽग्नेरुत्तरतोऽन्योन्याभिमुखौतिष्ठतः आचार्यःप्रजापतयेरक्षणार्थं
मनसाब्रह्मचारिणंसमर्प्य कस्यब्रह्मचार्यसिप्राणस्यब्रह्मचार्यसिकस्त्वाकमुपनयतेकायत्वापरिददामीतिजपेत् युवासुवासाइत्य-
स्यकौशिकोविश्वामित्रोयूपस्त्रिष्टुप् पूर्वार्द्धर्चस्यप्रदक्षिणावर्त्तनेउत्तरार्द्धर्चस्यपाणिभ्यांबद्धुहृदयालंभनेविनियोगः युवासुवासाइ
त्यर्द्धर्चमुक्त्वाचार्यप्रदक्षिणमावर्त्यप्राङ्मुखमवस्थाप्यकुमारांसयोरुपरिस्वपाणीगमयित्वा तंधीरासइत्यर्द्धर्चांतेपाणिभ्यांयुगपत्तदीय
हृदयंस्पृशेत् ततःपूर्वेणैवपथासमानीयस्वदक्षिणउपविशेत् अथब्रह्मचारीअग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती समि
दाधानेविनियोगः अग्नयेसमिधमाहार्षंबृहतेजातवेदसे तयात्वमग्नेवर्द्धस्वसमिधाब्रह्मणावयंस्वाहेतिमंत्रमेकश्रुतेनपठित्वा

समिधमाधाय॥ अग्नय इदं न ममेति त्यागं॥ ततो दक्षिणं पाणिं प्रक्षाल्य॥ अग्नौ प्रताप्य ओं तनूनपाग्ने सप्रथस इति संहृतौ मुखमवाङ्गिमृजेत् एवं पाणिप्रक्षालनादि मुखमार्जनांतं पुनर्द्विः कुर्यात् ततः पाणिं प्रक्षाल्य तिष्ठन् ऊर्ध्वदिक्कृतप्रणति मुद्रायुतकरसंपुट उपतिष्ठते मयि मेधामिति षण्णां हिरण्यगर्भः त्रयाणामग्नींद्रसूर्याः त्रयाणां सम्मिग्रां गायत्री उपस्थाने वि॰ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयींद्र इंद्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासं मानस्तोक इति मंत्रस्य कुत्सो रुद्रो जगती भस्मधारणे विनियोगः मानस्तोके तनये॰ त्र्यायुषं जमदग्नेरिति ललाटे कश्यपस्य त्र्यायुषं कंठे अगस्त्यस्य त्र्यायुषं नाभौ यद्देवानां त्र्यायुषं दक्षिणांसे तन्मे अस्तु त्र्यायुषं वामांसे शतायुषं शिरसि कृतांजलिरुपतिष्ठते ओं च मे स्वरश्च मे॰ तस्मै ते नमः अग्नये नमः स्वस्तिं श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन देहि मे हव्यवाहनों नमः एतत्प्रवरान्वितैतद्गोत्रोत्पन्न एतच्छर्मा॥ हं भो अग्ने अभिवादये इत्यग्निमभिवाद्योत्तरत उपविष्टस्याचार्यस्याभिमुख उत्तरत उपविशेत् अथ यथाचारमाचार्येण गायत्रीपूजने कृते दक्षिणं जानुं भूतले निपात्य दक्षिणसव्यहस्ताभ्यां सव्यदक्षिणश्रोत्रे संस्पृश्याचार्यस्य दक्षिणसव्यपादौ व्यस्ताभ्यां स्वीयसव्यदक्षिणहस्ताभ्यां जानुप्रभृति पादांगुष्ठाग्रपर्यंतं स्पृष्ट्वा एतत्प्रवरान्वितेत्यादि अहं भो अभिवादय इत्यंतं पूर्ववदुक्त्वा आचार्यपादयोः शिरोनिधानेन प्रणमेत्

अकारांतं कृत्तिकरोहिणादिनाम्ना ऽभिवादने आचार्य आयुष्मान् भव सौम्य कृत्तिका ३ आयुष्मान् भव सौम्य रोहिणा ३ इत्याशिषं प्रयुंजीत इकारांतं स्वातिनाम्नाभिवादने आयुष्मान् भव सौम्य स्वाता ३ इ इति उकारांतपुनर्वसुनाम्नाभिवादने आयुष्मान् भव सौम्य पुनर्वसा ३ उ इति एवमन्यत्रोत्यम् ततः सविनयं अधीहि भो ः सावित्रीं भो अनुब्रूहीत्याचार्यं संप्रार्थ्यो त्तानीकृतवामपाण्यंगुष्ठांगुलीर्न्यङ्मुखीकृत्य दक्षिण पाण्यंगुष्ठांगुलीभिर्द्वंद्वसंयोगिनीः कृत्वा तादृशां ब्रह्मांजलिं दक्षिणांके निःक्षिप्यासीत आचार्यस्तमंजलिं तत्परिधानीय वाससाच्छाद्य तादृशं स्वपाणिभ्यां प्रदाय सप्रणवव्याहृतिकां सावित्रीमुपदिशेत् तद्यथा प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्री छंदः व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती गायत्र्या विश्वामित्रः सविता गायत्री उपनयनप्रधानोपदेशे विनि० सप्रणवव्याहृतिकां सावित्रीं स्वयं पच्छ उक्त्वा तथैव कुमारं वाचयीत अशक्ते यथाशक्ति ततस्तादृशीमर्द्धर्चश उक्त्वा वाचयीत ततस्तादृशीमनवानमुक्त्वा वाचयीत यथाशक्ति सर्वत्र वाचयन् संधिकृतं वर्णविकारं नान्यथा कुर्वीत मम व्रत इति मंत्रस्य प्रजापतिर्बृहस्पतिस्त्रिष्टुप् अस्य हृदयदेशे ऊर्ध्वांगुलिपाण्युपदधाने विनि० ओं मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यं इति ब्रह्मचारिणो हृदये स्वदक्षिणपाणिमूर्ध्वांगुलिं न्यङ्मुखमुपधाय मेखलाबंधनं कुर्यात् इयं दुरुक्तादिति द्वयोर्वामदेवो मेखला त्रिष्टुप् मेखलाबंधने विनि० इयं दुरुक्तात्परिबाधमाना छर्मवरूथं पुनती न आ

गात् प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः सानःस
मंतमनुपरीहिभद्रयाभर्त्तारस्तेमेखलेमारिषामेति परेहीत्यपपाठः आनुपूर्व्येणपरिगच्छेतिपारिजात व्याख्यानासंगतेः कटि
देशेमेखलांत्रिरावृत्त्यनाभिप्रदेशेग्रंथित्रयंकुर्यात् तदाब्रह्मचारीसांगरहस्यवेदत्रयेणसंवृतोहमितिमन्येत अथास्मैदंडंदद्यात् स्व
स्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् दंडदानेविनि० स्वस्तिनोमिमीता० अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयम् दंडःकरे
स्थितोयस्मात्तस्माद्रक्षयतोभयमिति मंत्रांतेब्रह्मचारीतंगृण्हीयात् अथाचार्योब्रह्मचारिणमाह ब्रह्मचार्यसि बटुरोमितिस्वी
कुर्यात् अपोशान मूत्रोत्सर्गादौनिमित्तेशौचांतेविधिनाआचनंकुर्विंतियावत् कर्मकुरु संध्योपासनाग्निकार्यादिसायंप्रातःकुरु
दिवामास्वाप्सीः दिवानिद्रांमाकुरु आचार्याधीनोभव तदाज्ञोल्लंघनंमाकुरु वेदमधीष्व द्वादशवर्षाद्यन्यतरपक्षाश्रयणेनवेदाध्य
यनंकुर्विंतितंप्रत्युपदेशमर्थंबोधयेत् परश्चस्वीकुर्यात् ततःस्विष्टकृदादिहोमशेषंसमाप्यहुतेब्राह्मणान्भोजयिष्यइतिश
तंशतंवायथाशक्तिवासंकल्प्यनानानामगोत्रेभ्योब्राह्मणेभ्यःभूयसींदातुमुत्सृज्यइतिचसंकल्प्यब्राह्मणाशिषोगृण्हीयात् ततो
ब्रह्मचारीनूतनभिक्षापात्रेमातरमनुप्रवचनीयकर्मार्थंतंडुलान्याचेतभिक्षांभवतीददात्विति अनुप्रवचनीयंभवतीददात्विति वा
मातुरभावेमातुःस्वसारंस्वभगिनींज्येष्ठभ्रातृपत्नींवाप्रत्याख्यायिनीमित्थमेवंयाचयेत् स्वपितरंवाभिक्षांभवान्ददात्विति अनुप्र-

वचनीयमितिवा तद्वैक्ष माचार्यायनिवेद्यमध्यान्हसंध्यामुपास्य गुरुसन्निधावचपलस्तिष्ठन् अहःशेषंनयेत् अनुप्रवचनीयारंभात्पू-
र्वंगर्जितवृष्ट्यादिसंभावनायांदिवैवचरुश्रपणांतंकृत्वाऽस्तमितेहोमंकुर्यात् नसंध्यागर्जितेकालेनवृष्ट्युत्पातदूषिते ब्रह्मौदनंपचेदग्नौ
पक्वंचेन्ननिवर्त्ततेइतिसंग्रहोक्तेः पाकाभावेगर्जितादिनिमित्तेतुशांतिंकृत्वापाकःकार्यः यथोक्तंविधानमालायां ब्रह्मौदनविधेःपूर्वंप्र
दोषेगर्जितंभवेत् तदाविघ्नकरंज्ञेयंबटोरध्ययनस्यतत् १ तस्यशांतिविधानंतुवक्ष्येशास्त्रानुसारतः स्वस्तिवाचनपूर्वंतुहवनंका
रयेद्बुधः २प्रधानंपायसंतत्रसाज्यंसाष्टशतंपतिः सूक्तंबृहस्पतेर्विद्वान्पठेत्प्रज्ञाविवृद्धये ३ गायत्रीयजनेमंत्रःप्रायश्चित्तंतुस-
र्पिषा धेनुंसवत्सकांदद्यादाचार्यायपयस्विनीम् ४ शीलान्होमविधेःपश्चाद्ब्राह्मणान्भोजयेत्ततः शतमष्टोत्तरंधीमान् ततोब्रह्मौ
दनंपचेदिति अथप्रयोगः ब्रह्मौदनपाकात्पूर्वंगर्जितेनसूचितस्यब्रह्मचारीकर्तृकाध्ययनविघ्नस्यनिरसनद्वाराश्रीपरमेश्वरप्री
त्यर्थंशांतिंकरिष्येइतिसंकल्प्यगणेशपूजनस्वस्तिवाचनेकृत्वाचार्यवरणंकार्यं आचार्यःयदत्रेतिसर्षपविकिरणादिभूसंस्कारंकृ-
त्वास्थंडिलेऽग्निंप्रतिष्ठाप्यान्वाधानंकुर्यात् चक्षुषीआज्येनेत्यंते अत्रप्रधानं सवितारंअष्टोत्तरशतसंख्याभिःसाज्यपायसाहुतिभिः
शेषेणेत्यादिमरुतआज्येनेत्यंते सवितारमाज्येनेतिप्रणीताप्रणयनांते आज्यनिर्वापादि आज्येनसहगृहसिद्धपायसस्यपर्यग्निकरणं
संमार्गांते पायसमग्नावधिश्रित्याभिघार्योदगुद्वास्य दक्षिणतआसाद्याग्न्यर्चनाद्याज्यभागांते ष्टोत्तरशतसंख्याहुतिपर्याप्तंसाज्यपाय-

संसवित्रेनममेतित्यक्तस्याचार्यस्तावतीराहुतीर्हस्तेनगायत्र्याजुहुयात् ततोबृहस्पतिसूक्तंजपेत् ततःस्विष्टकृदादियद्वोदेवाइत्याहु-
त्यंतेगायत्र्याज्याहुतीः कर्मशेषंसमाप्याचार्यायसवत्सांपयस्विनींधेनुंसंप्रददे इतिसंकल्प्य अष्टोत्तरशतसंख्यान्सुशीलान्ब्राह्मणा
न्भोजयिष्येइतिसंकल्पंकुर्यात् यथाशक्तिवा ततईश्वरार्पणंकुर्यादिति ब्रह्मौदनपाकात्पूर्वंगर्जितनिमित्तकशांतिः मेधाजननात्पूर्वका
लीनाग्निकार्यंयावदुपनयनाग्निनाशेउपनयनाहुतिभिःकटिसूत्रादिधारणादिमाणवकसंस्कारावधारणाग्निकार्यं गायत्र्युपदेशंवर्जं
पूर्वोत्तरतंत्रसहिताभिरग्निमुत्पाद्यतत्रानुप्रवचनीयादिपूर्वभाव्यग्निकार्यपूर्वकमनुप्रवचनीयादिकार्यं अष्टवर्षंब्राह्मणमुपनयीतेत्यत्रद्वि
तीयावगतस्यसंस्कारस्यहोमात्मकस्यसिद्धिरित्याकांक्षायां आज्यसमिदाहुतिसंस्कृताग्नितेजसामासमनज्मीतिसमंजनद्वारेणेतिसा
मर्थ्यादवगमात् गायत्र्युपदेशपूर्वभाविनःसमंजनस्यतद्योग्यतामि वानुप्रवचनीयामेधाजननाद्गायत्र्युपदेशात्पूर्वंसमंजनस्यतत्तद्योग्यता
यामुपयोगस्यौचित्यापातत्वात् मेधाजननांतानांत्रयाणामपिवेदाध्ययनोपयोगित्वेनतद्द्वारामीमांसकप्रसिद्धाध्ययनांगत्वोपपत्तेः
अनयैवरीत्यामेधाजननोत्तरमग्निकार्याणामपिसमंजनकरणकाध्ययनयोग्यताद्वारैवनियुक्ताध्ययनांगत्वोपपत्तेः ज्योतिष्टोमभाव
नारंभेसमुत्पन्नयूपस्यतद्भावनांतर्गतपशुत्रयसाधारण्यवच्चोपनयनभावनारंभेसमुत्पन्नाग्नेस्तद्भावनांतर्गतयोग्यतात्रयसाधारण्य-
मभिप्रेत्ययुक्तंमेधाजननपर्यंतमुपनयनाग्निधारणोक्तिसंभवात् एवंच शेषिणांमेधाजननांतानांशेषानुष्ठानसमर्थत्वात्प्रभवत्युपनय

नाहुतिभिरग्न्युत्पत्तिः नचसंस्कृतमाणवकस्य संस्कारैः प्रयोजनमितिपुनःसंधाने पाणिग्रहणादीनामिवात्रापिकटिसूत्रधारणा-
दीनांनिवृत्तिः नष्टस्योपनयनाग्नेःपुनरुत्पत्तिंकरिष्यइतिसंकल्प्यः नष्टस्योपनयनाग्न्युत्पत्तिहोमेविनियोगइतिविशेषः अथब्र-
ह्मचारीसायंसंध्यामुपास्यसायमग्निकार्यंचोपनयनाग्नौकृत्वा स्वासीनःप्राणानायम्यदेशकालौसंकीर्त्य उपनयनांगमनुप्रवचनीय
होमंकरिष्येइतिसंकल्प्यस्थंडिलांतरेहोमचिकीर्षयासुपलेपाद्युपनयनाग्निप्रतिष्ठापनांतंकृत्वा अन्यथात्वग्निध्यात्वाआ
घारावाज्येनेत्यंते सदसस्पतिंसवितारमृषीन् प्रधानदेवताश्चरुणाशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिद्धूयाधाना
दिप्रणयनांतंकृत्वाभिक्षातंडुलांस्तूष्णींदेवतात्रयमुद्दिश्यचतुरश्चतुरोमुष्टीन् निरूप्यब्राह्मणभोजनपर्याप्तमन्वोप्यतूष्णींप्रोक्ष्याव
हत्यत्रिःफलीकृत्यप्रक्षाल्यश्रपयित्वाशृतःस्थालीपाकइत्याचार्यायनिवेदयेत् शृतोब्रह्मौदनःशृतोनुप्रवचनीयइतिचेतिजयंतः
बटोरेवंकरणाशक्तौश्रपणांतमन्येनकारयेत् अथाचार्यआज्यसंस्काराद्याघारांतंकृत्वाऽवदानधर्मेणचरुमवदायजुहुयात् सद
सस्पतिमित्यस्यकाण्वोमेधातिथिःसदसस्पतिर्गायत्री अनुप्रवचनीयचरुहोमेविनियोगः सदसस्पतिम० सिषंस्वाहा बटुःस
दसस्पतयइदं० तत्सवितुर्विश्वामित्रःसविता गायत्री अनुप्रवचनीयचरुहोमे० तत्स० स्वाहा बटुःसवित्रइदं० ऋषिभ्यःस्वा०
बटुःऋषिभ्यइदं० ततःस्विष्टकृदादिहोमशेषंसमाप्यचरुशेषेणत्र्यवरान्ब्राह्मणान्भोजयित्वादक्षिणांदत्वास्यवेदसमाप्तिर

स्त्विति भवंतोब्रुवंत्विति प्रार्थयेत् तेचवेदसमाप्तिरस्त्विति ब्रूयुः ईश्वरार्पणंकृत्वासाचार्योभुंजीतेत्यनुप्रवचनीयप्रयोगः अत्रप्र
तंकारिकायां क्षीरादिवर्जमश्नीयाद्ब्रह्मचारी दिनत्रयम् शयीताधश्चतुर्थेन्हिमेधाजननमाचरेत् यद्वाद्वादशरात्रंस्यादब्दव्रतमथा
पिवा तदातदंतएव स्यान्मेधाजननसंज्ञकमिति मेधाजननविधिःप्रोक्तआश्वलायनस्मृतौ कुर्यात्त्रिमेखलांवेदिंसर्वतोद्वादशांगुलां
शुचौप्रागुत्तरेभागेतस्यांमेधांसमर्चयेत् पलाशशाखांतन्मध्येपत्रांकुरसमन्वितांम् आर्द्रांवाथकुशस्तंबंसमूलंस्थापयेद्गुरुः मेधा
मावाह्यमतिमान्मेधायैनमइत्यथ गंधपुष्पाक्षतैःसम्यक्धूपदीपादिभिःपुरा इष्ट्वानिवेदयेदेनांसक्तुमिश्रंसयावकम् समोद
कंनिवेद्यान्नंपुनश्चाभ्यर्च्यपूर्ववत् प्रणम्यतस्यैमेधायैव्रतिभिःसारयेज्जलम् उच्चरन्स्कंभवोमंत्रंजलंगृह्यप्रदक्षिणं संस्नाप्य
तांनमस्कृत्यतथाकुर्यात्पुनःपुनः एवंत्रिवारमावर्त्यदंडाजिनकमंडलून् वेद्यांनिःक्षिप्यचस्नात्वावाससीचविनिःक्षिपेत्
मेखलांचोपवीतंच धृत्वान्येतेविनिःक्षिपेत् वाससीतेस्वगुरवेमेधाजननकर्मणि दद्यात्तावत्प्रभृत्येवकौपीनेनप्रवर्त्तते पुण्याह
वाचनंकृत्वाब्राह्मणांश्चापिभोजयेत् त्वामावहतिसामेधामेधाजननकर्मणः तत्कर्तव्यंप्रयत्नेनव्रतस्यचसमाप्तयइति पारि-
जातेभगवान् गृहान्प्रतीयाद्गुर्वाद्यैःसमस्तैर्बंधुभिःसह पथिस्वस्त्ययनान्मंत्रान्पठेयुर्ब्राह्मणाःसह ततःसन्मंगलैर्दीपैःपूर्ण
कुंभादिभिर्युतः प्रापयेद्गृहमाचार्यःपुण्याहंवाचयेत्ततइति अथप्रयोगः व्रतसमाप्तिपरदिनेस्वगृहान्नैर्ऋतदक्षिणाग्ने-

यद्दिगन्यदिक्स्थमशारवंतदभावेसशारवंवापलाशंतदभावेकुशस्तंबंवायत्रक्वापिनद्युसन्नंवक्ष्यमाणरीत्यापूजयेत् तदभावेस्वगृ
हस्योपनयनवेद्यामैशान्नदिशिसर्वतोद्वादशांगुलांत्रिमेरवलांवेदिंकृत्वातस्यांसपत्रांकुरामार्द्रांसमूलांपलाशशारवांकुशस्तंबंवाप्रति
ष्ठाप्यब्रह्मचार्यन्वारब्धस्तिथ्यादिसंकीर्त्य अस्योपनयनव्रतसमाप्तिवेदधारणसामर्थ्यलक्षणमेधासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंमे
धारव्यसावित्रीपूजनमहंकरिष्येइतिसंकल्प्य तत्रमेधायैनम इतिमंत्रेणावाहनप्रभृत्युपचारसमर्पणंकुर्यात् नैवेद्यसमयेया-
वकसक्तुमोदकसहितमोदनमर्पयेत् एतत्पूजांतेपुनःपंचोपचारैःपूर्वोक्तनैवेद्यसहितैःसंपूज्यब्रह्मचारिणाप्रणामंकारयित्वा-
प्रादक्षिण्येनत्रिःशुद्धोदकेनपरिषिंचंतंवाचयति सुश्रव ःसुश्रवाअसियथात्वंसुश्रव ःसुश्रवाअस्येवंमांसुश्रवःसौश्रवसंकुरु
यथात्वंदेवानांयज्ञस्यनिधिपोस्येवमहंमनुष्याणांवेदस्यनिधिपोभूयासमितिप्रतिप्रदक्षिणंमंत्रावृत्तिः अंतेप्रणामावृत्तिश्च
ततोदंडाजिनकमंडलून्मेधासमीपेवेद्यांनिःक्षिप्यस्नात्वामंत्रस्नानंकृत्वावावाससीतत्रैवनिःक्षिप्यनूतनान्वासोजिनोपवीत
मेरवलादंडान्क्रमेणोक्तसविधिमंत्रैर्धृत्वामेरवलोपवीतेजीर्णेतत्रैवनिःक्षिप्य निक्षिप्तवाससीगुरवेदत्वापुण्याहंवाचयेत् अस्य
मेधाजननकर्मणःपुण्याहंभवंतोब्रुवंत्विति यद्दिगृहाद्बहिर्मेधाजननंकृतंतदास्वस्तिनइंद्रोवृद्धश्रवाइत्यादिस्वस्त्ययनमंत्रान्य
ठद्भिर्बांधवैर्ब्राह्मणैःसहमंगलदीपपूर्णकुंभभेर्यादिशब्दैरेनंगुरुर्गृहंप्रापयित्वापुण्याहंवाचयेदिति ततोमेधासूक्तपाठमान्वा

रात्केचिदिच्छंति ओंमेधामत्द्यमंगिरसोमेधांसप्तऋषयोददुः मेधामिंद्रश्चाग्निश्चमेधांधातादधातुते॰ स्वधयाप्रयोगइतिमे
धाजननम् अथमंडपदेवतोद्वासनम् स्थापितदेवताःपंचोपचारैरभ्यर्च्यप्रदेशांतरमानीयपत्न्याब्रह्मचारिणासहप्राङ्मु
खउपविश्यदेशकालौसंकीर्त्यउपनयनार्थंस्थापितदेवतानांषोडशोपचारैःपूजनंविसर्जनंतदंगत्वेनपुण्याहवाचनंचकरिष्ये
इतिसंकल्प्यगणेशमभ्यर्च्यषोडशोपचारैःदेवताःपूजयेत् तत्राभिषेककालेनीराजनंकार्निकदर्दादितितैलाभ्यंगस्रुगंधिद्रव्यार्प
णोष्णोदकस्नानादिपूर्ववत् ततउत्तिष्ठब्रह्मणस्पतेअभ्यारमितद्वयइतिविसर्जनम् ततःपुण्याहवाचनम् तत्रास्यमंडपदे
वतोद्वासनकर्मणःपुण्याहंभवंतइतिवाक्यप्रयोगः समुद्रज्येष्ठाइत्यभिषेकांतेपुरोहितोन्योवामान्यउन्मुक्तसूत्राःशारवाः
वंशपात्रेनिधायतदुपरिक्षिप्ताभिषेकंजलंसपत्नीकसापत्ययजमानशिरसिकिंचित्किंचित्स्नावयेत् प्रतिचेतिचेत्येतद्वैसर्वं
स्वस्त्ययनं॰ स्वस्तिपुनरागच्छतीति ततःकर्तोषट्सुषट्सुमासेष्वस्मद्गोत्रेशोभनानिभवंत्विति प्रार्थयेत् तेपितथास्त्वि
तिब्रूयुः ततउन्मुक्तसूत्रंक्षीराभ्यक्तंकृत्वाक्षतपूगीफलयुक्तंतद्धस्ते आदायपतिर्भार्यामाहत्त्वंगृहाणेति सावदेत्किंपतइ
ति पतिःप्रत्याहशतैःसहस्रैरिति एवंत्रिः तत्सूत्रंवस्त्रादिधनपेटिकायांस्थापनीयं ततस्ताःशारवास्तदभिषेकजलंगृ
होपरिशुचिदेशेनिःक्षिप्यांगणवितानस्यैशानकोणेविमोक्षंकृत्वायथाशक्तिब्राह्मणभोजनंसंकल्प्यभूयसींदक्षिणांसंकल्प

पूर्वकं ब्राह्मणेभ्यो दत्वा परमेश्वरार्पणं कुर्यादिति अत्र कालविधिमाहुर्वृद्धाः समेंच दिवसे कुर्याद्देवकोत्थापनं बुधः षष्ठं च विष
मने ष्टं सुत्का पंचमसप्तमाविति समेषु षष्ठं विषमेषु पंचमसप्तमातिरिक्तं निषिद्धमित्यर्थः अथ नांदीश्राद्धोत्तरं देवतोद्वास
नपर्यंतं निषेधाः गार्ग्यः नांदीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनं दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च अपसव्यं स्वधा
कारं नित्यश्राद्धं तथैव च ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलंघनं उपवासव्रतं नैव श्राद्धभोजनमेव च नैव कुर्युः सपिंडाश्च मंड-
पोद्वासनावधीति अत्र नित्यश्राद्धनिषेधेन तत्कार्यविहितपितृयज्ञनिषेधसिद्धेः स्वधाकारग्रहणं तत्स हचरितवैश्वदेवनिषे-
धार्थमाचारसंवादलाभाच्चेति बहवः तथान्यत्र अभ्यंगे सूतके चैव विवाहे पुत्रजन्मनि मांगल्येषु च सर्वेषु न धार्यं गोपिचंदनमि
ति अत्रादो विप्रतु ष्ट्यर्थं मौपनायनिको विधिः इत्थं सर्वोप्युपनं तेन तयायातु सुदंहरिः १ इति संस्कारकौस्तुभे उपनयनम्
विकलांगविषये उक्तं स्मृत्यर्थसारे षंढांधबधिरस्तब्धजडगद्गदपंगुषु कुब्जवामनरोगार्तशुष्कांगविकलांगिषु ध्वस्तपुं-
स्त्वे पि च तेषु संस्काराः स्युर्यथोचितं मत्तोन्मत्तौ न संस्कार्यावित्येके कर्मस्वनधिकारात् पतितत्वं नास्ति तदपत्यसंस्कार्यं ब्राह्म
ण्यां ब्राह्मणादुपन्नो ब्राह्मण एवेति श्रुतेः अन्ये संस्कार्या इत्याहुः होममाचार्यः करोति उपनयनं चाचार्यसमीपे नयनं अग्नि
समीपे वा सावित्रीवाचनं वा अन्यदंगं यथासंभवं कार्यमिति त्रयाणां पक्षाणामन्यतमेन प्रधानसिद्धिरित्याशयः मूकबधिरादेः

सावित्रीवाचनासंभवेस्पृष्ट्वासावित्रीजपोवाकार्यः संस्कारमंत्रहोमादीन्करोत्याचार्यएवतु उपनेयांश्चविधिवदाचार्यःस्वसमीप-
तः आनीयाग्निसमीपेतुसावित्रींस्पृश्यवाजपेदिति कन्यास्वीकरणादन्यत्सर्वंविप्रेणकारयेदितिपारिजाते ब्रह्मोक्तेः संस्कारमंत्रा
उपनेयस्यवासःपरिणयति तूष्णींमेखलांतूष्णीमजिनंप्रतिमुंचति तूष्णींदंडंप्रयच्छतीतिप्रकृत्यसर्वान्मंत्रानाचार्यएवजपेदित्ये
केइत्याह इतिसंस्कारकौस्तुभेविकलांगोपनयनम् नत्वामामाधवौदेवौब्राह्मणप्रीतिसिद्धये अनंतदेवस्तनुतेपुनःसंस्कार
पद्धतिम् पुनःसंस्कारःपुनरुपनयनम् तच्चत्रिविधं प्रत्यवायनिमित्तेप्रायश्चित्तत्वेनविहितं निमित्तविशेषेणकृतोपनयनस्यथान्वे-
ष्टान्वापत्तौतत्फलार्थत्वेनविहितं वेदांतराध्ययनचिकीर्षायांतदर्थत्वेनविहितमितितत्राद्यंतावद्बौधायनः अमत्यासुरापानेकृच्छ्रार्ध्य
पादंचरित्वापुनरुपनयनंमिति औषधांतराभावव्याध्युपशमनार्थेपि ष्टीपानेएतदितिमदनरत्नेवसिष्ठः मत्यामद्यपानेत्वसुरायास्
रायाश्चाज्ञानेकृच्छ्रातिकृच्छ्रौघृतप्राशनंपुनःसंस्कारश्चेति अत्रसुरायाश्चेतिसुराशब्दोनपैष्टीपरः तदज्ञानपानेद्वादशाब्दोक्ताःशू
लपाणौयमः अज्ञानाद्वारुणींपीत्वामाश्यमूत्रपुरीषयोः पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयइति यद्यपिसंस्कारशब्दोजातक
र्मादिसाधारणस्तथापीहदशविधिसंस्कारशब्देनोपनयनमेवोच्यते तस्यद्विजत्वसंपादनरूपातिशययोगेनबुद्ध्यारोहात् अनंतर
वक्ष्यमाणमनुवचसिवाक्यशेषेणतथाप्रतीतेश्च भविष्ये अज्ञानाद्वारुणींपीत्वासंस्कारेणैवशुद्ध्यति तप्तकृच्छ्राणितेनेहकेव

लेनतुशुत्ध्यति तदशुक्तव्याध्युपशमनार्थपानएवाज्ञानकृतेबोध्यम् स्मृत्यंतरेरेतोमूत्रपुरीषाणांगौडीमाध्व्योश्चप्राशने क्रव्या
दपशुविष्ठानांसंस्काराच्छुद्धिरिष्यते मनुः अज्ञानात्प्राश्यविण्मूत्रंसुरासंसृष्टमेवच पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयः
वपनंमेखलादंडोभैक्ष्यचर्याव्रतानिच निवर्त्ततेद्विजातीनांपुनःसंस्कारकर्मणीति एतदतीतसुरासंपर्कविषयम् तप्तकृच्छ्रपू
र्वकश्चैषविधिर्ज्ञेयः वक्ष्यमाणगौतमस्मृतिनिर्दिष्टविण्मूत्रसाहचर्यात् विष्णुः मलानांमद्यानामन्यतमस्यप्राशनेचांद्रायणं-
कुर्यात् लसुनपलांडुगृंजनतद्गंधिविड्वराहग्रामकुक्कुटनगरगोमांसभक्षणेचसर्वेष्वेतेषुद्विजातीनांप्रायश्चित्तांतेपुनःसंस्कारंकु
र्यादिति ज्ञानतःसकृद्भक्षणेएतदितिशूलपाणिः तत्रैवशातातपः उष्ट्रीक्षीरमानुषीक्षीरप्राशनेपुनरुपनयनं तप्तकृच्छ्रंचेति
पानाभ्यासएतदितिशूलपाणिः मिताक्षरायाम् पैठीनसिः अविखरोष्ट्रमानुषीक्षीरप्राशनेतप्तकृच्छ्रंपुनरुपनयनंचेति
बृहस्पतिः रेतोमूत्रपुरीषाणांशुद्ध्यैचांद्रायणंचरेत् तप्तकृच्छ्रपूर्वकंपुनःसंस्कारंप्रकृत्यगौतमः मूत्रपुरीषकुणपरेतसांप्राश-
नेचैवमिति अत्रचांद्रायणंतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यांव्यवस्था संस्कारस्तूभयत्रतुल्यएवेति शूलपाणिर्हेमाद्रौ प्रेतशय्यांप्र
तिग्राहीपुनःसंस्कारमर्हतीति आचारोद्योतेवृद्धमनुः जीवन्यदिसमागच्छेद्घृतकुंभेनियोजयेत् उद्धृत्यस्नापयित्वास्यजातकर्मा
दिकारयेत् द्वादशाहव्रतंचर्यांत्रिरात्रमथवास्यतु स्नातोद्वहेत्ततोभार्यामन्यांवातदभावतः अग्नीनाधायविधिवद्व्रात्यस्तोमेन

वायजेत् अथैंद्राग्नेनपशुनागिरिंगत्वातुयत्नतु इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्तथा प्रायश्चित्तोद्योते सिंधुसौवीरसौराष्ट्रा
स्तथाप्रत्यंतवासिनः अंगवंगकलिंगांध्रान्गत्वासंस्कारमर्हति एतच्चतीर्थयात्रांविनागमनेसतिबोध्यम् तीर्थयात्रांविनागत्वापु
नःसंस्कारमर्हतीतिप्रयोगपारिजातबौधायनस्मरणात् मनुः चांडालान्नंद्विजोभुक्त्वासम्यक्चांद्रायणंचरेत् बुद्धिपूर्वंतुकृच्छ्राब्दं
पुनःसंस्कारमेवचेति अभ्यासविषयमेतदितिमदनरत्ने पाराशर्यप्रायश्चित्तकांडे अजिनंमेखलादंडोभैक्ष्यचर्याव्रतानिच नि-
वर्तंतेद्विजातीनांपुनःसंस्कारकर्मणीति ब्रह्मचारिणंपुनःसंस्कृत्यपैठीनसिः मधुमांसाशनेत्रिरात्रमुपवासः पुनरुपनयनंचेति
अयंचत्रिरात्रोपवासःप्राजापत्याशक्तस्येत्युक्तम् मदनरत्नेएतयोर ज्ञातभक्षणेकृच्छ्रःमत्यापराकः अभ्यासेद्विगुणम् पुनःसंस्का
रश्चेति स्मृत्यर्थसारे तथातत्रैव मातापितृगुर्वाचार्योपाध्यायेभ्योऽन्यप्रेतसंस्कारेब्रह्मचारिणःपुनरुपनयनंकार्यमिति तथारेतो
विण्मूत्रकरनिर्मथितदधिबर्हिर्वेदिपुरोडाशभक्षणानामत्यंताभ्यासेऽतिकृच्छ्रःपुनरुपनयनंचेति पराशरः यःप्रत्यवसितोविप्रः
प्रव्रज्यातोविनिर्गतः अनाशकनिवृत्तश्चगार्हस्थ्यंचेच्चिकीर्षति सचरेत्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच जातकर्मादिभिःसर्वैःसं
स्कृतःशुद्धिमाप्नुयात् वसिष्ठः संन्यस्यदुर्मतिःकश्चित्प्रत्यापत्तिंव्रजेद्यदि सकुर्यात्कृच्छ्रमश्रांतःषण्मासान्प्रत्यनंतरमिति अत्र
विप्रस्यषण्मासिकःकृच्छ्रःक्षत्रियस्यचांद्रत्रयंवैश्यस्यकृच्छ्रत्रयमितिव्यवस्थोक्तामिताक्षरायांप्रपद्यते कर्मनाशाजलस्पर्शात्करतो

याविलंघनात् गंडकीबाहुतरणात्पुनःसंस्कारमर्हतीति इत्थंविहितेप्रायश्चित्तभूतपुनरुपनयनेविशेषः पारिजातमदनरत्नयोःक
श्यपः चीर्णप्रायश्चित्तःप्राच्यामुदीच्यांवादिशिगत्वायत्रग्राम्यपशूनांशब्दोनश्रूयतेतस्मिन्देशेग्निंप्रज्वाल्यब्रह्मासनमास्तीर्यप्राक्प्र
णीतेनविधिनापुनःसंस्कारमर्हतीति ब्रह्मासनमितिब्रह्मनियमार्थं अथद्वितीयउपनयनप्रकारः समयोद्योते विनर्त्तुनावसंते
नकृष्णपक्षेगलग्रहे अपराण्हेचोपनीतःपुनःसंस्कारमर्हति तथादक्षिणोत्तराभ्यांपाणिभ्यांकुमारस्यांसाभिमर्शनपूर्वकंसमीपानयन
विधायकहिरण्यकेशिसूत्रेमातृदत्तः इदंप्रधानकर्मास्यविस्मरणेसर्वमावर्त्ततइति वसिष्ठः पापांशकगतेचंद्रेअरिनीचस्थितेपिच
अनध्यायेचोपनीतःपुनःसंस्कारमर्हतीतिदोषाधिक्यतात्पर्यग्राहकप्रायश्चित्तोपदेशाभावात् अतःसर्वान्प्रतिअनध्यायत्वंत्रिपादी
सिद्धहतुत्वेनादायचतुर्थपादेनपरिसंख्यांकुर्वताधरात्रादिगर्जननिमित्तानध्यायस्यापिनपुनःसंस्कारगतानध्यायशब्देनग्रहणमिति-
दर्शितंभवतिसर्वेचत्रिरात्राकालिकाद्यनध्यायागर्जितादिनिमित्ततयाप्रतीयमानाःपौषादिसुरव्यकालीनोत्सर्जनसापेक्षगर्जनादिनि-
मित्ताइतिकातीयसूत्रसंवादिनोक्तश्रुतिभाष्येणलभ्यतइतिनतस्योपनयनकालेप्रसक्तिर्नतरांपुनःसंस्कारनिमित्तत्वं अतःसिद्धमेत
त् प्रातर्गर्जितनिमित्तानध्यायाःप्रतिपदाद्यनध्यायाश्चपुनःसंस्कारविधिगतानध्यायशब्देनगृह्यंतइति अत्रचानध्यायशब्देननान-
ध्यायाःसर्वेपिसर्वान्प्रतिपुनःसंस्कारनिमित्तत्वेनसर्वदेशेषुविवक्षिताः यतोहेमाद्रिरनध्यायप्रकरणेप्रसिद्धाप्रसिद्धानध्यायानुपन्य

स्यांतेस्मृतिवाक्यमुदाजहार चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेवसर्वदा दुर्मेधानामनध्यायस्त्वंतरागमनेषुचेति शिष्टाअपिकलौपुरु
षान्दुर्मेधान्मन्यमानाउक्तवाक्यवशेनवेदाध्ययनेएतानेवानध्यायान्वर्जयंतोदृश्यंते उचितंचदुर्मेधत्वांगीकारेणैवतेषांस्वस्वगृह्योक्तपौषादिकालेअध्ययनसंकोचापवादकोत्सर्जनानुष्ठानम् पुष्येतूत्सर्जनंकुर्यादुपाकर्मदिनेपिवेति छंदोगशाखीयखादिरगृह्यानु-
सारेणचोपाकर्मदिनेनुष्ठानम् एवंचऐतरेयिणांमहाव्रतप्रकरणेत्रिरात्रानध्यायःपठ्यते आपत्तौवर्षेत्रिरात्रंवैदिकेनाध्यायेनांत रि
यादिति तथाआपस्तंबीयधर्मप्रश्नेपिविद्युत्स्तनयित्नुर्वृष्टिश्चापत्तौयत्रसंनिपतेयुस्त्र्यहमनध्यायोयावद्भूमिर्व्युदकेत्येकइति यच्च
मनुनाऽकालिकानध्यायउक्तः विद्युत्स्तनितवर्षेषुमहोल्कानांचसंप्लवे अकालिकमनध्यायमेतेषुमनुरब्रवीदिति तथा प्रादुष्कृतेष्वग्नि
षुतुविद्युत्स्तनितनिःस्वने सज्योतिःस्यादनध्यायःशेषेरात्रौयथादिवेति यच्चस्मृत्यर्थसारेअकालिकानध्यायउक्तः अर्द्धरात्रादूर्ध्वं
गर्जनेअर्द्धरात्रेवाऽकालिकोनध्यायःप्रातःसंध्यागर्जितेत्वहोरात्रमिति ईदृशसर्वानध्यायदिनंप्रतिपत्स्वेवेत्येवकारेणात्रत्यैकवाक्य
नीतिवन्निर्दोषश्रौतपरिसंख्यायादुर्मेधान्प्रतिज्ञापनात्तेषांतावदुक्तानध्यायदिनोपनयनंनपुनःसंस्कारनिमित्तम् अतएवनमेधाव
तोपिप्रतिपत्सुनःसंस्कारनिमित्तम् दुर्मेधान्प्रतिनिषेधेनाध्ययनेचतुर्दश्यादिवदितरानध्यायानांनित्यत्वाभावनिर्णयेसतिनित्यचतु
र्दश्याद्यनध्यायग्रहणेनोपनयनस्यपुनःसंस्कारविधिगतानध्यायशब्दस्यानित्यानध्यायग्राहकत्वासंभवात् उक्तंहि पंचमेअग्नीषोमी

यथागोत्कर्षपर तथाप्रतीयमानेनयदेवादःपौर्णमासंहविरितिवचनेनाग्नीषोमीयस्यपुरोडाशयागस्यैवोत्कर्षोनत्वग्नीषोमीयोपांशुया-
जस्यनित्याग्नीषोमीयग्रहणेनोपपत्तावनित्याग्नीषोमीयग्रहणायोगादिति किंचोज्ज्वलायांहरदत्तेनधर्मप्रश्नगतोदाहृतवाक्यस्येत्थंव्या
ख्यानंकृतं यस्मिन्देशेयोवर्षाकालस्ततोन्यस्तत्रापर्तुरिति नचात्रवर्षशब्दोवर्षर्तुपरः तस्यसर्वदेशेमासद्वयात्मकत्वात् तथैवोक्तस्मृति
भाष्येउक्तत्वाच्चकिंतुवृष्टिपरः एवंचयस्मिन्माघादिकालेवृष्टिर्यत्रनियतानासावपर्तुः दृश्यतेचयथावृष्टिकालोदक्षिणायनएक-
स्तथोदगयनंप्यपरइत्यर्थस्यज्ञापकंमहाभारतेवैराटपर्वणिबृहन्नलावाक्यमुत्तरंप्रति मेतत्पार्थस्यलोकेषुविदितंधनुरितिप्रकृत्यएतद्व
र्षसहस्रंतुब्रह्मापूर्वमधारयत् ततोनंतरमेवाथप्रजापतिरधारयत् त्रीणिपंचशतंचैवशक्रोऽशीतिचपंचच सोमःपंचशतंराजातथै
ववरुणःशतम् पार्थःपंचचषष्टिंचतथैवश्वेतवाहनइति अत्रचखांडवदाहानंतरलब्धधनुषःपार्थकर्तृकधारणेपंचषष्टिवत्सरात्मक
वर्षाणांबाधितत्वाद्वर्षशब्दंवृष्टिकालपरंस्वीकृत्यैकैकस्मिन्वत्सरेद्वौद्वावुक्तरीत्यावृष्टिकालावभिप्रेत्यसार्द्धद्वात्रिंशद्वत्सराःपंचषष्टिव
र्षशब्देविवक्षिताइत्यवश्यंवाच्यम् अन्यथाअतीतानागतवत्सराभिप्रायव्याख्यानेभूतनिर्देशानुपपत्तेः किंचयावद्भूमिव्युदकंतिध
र्मप्रश्नएवपक्षांतरसत्वान्नत्रिरात्रानध्यायस्यनित्यत्वम् नापिमनूक्ताकालिकस्यनित्यत्वम् उक्तमनुवाक्येएतेषुमनुरब्रवीदितिचतुर्थपा
दस्यश्लोकपूरणार्थत्वे ऽनुशयंमन्यमानोमेधातिथिर्यत आहमनुरब्रवीदित्युक्तिर्विकल्पार्थेत्यल्पेइति किंचप्रादुष्कृतेष्वितिवाक्यशेषा

दपितद्दिने प्रातःसन्निपातएवाकालिकानध्यायनिमित्तं नपूर्वदिने सायंसंध्यागतोपीति प्रतीयते यतोत्रव्याख्यातृभिरेवंव्याख्यातं शेषत्तौरवृ-
ष्टिकाल भिन्नकालेउक्तनिमित्तेचरणत्रयोक्तसज्योतिरनध्यायवशेन यथादिवानध्यायस्तथारात्रावपीतिसायंसंध्यागतनिमित्तवशेनज्यो
तिरनध्यायस्यचदिवानध्यायस्याप्राप्तस्यानुवादासंभवः रात्रावनध्यायस्यच प्राप्तस्यविध्यसंभवः प्रातःसंध्यानिमित्तेच तयोःसंभव-
इतिशाब्दन्यायविद्भिरालोचनीयम् अतोपिनमनूक्ताकालिकस्यानित्यत्वम् नापिस्मृत्यर्थसारोक्ताकालिकानध्यायस्यनित्यतयापुनःसं
स्कारविधिगतानध्यायपदेनग्रहणं यतोस्तिवसिष्ठवचोल्लल्लादिनिबंधोदाहृतम् व्रत्येन्हिपूर्वसंध्यायांवारिदोयदिगर्जति तद्दिनेस्याद
नध्यायोव्रतंतत्रविवर्जयेदिति तन्निषेधसुखपरिसंख्यांकुर्वन् प्रातःसंध्याकालीनगर्जननिमित्तानध्यायंनोपनयनेविवर्जयेदित्यर्थपरं
भवतिनभूपालैरत्सुत्सवइतिवत् नचदुर्मेधान्प्रतिप्रातर्गर्जितनिमित्तानध्यायप्रतिप्रसवार्थमेतदितिशंक्यम् त्रिपाद्यैतदुपपत्तौचतुर्थ
पादानर्थक्यापत्तेः नापिदोषाधिक्यार्थंनश्रोत्रियोहंतव्यइत्यत्रवद्दोषाधिक्यतात्पर्यग्राहकप्रायश्चित्तोपदेशाभावात् अतःसर्वानुप्र
ति अनध्यायत्वंत्रिपादीसिद्धंहेतुत्वेनादायचतुर्थपादेनपरिसंख्यांकुर्वताऊर्ध्वरात्रादिगर्जननिमित्तानध्यायस्यापिनपुनःसंस्कारविधिग
तानध्यायशब्देनग्रहणमितिदर्शितंभवतिसर्वत्रत्रिरात्राकालिकाद्यनध्यायागर्जितादिनिमित्ततयाप्रतीयमानाःपौषादिसुखव्यकालीनो
त्सर्जनसापेक्षगर्जनादिनिमित्ताइतिकात्यीयसूत्रसंवादिनोक्तश्रुतिभाष्येणालक्ष्यतइतिनतस्योपनयनकालेप्रसक्तिर्नतरांपुनःसंस्कारनि

मित्तत्वम् अतः सिद्धमेतत् प्रातर्गर्जितनिमित्तानध्यायः प्रतिपदाद्यनध्यायश्च पुनः संस्कारविधिगतानध्यायशब्देन गृह्यत इति अथ
तृतीयप्रकारः तत्र जयंतः यजुर्वेदं चाधीत्य ऋग्वेदमध्येतुकामस्यैतदेवोपनयनमलंकारवर्जं भवतीति गृह्यकारिकायाम् वेदा
तरमधीत्यैव मृग्वेदं येत्वधीयते उपनीतिरियं तेषामलंकरणवर्जितेति पारिजाते भगवान् द्वितीयमिममृग्वेदमध्येतुमभिवांच्छ
या एतद्रूत्योक्तविधिना पुनश्चैवोपनीयत इति इति तृतीयप्रकारः अयं च प्रकारो न तैत्तिरीयाणां यथोक्तमापस्तंबेन धर्मप्रश्ने सर्वे-
भ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणमिति व्याख्यातमेतदित्युज्ज्वलायाम् त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् तदित्यृ
चोस्याः सावित्र्याः परमेष्ठी प्रजापतिरिति मनुः ततश्चोपनयनसावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता भवंति अतो गृह्यमा
र्णविशेषत्वादेकमेवोपपन्नं सर्वार्थम् आथर्वणार्थं तु पृथगुपनयं कार्यं नान्यत्र संस्कृतो भृग्वंगिरसोधीयीतेति श्रुतेः भृग्वंगिरस आ
थर्वणमिति पुनरुपनयने विशेषमाहाश्वलायनः अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्स
वितुर्वृणीमह इति सावित्रीमिति अनिरुक्तं न भवति इयं च वृत्तिकारिका जयंत पर्यालोचने प्रायश्चित्तभूतपुनरुपनयनविषय-
मेव प्रतीयते प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तावेवं कुर्यादिति वृत्तिकृतैतद्व्याख्याने भिधानात् जयंतेन प्रायश्चित्तनिमित्तं यस्य
पुनरुपनयनं क्रियते तस्यायं विधिरुच्यते इत्युपक्रम्यैतत्सूत्रव्याख्यानात् यदैतदुपनीतस्य प्रायश्चित्तं तदा भवेत् कृताकृतं च

वपनं मेधाजननमेव च  मेधाजननसद्भावे व्रतचर्यापवेदिह  अनुप्रवचनीयश्च तदभावेह्ययं न च  परिदानं न कार्यं स्यान्निमित्तानंतरं त्वि
दम्  पूर्वस्य वाचयेत्स्थाने तत्सवितुर्वृणीमहे  भणितोत्र विशेषोयं समानमितरच्चैव दिति  कारिकोक्तिश्च निमित्तानंतरं त्विदमित्युक्त्वा
च नैमित्तिके निमित्तानंतर्यस्योचितत्वान्न्यायमूलकं कालश्चेति सूत्रं निमित्तानंतर्यासंभवे तु जातेष्टिवद् उदगयनादिकालोपेक्षणीय एवेति सू
चितम्  परिदानं कस्य ब्रह्मचार्यसीत्यादेः परिददामीत्यंतस्य मंत्रस्योच्चारणम्  भणितोत्रेति प्रायश्चित्तार्थे पुनरुपनयन एव गायत्र्या
स्थाने एषा ऋग्भवति  न तु तदनंतरभाविषु ब्रह्मयज्ञादिष्वपि तत्र पूर्वविहितगायत्रीबाधे मानाभावादिति दर्शयति  मातृदत्तोपि
अत्र सावित्रीं वाचयति यदि पुरस्तादुपेतो भवति तर्हि अनुपपत्तेतस्य हे प्रायश्चित्तार्थे पुनरुपनयनांतर्गतसावित्रीवाचनांगत्वेन परिदा
नांतं यं कालविधिं वदंस्तस्मिन्नेव प्रकरणे परिदानसूत्रे पुनरुपनयनविषयत्वमेव दर्शितम्  तस्मिन्नेव प्रकरणे तत्सूत्रव्याख्याका-
ले अहतवासो मेखलाजिनभैक्षचर्यादंडानामत्र निवृत्तिः पुनरुपनयन इत्याह  हरदत्तेन तु  अथोपेतपूर्वस्येति सूत्रीयव्याख्यावस
रे उक्तम्  अथानंतरं वेदांतरे उपेतपूर्वो य इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यत इति  अस्ति च तदनुसारिणी स्मृतिः
पारिजाते  अध्वर्यूणां सामगानामेवमध्येतुमिच्छताम्  क्रियास्यात्परिदानांता दीक्षादिर्नाविधीयते  ब्रह्मौदनं च मेधा चावांदीक्षा
चमनं विधीयते  ऋचमध्येतुकामानां दीक्षामिच्छंति केचनेति  अत्राध्वर्युसामग्रहणस्याप्यमाशायः  ऋग्वेदाध्ययनांगभूतमे

वीपनयनमाश्वलायनोक्तेतिकर्त्तव्यताकंभवति सत्यप्युपनयनेऽस्मैतत्तदाम्नायाध्ययनांगभूत एतस्मिंस्तन्तद्गृह्योक्तेतिकर्त्तव्यताभव
तीतिस्मृतिपादेन्यायसुधायामुक्तेः नचऋग्वेदिनांतदध्ययनार्थंपुनरुपनयनंभवति तैःप्रथमोपनयनानंतरमेवतदध्ययनस्योचित
त्वात् अतोन्यवेदिनामेवऋग्वेदार्थंपुनरुपनयनेऽयंविधिरिति अतएवपूर्वोदाहृतजयंतकारिकयोःऋग्वेदग्रहणंकृतम् यच्चतत्रहर
दत्तीयेचऋग्वेदाध्ययनपूर्वकएववेदांतराध्ययनेषुपुनरुपनयनकथनम् तेनयुगपदनेकवेदारंभेनोपनयनावृत्त्यपेक्षेतिसूचितम्
अस्तित्वन्यवेदिनांकामिकवेदारंभपक्षोयुगपत्तदासमस्तपक्षश्च तथाच हरिहरेणोपनयनानंतरंवेदारंभसमयइत्युक्त्वावेदारंभांगभू-
ताःकात्यायनोक्ताआहुतीर्दशयथोक्तम् यदिऋग्वेदआरभ्यतेतदापृथिव्यैस्वाहा अग्नयेस्वाहा यदियजुर्वेदः अंतरिक्षायस्वाहा
वायवेस्वाहेति यदिसामवेदः दिव्यःस्वाहा चंद्रमसेस्वाहा यद्येकदासर्ववेदारंभः प्रतिवेदंवेदाहुतिद्वयंहुत्वाप्रायश्चित्ताहुतीर्जुहु
यादिति अतश्चयुगपदनेकवेदारंभेषुसकृदुपनयनेनैवसकलवेदारंभसिद्धिः इत्यभिप्रेत्योक्तमापस्तंबेनसर्वेभ्योवैवेदेभ्यःसावित्र्यनू
च्यतइतिसंक्षेपः वेदांतराध्ययनपूर्वकमृग्वेदाध्ययनंचिकीर्षतआश्वलायनोक्तेतिकर्त्तव्यताकंपुनरुपनयनंकार्यम् तत्रजयंतकारि
कामतेऽलंकारमात्रवर्जम् हरदत्तमतेसूत्रोक्तसकलपुनरुपनयनगतविशेषविशिष्टंभवति स्मृतिमतेतुदीक्षापिवैकल्पिकी द्वि
तीयपुनरुपनयननिमित्तेत्वविकृतपुनरुपनयनंकार्यम् गार्हपत्याधानात्प्राक्सूर्योदयेविकृताधानवत् तत्रपुनरुपनयनेकश्चिदपि

सं॰कौ॰
१५६

ग्रंथेविशेषानुक्तेः अथोपेतपूर्वस्येतिसूत्रस्यतत्राप्रवृत्तेश्च प्रायश्चित्तभूतपुनरुपनयनेतूक्तवचनेभ्योनेकविशेषावगतेस्तत्प्रयोगो
लिख्यते तच्चयत्रप्रायश्चित्तांतरसहितंविहितंतत्रपर्षदुपदिष्टविधिनातत्प्रायश्चित्तंकृत्वाकार्यम् यथोष्ट्रीपानादौ यत्रजातकर्मा
दिसंस्कारसहितंविहितंतत्रनिमित्तानंतरकरणपक्षेपुण्यनक्षत्राद्यनालोच्यपर्षदुपदेशेनचौलांतसंस्कारान्कृत्वाकार्यम् अन्यथोचि
तनक्षत्राद्यावश्यकम् कर्ताचपितृसत्त्वेसएव तदभावेपितृव्यादिसपिंडः तदभावेकश्चित् पुनरुपनयनंयत्रचिकीर्षितंतत्रैवदेशे-
जातकर्मादयःकार्याः अस्यकृतौर्ध्वदेहिकस्यपुनःसंस्कारद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मादीन्युपनयनांतानिकर्माणिकरिष्ये
इतिसंकल्प्यसर्वोद्देशेनस्वस्तिवाचनादिश्मश्रुवापनानंतरंचौलेकेशवापनमितिविशेषोमहद्भयसः विवाहसंकल्पांतदूर्ध्वंस्वस्तिवा
चनादिकंतुस्वयमेवपृथक्कुर्यात् एवंनिमित्तांतरेपिसंकल्पऊह्यः यत्रतूपनयनमात्रंप्रायश्चित्तत्वेनविहितंतत्रपर्षदुपदिष्टविधिना
तदेवकार्यम् तत्राचार्यः कृच्छ्रत्रयद्वादशसहस्रंतत्सवितुर्वरेणीमहइत्यस्यजपंकुर्वीत सत्कार्योनिमित्तांतरोपनयनेप्रायश्चित्तं-
कालांतरोपनयनेत्वेवंसंस्कुर्यात् ततोग्रामात्प्राच्यामुदीच्यांवादिशिगत्वायत्रग्राम्यपशुशब्दोनश्रूयतेतादृशदेशेमार्जनोपलेपनाभ्यां
शोधयित्वातत्रकृतनित्यक्रियःआचार्यःस्वदक्षिणतःसंस्कार्यमुपवेश्यप्रत्यंतदेशगमनजनितदोषनिरासनेनपुनःसंस्कारसिद्धि-
द्वाराश्रीपरमेश्वरप्रीत्यर्थंपुनरुपनयनंकरिष्यइत्येवंतन्निमित्तानुसारिसंकल्पंकृत्वातदंगभूतेत्यादिसंकल्पपूर्वकंमंडपदेवताप्र-

१५६

तिष्ठापनांतंकुर्यात् स्वस्तिवाचनेऽग्निः प्रीयतामितिविशेषः पुनरुपनयनेऽग्निरितिबौधायनोक्तेः कृतमंगलस्नानंसंस्कार्यंभोजयि
त्वावपनपक्षेसंकल्पपूर्वकंवपनस्नानेकारयित्वा अन्यथाकारयित्वानित्योपनयनवदन्वाधानात्प्राकृतंत्रंकृत्वाऽस्यप्रायश्चित्तार्थंपुनरु-
पनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादिप्रोक्षणांतंनित्यवत्कुर्यात् ततोब्रह्माणमुपवेश्यप्रणी-
ताप्रणयनाद्याज्यभागांतंकृत्वावासोधारणपक्षेनित्यवत्समंत्रधारणंतयोःकुर्यात् तदभावपक्षेपूर्वमेवकुमारेणपरिहितवस्त्रेणभवि
तव्यम् ततोब्रह्मचारिणः पुनरुपनयनेतुवस्त्रादिनित्यंयज्ञोपवीतधारणादिआज्येक्षणांतंनित्यवत्कुर्यात् ततोयुवासुवासाइत्येतन्मंत्रे
णप्रदक्षिणमावर्तनादिवाससापाणिभ्यांतदंजलिग्रहणांतंकृत्वाप्रणवव्याहृतीनामृष्यादिस्मरणांते तत्सवितुः श्यावाश्वः सवितानुष्टु
प् पुनरुपनयनेविनियोगः प्रथमंपादशः स्वयमुक्त्वावाचयेत् ततोऽर्धर्चशः ततः सर्वाम् ततोमेखलादंडदानपक्षेसमंत्रकंतद्दानं
कृत्वाब्रह्मचर्यमादिशेत् यदिब्रह्मचारिणोऽसमापितवेदस्यपुनरुपनयनंनित्यवत् अन्यथास्यतादृशस्यपुनरुपनयनेतुअपोशानक
र्मकुरु दिवामास्वाप्सीः वेदमधीष्वेति समापितवेदस्यतुस्वाप्सीरित्यंतमेव ततः स्विष्टकृदादिहोमशेषंसमापयेत् मेधाजननकर
णपक्षेतत्पर्यंतमग्निंरक्षेत् व्रतचर्यांचकुर्यात् उपनयनदिनेभिक्षायाचनपूर्वकमनुप्रवचनीयंच तत्रगायत्र्यास्थानेतत्सवितुर्वृणी
महइतिएतांपठित्वाद्वितीयामाहुतिंजुहुयात् उक्तमृष्यादिनित्यस्त्यागः यद्यसमापितवेदस्यपुनरुपनयनंवेदसमाप्तिवाचनंकुर्यात्

सं॰कौ॰
१५७

नान्यथा ततस्त्रिरात्रंद्वादशरात्रमब्दंवाव्रतचर्यातत्कृतायांमेधाजननम् तत्रयदिपुनरुपनीतोब्रह्मचारीतदायस्यपलाशस्यकुशस्तंब
स्यवोक्षणंकृतंतत्रैवमेखलादीनिन्युदस्यनव्यानिधारयेत् अन्यस्तुपुनरुपनीतोयोपिव्रतमेखलादिरन्युदस्यनान्यानिधारयेत् यस्मि
न्नाश्रमेपुनरुपनयनंप्राप्तंतदाश्रमधर्मान्नकुर्यात् यत्रतुपुनरुपनयनानंतरमाश्रमांतरस्वीकारःश्रूयते यथास्नात्वोद्वहेत् ततोभा-
र्यामित्यादौतत्रमेखलादीनिन्युदस्यपुनस्तानिधारयित्वाब्रह्मचारीव्रतचर्यामुचितकालेनसमाप्यविधिनाआश्रमांतरंस्वीकुर्यात् इ
तिश्रीमदनंतदेवकृतसंस्कारकौस्तुभेबकृत्वानांपुनःसंस्कारविधिः अथयजुःशाखिनाम् तत्रबौधायनः अथोपनीतस्यव्रात्या
निभवंति नान्यस्योच्छिष्टंभुंजीतान्यत्रपितृज्येष्ठाभ्यांनस्त्रियासहभुंजीतमधुमांसश्राद्धसूतकान्ननिर्दशाहंसंधिनिक्षीरंछत्राकिनि
र्यासौविलापनंगणान्नंगणिकान्नमित्येतेषुपुनःसंस्कारःप्रतिषिद्धदेशगमनमित्येकेषामथाप्युदाहरंतिसुराष्ट्रंसिंधुसौवीरमवंतींदक्षि
पापथं एतानिब्राह्मणोगत्वापुनःसंस्कारमर्हतिइत्यथपुनःसंस्कारंव्याख्यास्यामोथदेवयजनोल्लेपनप्रभृत्याग्निमुखान्कृत्वापाला
शींसमिधमाज्येनवाभ्याधायवाचयति पुनस्त्वादित्यारुद्राव॰कामाऽस्वाहेत्यथाव्रत्यप्रायश्चित्तंजुहोति यन्म आत्मनोमिंदाभूत्॰पुनरग्नि
श्चक्षुरदादितिद्वाभ्यां अथपक्वाज्जुहोति सप्तते अग्ने॰घृतेनस्वाहा अथाज्याहुतीरुपजुहोति येनदेवाःपवित्रेणेतितिसृभिरनुछंदसं-
स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् अथोपरमापरिधानान्कृत्वापालाशींसमिधमाधायाथाव्रत्यप्रायश्चित्तंजुहोति अथव्या

१५७

स्तीर्जुहोति अथापरो ब्राह्मणवचनादेव सावित्र्या शतकृत्वो घृतमभिमंत्र्य प्राश्य कृतप्रायश्चित्तो भवति गुरोर्वाप्युच्छिष्टं भुंजीताप्यु
दाहरंति वपनं दक्षिणादानं मेखलां दंडमजिनं भैक्षचर्याव्रतानि चैतानि न निवर्त्तंते पुनःसंस्कारकर्मणीत्येते पुनःसंस्कारा व्याख्याताइ-
ति अत्र शक्ताशक्तभेदेन गुरुलघुकल्पव्यवस्था बोध्या ब्राह्मणप्रीतये कारि पुनःसंस्कारपद्धतिः प्रीतस्तत्स्वीति ततः कुर्याच्छंनो
विष्णुरुरुक्रम इति श्रीमदनंतदेवकृता संस्कारकौस्तुभे पुनःसंस्कारपद्धतिः अथ ब्रह्मचारिधर्माः मनुः प्रतिगृह्येप्
सितं दंडमुपस्थाय च भास्करम् प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि एतद्व्याख्यामाह माधवः दंडप्रतिग्रहांतमुपनयनं प्रा
प्य गायत्र्यर्थं भास्कारमुपस्थाय सोहमिति ज्ञात्वाग्निं परिचर्य भैक्षं परिचरेदिति परिचर्यार्थं समिदाहरणमाह बैजवापः पुरास्त
मयात्प्रागुदीचीं दिशं गत्वा हि सन्नरण्यात्समिन्धमाहरेच्छुष्कां ब्रह्मवर्चसकाम आर्द्रामन्नाद्यकाम उभयीमुभयकाम इति जा
तिनियमो वायुपुराणे पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः शमीरोहितकाश्वत्थास्तदभावेर्कवेतसाविति याज्ञ
वल्क्यः आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रममिति व्यासः ब्राह्मणक्षत्रियवि
शम्वेरसु भैक्षमन्वहम् सजातीयगृहेष्वेव सार्ववर्णिकमेव वेति अत्र द्वितीयपक्ष आपद्विषय इत्युक्तं भविष्ये चातुर्वर्ण्यं चरेद्भैक्षम
लाभे कुरुनंदनेति आपद्यपि न शूद्रात्पक्वं गृह्णीयात् आममेवाददीतास्मादद्यात्तावेकरात्रकामित्यंगिरोवचनात् मनुः वेदय

द्विरहीनानां प्रशस्तानां स्वकर्मसु ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोन्वहम् समाहृत्यतुतद्भैक्षं यावदर्थममायया निवेद्यगुरवेश्नीया-
दाचम्यप्राङ्मुखः शुचिः भैक्षेण वर्त्तयन्नित्यंनैकान्नाशीभवेद्द्विजः भैक्षेणव्रतिनोवृत्तिरुपवाससमास्मृता व्रतेवादेववदैवत्येपित्र्येकर्मण्य
थर्षिवत् काम मभ्यर्थितोश्नीयाद्व्रतमस्यनलुप्यतइति. भैक्षचर्यायानित्यत्वमाहसएव अग्नींधनंभैक्षचर्या मधःशय्यांगुरोर्हितं
आसमावर्त्तनात्कुर्यात्कृतोपनयनोद्विजइति स्मर्तुरपि ब्रह्मचर्यंतपोभैक्षंसंध्ययोरग्निकर्मच स्वाध्यायोगुरुवृत्तिश्चचर्येयंब्रह्म
चारिणइति स्वाध्यायोब्रह्मयज्ञः सचोपाकरणात्पूर्वमपिगायत्र्याकार्यः अनुपाकृतवेदस्य कर्त्तव्योब्रह्मयज्ञकः वेदस्थानेतुसा
वित्रीगृह्यतेतत्समीपतइति कौर्मे नादर्शंनैववीक्षेतनाचरेद्दंतधावनं गुरूच्छिष्टंभेषजार्थंप्रयुंजीतनकामतइति अत्रमधुमां
सांजनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् भास्करालोकनाश्लीलपरिवादादिवर्जयेदितियाज्ञवल्क्येननिषिद्धमध्वादेस्तदन्यानिवर्त्य
रोगपरिहारायावश्यकभक्षणप्रसक्तौगुरूच्छिष्टतद्भक्षणप्रतिप्रसवःक्रियते तदन्यगुरूच्छिष्टभोजनस्यपुण्यजनकत्वात् पितुर्ज्ये-
ष्ठस्यभ्रातुरुच्छिष्टंभोज्यमित्यादिस्मृतिपौराणवाक्यैस्तथाबोधनात् तांबूलादिवर्जनमाहप्रचेताः तांबूलाभ्यंजनंचैवकांस्यपात्रे
चभोजनं यतिश्चब्रह्मचारीचविधवाचविवर्जयेदिति माधवीयेभृगुः सदोपवीतिनाभाव्यंसदाबद्धशिखेनच विशिखोव्युपवी-
तश्चयत्करोतिनतत्कृतमिति यमः दंडंकमंडलुंवेदंमौंजींचरशनांतथा धारयेद्व्रतयुक्तंचभिक्षान्नाशीगुरौवसन् मेखलामजि

नंदंडसुपवीतंचनित्यशः कौपीनंकटिसूत्रंच ब्रह्मचारीचधारयेदिति वेदोदर्भमुष्टिरितिमाधवः त्रुटितानांप्रतिपत्तिंमनुः मेखलामजिनंदंडमुपवीतंकमंडलुं अप्सुप्रास्येद्विनष्टानिगृहीत्वान्यानिमंत्रवतइति उपनयनप्रकरणोक्तैर्मंत्रैरित्यर्थः उपवीतनाशेविशेषं
हारीतः मनोव्रातपतीभिश्चव्रतस्नोहुत्वापुनः प्रतीयादितिमनोज्योतिरित्येकाव्रातपतीभिस्तिस्नइत्यर्थः व्यासः जघन्यशायीपूर्वं
स्यादुत्थायगुरुवेश्मनि यच्चशिष्येणकर्त्तव्यंयच्चदानेनवापुनः कृतमित्येवतत्सर्वंकृत्वातिष्ठेत्तुपार्श्वतइति तथा अप्सुक्तवतिनाश्नीयादपीतवतिनोपिबेत् नतिष्ठतिनथासीतनास्कुप्तेप्रस्वपेत्तथेति ईदृशीगुरुशुश्रूषाचावर्त्यमानेवनिर्विघ्नतयावेदविद्यांसवीर्यां
करोतीतिजैमिनीयतंत्रे आचाराङ्कृत्यमाणेषुतथास्यादित्यादिप्रदेशेषूपपादितंतदीयैः इतिब्रह्मचारिधर्माः अथतदतिक्रमेप्रायश्चित्तं स्मृत्यर्थसारे संध्याग्निकार्यलोपेस्नात्वाष्टसहस्रजपः भिक्षालोपेष्टशतम् अभ्यासेद्विगुणंपुनःसंस्कारश्चेति जपश्चायंगायत्र्याः यःसंध्यांचैवनोपास्तेअग्निकार्यंयथाविधि गायत्र्यष्टसहस्रंतु जपेत्स्नात्वासमाहितइति शातातपः
ब्रह्मचारीतुयोश्नीयान्मधुमांसंतथैवच प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेदिति मनुः अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे
पाकयज्ञविधानेनयजेद्दैनिर्ऋतिंनिशीति एकानेकव्रतलोपसाधारणंप्रायश्चित्तमुक्तमृग्विधाने तंवोधियाजपेन्मंत्रंलक्षमेवशिवालये ब्रह्मचारीस्वधर्मेषुन्यूनंचेत्पूर्णमेवतादिति इतिश्रीसंस्कारकौस्तुभेब्रह्मचारिव्रतलोपप्रायश्चित्तम् उपाकर्मकाल-

निर्णयस्तत्प्रयोगश्च संवत्सरकौस्तुभेनिरूपितइतिनेहनिरूप्यते तथाविद्यारंभकालस्तत्रविहितोलक्ष्मीहरिपूजादिर्गुरुपूजांतप्रकार-
श्चाक्षरारंभांगत्वेनप्रागुपन्यस्तोवेदारंभेपिद्रष्टव्यः अथानध्यायाः माधवेहारीतः प्रतिपत्सुचतुर्दश्यामष्टम्यांपर्वणोर्द्वयोः श्वोऽ
नध्यायेऽद्यशर्वर्यांनाधीयीतकदाचनेति श्वइतिउदयानंतरमनध्यायतिथिसत्त्वे तदनंतरंस्वाध्यायतिथिसत्त्वेतुनपूर्वशर्वर्यामनध्याय
इतिशिष्टाः उक्ततिथीनामहोरात्रानध्यायनियामकपरिमाणंस्मृत्यर्थसारे उदयेस्तमयेचापिमुहूर्तत्रयगामियत् तद्दिनंतदहोरात्र
मनध्यायविदोविदुरिति दिनंचांद्रंतिथिरितियावत् यद्यस्मिन्नहोरात्रे अनध्यायत्वेनतद्विदुरित्यर्थः तत्रैवकौर्मे उपाकर्मणिचो
त्सर्गेत्रिरात्रंक्षपणंस्मृतम् अष्टकासुत्वहोरात्रमृत्वंतासु चरात्रिषु अत्रर्तवःसौराः तदंतरात्रीणामप्राप्तानध्यायस्यप्रापणेऽर्थव-
त्त्वात् गौतमः कार्तिकीफाल्गुन्याषाढीपौर्णमासीस्तिस्रोष्टकास्त्रिरात्रमिति उक्तपौर्णमासीरारभ्यत्रिरात्रंतथातिस्रोष्टकाःसप्त-
म्यादयोष्टकासंबंधिन्यस्तिथयस्तास्वनध्ययनमितिमाधवेनव्याख्यातं तत्रैवनारदः अयनेविषुवेचैवशयनेबोधनेहरेः अनध्यायस्तु
कर्त्तव्योमन्वादिषुयुगादिषु एतेकालाःसंवत्सरकृत्यगततन्निर्णयानुसारेणबोध्याः आपस्तंबः श्रावण्यांपौर्णमास्या
मनध्यायमुपाकृत्यमासंप्रदोषेनाधीयीतेति प्रदोषशब्देनात्रपूर्वरात्रिर्विवक्षितेतिमाधवः त्रयोदश्यादिप्रदोषेष्वपिनाध्येय-
मित्यस्मिन्नर्थेपौराणंवाक्यंतत्रैवोदाहृतम् मेधाकामस्त्रयोदश्यांसप्तम्यांचविशेषतः चतुर्थ्यांचप्रदोषेषुनस्मरेन्नचकीर्त्तयेदिति

नस्मरेदित्यन्यानध्यायेभ्यो ऽप्रदोषाधिक्यं ध्वन्यते त्रयोदश्यादिद्वैविध्येनिर्णयं तत्रैव प्रजापतिः षष्ठीचद्वादशीचैवअर्द्धरात्रोननाडि
का प्रदोषेनत्वधीयीत तृतीयानवनाडिकेति अनेनेदृशस्थले पूर्वदिनएवप्रदोषप्रयुक्तो ऽध्ययननिषेधोनतूत्तरत्ररात्रिसुखेसस्म्या-
दिसत्वेपीतिनियम्यते याज्ञवल्क्यः अहंम्प्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबंधुषु उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेतथा संध्या
गर्जितनिर्घातभूकंपोल्कानिपातने समाप्यवेदंद्युतिशमारण्यकमधीत्यच पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके ऋतुसंधिषुभुक्त्वा
चश्राद्धिकंप्रतिगृह्यच श्राद्धिकमित्यस्य पूर्वोत्तरक्रियाभ्यांसंबंधः एतत्सावर्णविषयम् एकोद्दिष्टान्नभोजनादौतुत्र्यहमितिमन्वा
दयः पशुमंडूकनकुलश्वाहिमार्जारमूषकैः कृतेंतरेत्वहोरात्रंशक्रपातेतथोच्छ्रय इति तात्कालिकानध्यायानपिसएव श्वक्रोष्टुग
र्दभौलूकसामवर्णार्त्तनिःस्वने अमेध्यशवशूद्रांत्यश्मशानपतितांतिके देशेष्वशुचावात्मनिचविद्युत्स्तनितसंप्लवे भुक्त्वार्द्रपाणिरं
भोंतरर्द्धरात्रेतिमारुते पांसुप्रवर्षेदिग्दाहेसंध्यानीहारभीतिषु धावतःपूतिगंधेचशिष्टेचगृहमागते खरोष्ट्रयानहस्त्यश्वनावृक्षो
परिरोहणे सप्तविंशदनध्यायानेतांस्तात्कालिकान्विदुरिति विद्युतिविशेषंगौतमः विद्युतिनक्तंचापररात्रे त्रिभागादिप्रवृ-
त्तौसर्वमिति पूर्वरात्रौविद्युतिअपरात्रावधिरनध्यायः दिनतृतीयांशोत्तरंतस्यांरात्रिसमाप्तिपर्यंतं एतद्वर्षातिरिक्तविषयम्
वर्षाऋतुतात्कालिक इतिव्यवस्था गर्जितेविशेषंहारीतः सायंसंध्यास्तनितेरात्रिःप्रातःसंध्यास्तनितेऽहोरात्रमिति

विष्णुः नवादित्रशब्दश्शूद्रपतितयोःसमीपे नदेवतायतनश्मशानचतुष्पथरथ्यासुनोदकांतः नपीठोपहितपादः नहस्त्यश्वोष्ट्र-
नौगोयानेषु नवांतोनविरिक्तोनाजीर्णानपंचनखांतरागमनइति पीठेतिनदुपरिस्थापितपादतलइत्यर्थः यानेष्वितिष्ठन्नितिशेषः
वांतःकृतवमनःविरिक्तःकृतविवेकःअजीर्णीअजीर्णीतियावत् भुक्तपाकपर्यंतंपंचनखाःश्वादयः तदंतरागमनेविशेषः स्मृत्यर्थसारे
आरण्यमार्जारसर्पनकुलपंचनखादेरंतरागमनेत्रिरात्रं आरण्यश्वसृगालवानरादेर्द्वादशरात्रं श्वखरोष्ट्रचांडालसूतिकोदक्या-
देर्मासम् गोगवयाजनास्तिकादेस्त्रिमासम् शशमेषश्वपाकादेःषण्मासम् गजसारससिंहव्याघ्रमहापातकिकृतघ्नादेरब्दम्
शोभनदिनेचानध्यायः विवाहप्रतिष्ठोत्थापनादिष्वासमाप्तेःसगोत्राणामिति अन्येप्यनध्यायास्तत्रैव श्रवणद्वादशीमहाभ
रण्योःप्रेतद्वितीयायांरथसप्तम्यामाकाशेशवदर्शनेचाहोरात्रमिति महाभरणीमहालयांतर्गता प्रेतद्वितीयायमद्वितीया अय
नेविषुवेपक्षिणीतिच मनुः शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकम् नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवचेति माध
वीयेकौर्मे श्लेष्मातकस्यछायायांशाल्मलेर्मधुकस्यच कदाचिदपिनाध्येयंकोविदारकपित्थयोरिति निर्णयामृते चातुर्मास्य-
द्वितीयासुमन्वादिषुयुगादिषु अनध्यायस्तुकर्तव्योयाश्चसोपपदातिथिरिति उक्तद्वितीयाआहगर्गः शुचावूर्जेतपस्येचयाद्विती
याविधुक्षये चातुर्मास्यद्वितीयास्ताःप्रवदंतिमनीषिणइति सोपपदाःपूर्वमेवोक्ताः इत्यनध्यायाः अथाध्ययनधर्माः ओं

कारंप्रथमंकृत्वाततोब्रह्मप्रवर्त्तयेत् ओंकारंचपुनःकृत्वाभूमिंस्पृष्ट्वाविरामयेदिति विष्णुः शिष्येणब्रह्मारंभावसानयोर्गुरोःपा
दोपसंग्रहणंकार्यमिति नापररात्रमधीत्यशयीतेतिच मनुः प्रदोषपश्चिमौयामौवेदाभ्यासेनयोजयेत् यामद्वयंशयानस्तुब्रह्मभूया
यकल्पतेइति विष्णुः अननुज्ञातश्चान्यस्मा अधीयानान्नविद्यामादद्यात् यआवृणोत्यवितथेनकर्णावदुःखंकुर्वन्नमृतंसंप्रयच्छन्
तंतंमन्येतपितरंमातरंचतस्मैनद्रुह्येत्कृतमस्यजानन्नित्यध्ययनधर्माः अथव्रतानि तदुपयोगिकालनिर्णयः श्रीधरीये तिथि-
नक्षत्रवारांशावर्गोदयनिरीक्षणम् चौलवत्सर्वमाख्यातंसगोदानव्रतेषुच व्रतानांचरणंत्वेवंकृत्वास्नानंसमाचरेदिति सगोदानेतिगोदा
नेनसहितेषुमहानाम्न्यादिव्रतेष्वित्यर्थः कृत्वे पियद्यपिव्रताचरणस्यस्नानाधिकारहेतुत्वंप्रतीयते तथापिनैतन्नित्यमित्यवसरेवक्ष्या
मः अथमहानाम्नीव्रतम् जन्मप्रभृतित्रयोदशवर्षेचौलोचितोदगयनादिकालेपूर्वदिनेब्रह्मचारिणासहाचार्यःकृतस्नातोदेशकालो-
च्चारणांतेएवंब्रह्मचारिणंमहानाम्नीरध्यापयिष्यमाणोमहानाम्नीव्रतसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमंकरिष्यइतिसंकल्प्यतदंग
त्वेनगणपतिपूजनादिनांदीश्राद्धांतंकृत्वापरेद्युःकारितवपनस्नानंबद्धशिखंब्रह्मचारिणंकृतमुहूर्त्तेस्वदक्षिणतउपवेश्यविधिवदग्निंप्रति
ष्ठाप्यमहानाम्नीव्रतांगहोमेदेवतापरिग्रहार्थमित्यादिकायत्वापरिददामीत्यंतमुपनयनवत्कुर्यात् तत्रप्रावरणंकाषायवासइतिपा
रिजाते प्रधानहोमेचमहानाम्नीव्रतप्रधानाज्यहोमेविनियोगइतिविशेषः परिददामीतिप्रजापतयेमनसाबटुंसमर्प्य आसनेउप

विश्योपनयनोक्तविधिनामेखलादंडधारणंकारयित्वापुराणयज्ञोपवीतादीनिजलेनिक्षिप्यस्विष्टकृदादिहोमशेषंसमाप्य ब्रह्मचा-
रिणंप्रतिवदेत् महानाम्नीव्रतंसंवत्सरंचरेति सचरिष्यामीत्युक्त्वासंवत्सरंकेशादिधारणभिक्षाचरणादिव्रतंचरेत् पूर्णेब्देउदगय
नेशुक्लपक्षेबटुसहितोगुरुर्विविक्तदेवालयादिदेशंगत्वातिथ्यादिसंकीर्त्यअस्यबटोर्महानाम्नीश्रवणांगभूतव्रतपूर्तिद्वाराश्रीपरमे
श्वरप्रीत्यर्थंहोमंकरिष्ये इतिसंकल्प्यउपलेपनाद्यग्निप्रतिष्ठापनांतंकुर्यात् चक्षुषीआज्येनेत्यंते अत्रप्रधानं अग्निं१संराधनीं
२अग्निं३अग्निं४ असूयतीं अनुमतीं५प्रदातारं६अग्निं७वायुं८सूर्यंच९एताःदेवताः कृसरान्नेनशेषेणेत्यादिपूर्णपात्रनिधानां
तंकुर्यात् ततोबटुर्होमायस्वभोजनायचपर्याप्ततंडुलान् भिक्षार्जितान्स्थालीपाकविधिनातूष्णींषड्विंशत्संख्ययानिरूप्यतथैव
प्रोक्ष्यस्थाल्यांप्रक्षिप्ततंडुलेषुतिलानोप्यश्रपयित्वाशृतःस्थालीपाकइतिज्ञापयेत् ततआचार्योबटुंप्रति व्रतलोपान्पृच्छेत् ते
नोत्तरेदत्तेलोपगौरवेप्रायश्चित्तंकारयित्वापुनःसंवत्सरव्रतंकारयेत् आपत्प्रयुक्ततयालोपलाघवेदानजपादिप्रायश्चित्तेनसद्यःशु
द्धिंसंपाद्यनव्रतमावर्तयेदितिपारिजातादयः बहवोव्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् लोपेष्वापत्प्रयुक्तेषुपुनर्वावृत्तिरिष्यतइति
कारिकोक्तेर्लोपलाघवेव्रतानावृत्तिवत्प्रायश्चित्ताभावोप्युचितः आपदाकारिताश्चेदग्नावग्निरित्यादिभिर्जुहुयात् नप्रायश्चित्तांत
रंकर्तव्यमितिकृताष्टमाध्यायगतमहानाम्नीव्रतसूत्रव्याख्यानात् शुचिनातेनान्वारब्धआज्यसंस्काराद्याज्यभागांतंकृत्वाऽवदान

धर्मेणचर्वाहुतीर्जुहुयात् नवभिर्मंत्रैरेकश्रुत्येन अग्नावग्निश्चरति प्रविष्टऋषीणांपुत्रो अधिराजएषः तस्मैजुहोमिहविषाघृतेनमा
देवानांमोमुहद्भागधेयंमोअस्माकंमोमुहद्भागधेयंस्वाहा अग्नयइदं॰ यातिरश्चीनिपद्यतेहंविधरणीइति तांत्वाघृतस्यधारयायजे
संराधनीमहंस्वाहा संराधन्याइदं॰ यस्मैत्वाकामकामायवयंसम्राड्यजामहे तमस्मभ्यंकामंदत्वाथेदंत्वघृतंपिबस्वाहा अग्नयइ॰
अयंनोअग्निर्वरिवःकृणोत्वयंमृधःपुरएतुप्रभिंदन् अयंशत्रून्जयतुजर्हृषाणोयंवाजंजयतुवाजसातौस्वाहा अग्नयइदं॰ असूयंत्यै
चानुमत्यैचस्वाहा असूयंत्याअनुमत्याइदं॰ प्रदात्रेस्वाहा प्रदात्रेइदं॰ भूःस्वाहा अग्नय॰ भुवःस्वाहा वायव॰ स्वःस्वाहा सूर्याये॰
ततःस्विष्टकृदर्थंस्रुच्यवदायतांबर्हिषिनिधाय ब्रह्मचारिणमाह एतंस्थालीपाकंसर्वमशानेति ब्रह्मचारीसर्वमश्नीयात् भुक्तवंतमाचा
तंतंप्रति ब्रूयात् उपतिष्ठस्वादित्यमिति ब्रह्मचारीततोपूर्णमंजलिंसिंचेत् त्वंव्रतानांव्रतपतिरसिव्रतंचरिष्यामितच्छकेयंतेनशके
यंतेनराध्यासमित्युपतिष्ठमानः ततएकरात्रंसंमीलिताक्षोवाग्यतआसीत्वातदनंतरदिने आचार्येणसहसमवायंगमिष्यामीतिध्याये
त् यएकरात्राध्ययनेनमहानाम्नीरध्यापयितुंशक्नुयाद्ब्रह्मचारी योबहुभिरेवाहोभिःशक्नुयात् सउक्तसंकल्पकाले एकरात्रस्थानेत्रिरात्रं
ध्यायेत् उक्तादित्योपस्थानानंतरमेवैतत्ध्यानंनमध्येकालविक्षेपःकार्यइति वृत्तिसिद्धांतभाष्यकृतौ ततआचार्यःसंमीलिताक्षवा
ग्यतबटोर्मुखसहितंशिरोवामकर्णदेशमारभ्यत्रिःप्रदक्षिणंतत्परिहिताहतवाससासंवेष्ट्ययथानतद्वासःपतेत्तथोपायंकृत्वाब्रूयादा

चार्यः एतंकालमेवंभूतोस्वपन्भवेति एतमित्यस्यस्थाने ब्रह्मचारी संकल्पानुसारेण एकरात्रमित्यादिवदेत् नकालमित्यस्यलोपः ब्रह्म
चारीउक्तकालेऽवश्यकर्तव्यसंध्यावंदनादेरितरत्स्नानभोजनस्वापगमनादि नकुर्यात् आचार्यःप्रैषांतेस्विष्टकृदादिहोमशेषंसमापये
त् संकल्पितकालांतेआचार्योनुवक्ष्यतीतिनिश्चयोत्तरं बहिर्ग्रामाद्देशान्यांदिशिरुग्निसंचाररहितेशुचौदेशेउल्लेखनादिकृत्वाग्निंप्रति
ष्ठाप्यतस्योत्तरतोसिसुदककमंडलुमश्मानंचनिधायतस्यैवप्रत्यगुदग्देशेवत्सतरींतथाबध्नीयात् यथाग्निसमीपेउच्चार्यमाणःशब्दोव
त्सतर्यानसम्यक्श्रूयते साचरम्याद्विवर्णारक्तातदभावेश्वेतेतिपारिजातः एतावत्कर्मब्रह्मचारिणःकश्चित्करोतीतिवृत्तिकृत् अ
तएवान्योब्रह्मचारीकुर्यादितिपारिजातः एतावत्कृतमित्याचार्यायवेदयीतसंस्कार्यः एतदनंतरं आचार्यएवोल्लेखनाद्यग्निप्रतिष्ठा
पनांतंकुर्यादितिपारिजातादयः तस्मादग्नेःपश्चात्प्रागग्रेषुदर्भेषु आचार्यऐशानदिगभिमुखउपविशेदितिवृत्तिकृत्पारिजातादयः
पश्चादग्नेस्तृणेषुतु ईशान्यग्रेषूपविशेदीक्षमाणस्कृतांदिशमितिकारिकायाम् ततःशिष्योमुखदेशाद्वस्त्रमपसार्यमुखंप्रक्षाल्य
कंठस्नानंकृत्वाचम्याग्निमाचार्यंचप्रदक्षिणीकृत्याचार्यंविधिवदुपसंगृह्यपश्चादाचार्यस्यतदासनप्रागग्रदर्भेष्वेवमूलदेशेस्वपृष्ठ-
माचार्यपृष्ठेनसंधायप्रत्यग्दक्षिणांदिशामभिसमीक्षमाणोंकधारणयोपविशेत् ततोमनसागुरुंवदेत् ओंमहानाम्नीर्भोअनुब्रू-
हीतिगुरुरियताकालेनानेनैतदुक्तमितिज्ञात्वातदहर्व्रतलोपान्पृष्ट्वानुतापिनेश्रद्दधानायब्रह्मचारिणेस्वयंनिमीलिताक्षोमहा

नाम्नीर्विदामघव न्विदेत्याद्यानवर्चः एवात्येवैवात्वमाइत्यादीनिनवपुरीषपदानिच प्रणवादीनित्रिरुपदिशेत् शिष्योपित्रिः पठे-
त् ततोगुरुः शिरोवेष्टनंशिष्यस्योन्मुच्यब्रूयात् आदित्यमीक्षस्वेति बटुर्मित्रस्यत्वाचक्षुषाप्रतीक्षेमित्रस्यत्वाचक्षुषासमीक्षइति
मंत्रद्वयेनादित्यमवक्षेत ततोमित्रस्यवश्चक्षुषानुवीक्षइतिससंभारादिशोवीक्षेतपुनरादित्यमीक्षस्वेत्युक्तस्तमीक्षेत मित्रस्यत्वाचक्षु
षाप्रतिपश्यामियोस्मान्द्वे ष्टियंचवयांद्विष्मस्तंचक्षुषोहेतिर्ऋच्छत्विति ततोष्टभिर्मंत्रैर्भुवमभिमृशेत् अग्नइळानमइळानमऋ
षिभ्योमंत्रकृद्भ्योमंत्रपतिभ्योनमोवोअस्तुदेवेभ्यः शिवानःशंतमाभवसुमृळीकासरस्वतिमातेव्योमसंदृशि १ भद्रंकर्णेभिरित्य
स्यराहुगणोगौतमोविश्वेदेवास्त्रिष्टुप् भूमिस्पर्शनेवि० भद्रंकर्णेभिःशृणु० २ शंनइंद्राग्नीइतिवसिष्ठोविश्वेदेवास्त्रिष्टुप् भूमि-
स्पर्शने० शंनइंद्राग्नीभवता० ३ स्तुषेजनमित्यस्यऋजिश्वाविश्वेदेवास्त्रिष्टुप् भूमिस्पर्शने० स्तुषेजनंसुव्रतंनव्यसीभिः० ४ क
यानइतितृचस्यवामदेवइंद्रोगायत्री भूमिस्पर्शने० कयानश्चित्रआ० ५ कस्त्वासत्यो० ६ अभीषुणः सखी० ७ स्योनापृथिवीत्यस्य-
मेधातिथिर्भूमिर्गायत्री भूमिस्पर्शने० स्योनापृथिवि० ८ ततोवत्सतरींगुरवेदत्वाईश्वरार्पणंकृत्वातंडुलभिक्षापूर्वकमुपनयनव
द्विवैवब्रह्मौदनहोमंकुर्यात् तत्रमहानाम्न्यध्ययनांगभूतमनुप्रवचनीयहोमंकरिष्यइतिसंकल्प्याघारावाज्येनेत्वंतेसदसस्पतिं-
महानाम्नीः ऋषींश्चचरुणाशेषेणेत्यादिपूर्णपात्रनिधानांतेकृतेभैक्षतंडुलानांतूष्णींनिर्वापाधिश्रपणांतेशृतोब्रह्मौदनइतिनिवे-

दयेत् ततोगुरुः शिष्येणान्वारब्ध आज्यसंस्काराद्याघारांतं कृत्वा सदसस्पतिमित्यस्य काण्वोमेधातिथिः सदसस्पतिर्गायत्री म-
हानाम्न्यध्ययनगस्मृतानुप्रवच नीयहोमेवि॰ ओंसदसस्पतिमद्भुतं॰ सदस्पतये॰१ महानाम्नीभ्यः स्वाहा महानाम्नीभ्य इदं॰२ ऋषिभ्यः
स्वाहा॰ ऋषिभ्य इदं॰३ इत्यवदानधर्मेण तिस्र आहुतीर्हुत्वा कर्मशेषं समाप्य चरुशेषेण ब्राह्मणान् भोजयित्वा ततोभुंजीतेति महानाम्नी
व्रतम् अथ महाव्रतम् उदगयनादिकाले प्रथम होमांते पूर्ववज्जाते संवत्सरमहाव्रतमाचरेति प्रेषितेन बटुना संवत्सरं व्रतेकृ
ते ग्रामाद्बहिः शुचिदेशे प्रागग्रदर्भेषु प्राङ्मुखउपविशेत् शिष्यो विधिवदभिवादनपूर्वकं महाव्रतं भो अनुब्रूहीति वाचा वदेत् अ
थतं प्राङ्मुखमुपवेश्य अथ महाव्रतमित्याद्यारण्यकं त्रिर्ब्रूयात् शिष्योपि त्रिः पठित्वा पूर्ववन्मंत्रद्वयेनादित्यमीक्षेत नतृतीयेनसंभारा
न् ततः पूर्ववद ग्नइळेत्यादिभिर्भूमिस्पर्शनं ततः शिष्यकर्तृकनिवेदनांतमाचार्यकर्तृकश्च होमः पूर्ववन्महानाम्नीभ्यः स्वाहेत्यस्य
स्थाने महाव्रताय स्वाहेत्याहुतिः शेषं महानाम्नीवत् इति महाव्रतम् अथोपनिषद्व्रतम् सर्वं महाव्रतवत्संवत्सरमुपनिषद्व्र
तं चरेति बटुं प्रति प्रैषः उपनिषदं भो अनुब्रूहीति तदुक्तिः अनुप्रवचनीयहोमे उपनिषदे स्वाहेति मध्यमाहुतिः आचार्याभावेशि
ष्यः स्वयमेव महाव्रताद्यध्ययनादिकं कुर्यादिति पारिजाते व्रतकालीनश्रवणेनैवाध्ययनसिद्धिरिति तदाशयः अतो महानाम्नीश्र
वणोत्तरमध्ययनमाचार्याधीनमेव त्रयाणामध्ययनं श्रवणोत्तरं पूर्वमधीतवद्भिः फाल्गुनमारभ्य श्रावणीपर्यंतं कर्तव्यं अधीपू-

पूर्वैरुक्तः पौषीमारभ्यश्रावणीपर्यंतमिति कालनियमउक्तः सूत्रकृता । इत्युपनिषद्व्रतम् अथगोदानव्रतम् तत्रजन्मतः षोडशेवर्षे
चौलार्हतिथ्यादिकालेतद्वदेवकार्यम् अस्यब्रह्मचारिणोगोदानिकव्रतंकरिष्यइतिसंकल्पः तदंगगणेशपूजनादिनांदीश्राद्धांतेऽग्निप्र-
तिष्ठापनादिनांकेसंस्कार्योपवेशनं मातुरुत्तरतोबटुः तदुत्तरतस्तदान्वारब्ध आचार्यआज्यभागांतंकृत्वाशीतोष्णजलानयनादिकु-
र्यात् अदितिःश्मश्रूणिवपत्वित्यूहितमंत्रेणवामश्मश्रुदेशमारभ्यप्रदक्षिणंश्मश्रूणामेवत्रिःछेदनंदक्षिणोत्तरश्मश्रुभागयोरेवंकु
शपवित्रनिधानादीनिसप्तच्छेदनानिसकुशश्मश्रूणामेवछेदनादिगोमयनिधानांतंक्षुरावमार्जनमंत्रेवप्तावपसिश्मश्रूणि शुंधिशि
रोमुखंमास्यायुरित्यूहः नापितप्रैषेविशेषः अक्षण्वन्कुशलीकेशश्मश्रुलोमनखान्युदकसंस्थानिकुर्विति नापितस्ताभिरद्भिः
श्मश्रूणामुदकसंस्थंवपनंकृत्वातथैवशिरसिकेशानामुपपक्षादिलोम्नांवपनंनखनिकृंतनंचकुर्यात् ततःस्नातंबटुंदक्षिणतउपवे
श्यहोमशेषंसमाप्यपात्रदानांतेगुरुणाकृतेहःशेषंवाग्यतोबटुस्तिष्ठन्नेवनयेत् संध्यावंदनांतेगुरोरंतिकेवरंददामीतिवाचंविसृज्यगो
मिथुनंदक्षिणांदद्यात् गोमिथुनंवरंददामीतिजयंतः ततःपरेद्युर्गुरुणागोदानव्रतमाचरेत्युक्तः केशादिधारणंकुर्वन्संवत्सरं-
ब्रह्मचारिव्रतंकुर्यादितिगोदानव्रतम् अथसमावर्त्तनम् तत्रयाज्ञवल्क्यः गुरवेतुवरंदत्वास्नायीततदनुज्ञया वेदव्रतानि
वापारंनीत्वाह्युभयमेवचेति वरस्वरूपंमनुः स्नास्यंस्तुगुरुणाज्ञप्तःशक्त्यागुर्वर्थमाचरेत् क्षेत्रंहिरण्यंगामश्वंछत्रोपानहमंततः

सं॰कौ॰
१६४

धान्यंवासांसिशाकंवागुरवेप्रीतिमावहन्निति प्रीतिमितिएतेषुमध्येयदेवगुरोःप्रियंतदेवदद्यादित्याशयः दानमंतरेणैवगुरोःप्रीताव-
नुज्ञयैवसमावर्त्तनंकुर्यादित्यपिसूच्यते अतएवोक्तंसंग्रहे तेनोक्तंचतथाकृत्वास्नानंशिष्यःसमाचरेत् अलमर्थेनमेवत्सत्वद्गुणै
रस्मितोषितः गृहान्गत्वानुजानामीत्यनुज्ञातोथवाचरेदिति छत्रोपानहोःसहितयोर्दानं द्वंद्वोपादानात् वासांसित्रीणि गुरुप्री
त्यर्थमेतद्दानंनविद्यानिष्क्रयः एकमप्यक्षरंयस्तुगुरुःशिष्येनिवेदयेत् पृथिव्यांनास्तितद्द्रव्यंयद्दत्वाह्यनृणीभवेदिति अश्वप्रति
ग्रहेतन्निष्क्रयस्यषष्ठांशंद्वादशांशंवाब्राह्मणायदत्वाहिताग्निःप्राजापत्येष्टिंकुर्यात् गृह्याग्निनाप्राजापत्यचरुं अनग्निंप्रत्यरुणस्मृ
तौ अश्वंपरिग्रहंकृत्वाचरेच्चांद्रायणत्रयम् लक्षत्रयंवागायत्र्याजपेद्विद्वान्समाहितः त्रिगुणंवाचयेद्वेदंशतंविप्रांश्चभोजयेदि
ति ब्राह्मणभोजनमुक्तोपायत्रयेप्रत्येकंसंबध्यते वेदमित्यनेनत्रिविधस्नातकउच्यते तत्रवेदशब्देनसार्थवेदाधिगमउच्यते वे
दंवेदौतथावेदान्वेदान्वाचतुरोद्विजः अधीत्यचाधिगम्यार्थंततःस्नायाद्द्विजोत्तमइति माधवीयेकौर्मोक्तेः वेदानितित्रित्वाभि
प्रायं उक्तश्चार्थज्ञानंविनाध्ययमात्रेणसमावर्त्तनाधिकाराभावः प्रथमसूत्रएवजैमिन्यादिभिः अतश्चविद्यास्नातकोभयस्ना
तकयोरुभयोरपिस्नानात्पूर्ववेदार्थज्ञानमावश्यकमितिसिद्धम् व्रतशब्देनचउपनयनव्रतसावित्रीव्रतवेदव्रतोपनिषद्व्रतान्युच्यं
तेइतिमाधवादयः तत्रोपनयनानंतरंत्रिरात्रंद्वादशरात्रंसंवत्सरंवामेधाजननात्पूर्वविहितमक्षारालवणाशित्वादिरूपंगृह्येप्रसिद्ध

१६४

सुपनयनव्रतं तदुत्तरमुपाकर्मांतं अग्निकार्यादि ब्रह्मचारिधर्मानुष्ठानं सावित्रीव्रतं तदुत्तरं वेदाध्ययनं कुर्वतायत्तदनुष्ठानं तद्वेदव्रतं
वेदाध्ययनांगभूतसंख्यापरिच्छिन्नवर्षसाध्यत्वात् तत्संख्यागतविकल्पमाह मनुः षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम्
तदर्द्धपादिकं वापि ग्रहणांतिकमेव वेति स्पष्टीकृतमेतद्दीपिकायाम् प्रतिवेदब्रह्मचर्यं वर्षाणि द्वादशाथवा षट्त्रीणि ग्रहणांतं वे
ति वेदाब्दव्रतांते आरण्यकव्रतानीति स्मृत्यर्थसारे आश्वलायनसूत्रस्य वृत्तिभाष्यकाराभ्यां तु द्वादशवर्षादिपरिच्छिन्नं वेदाध्यय-
नांगभूतं ब्रह्मचर्यमेव व्रतं तादृशब्रह्मचर्येण यो वेदं समापयति स विद्याव्रतस्नातकः तादृशब्रह्मचर्यसमाप्तेपि यस्य वेदसमाप्तिर्न
जाता स व्रतस्नातकः तादृशब्रह्मचर्यसमाप्तेः प्रागेव यस्य वेदसमाप्तिर्जाता स विद्यास्नातक इत्युक्तम् अस्मिन्मते च त्रिविधमपि-
स्नातकत्वं तादृशब्रह्मचर्यसमाप्त्युत्तरकालीनाभिमतमहानाम्न्यादिव्रताधीनं न भवति भवति तु माधवादिमते मतद्वयेपि व्रत-
स्नातकेनापि उपनिषद्विशेषाध्ययनं कृत्वैव समावर्त्तनं कर्त्तव्यम् तेन विना तादृगधिकाराभावादित्युक्तं श्रुत्यैव नेदमनधीयन् स्ना
तको भवतीति अत एव विद्यांते गुरुमामंत्र्येति सूत्रं स्नातकत्रैविध्यानुरोधेन वेदांत्यभागरूपोपनिषदध्ययने सत्येव समावर्तनाधि
कार इत्याशयेनैव व्याख्यातं वृत्तिकृता आश्वलायनशाखिविषयं चैतत् क्लृप्तसंबंधनियमे लाघवात् येन वेदभागमनधीत्यापि स
मावर्तनं कृतं तदुत्तरमपि अध्ययनांगनियमविशिष्टेन तदध्ययनं कार्यम् समावृत्तो ब्रह्मचारिकल्पेनेति सूत्रात् स्वाध्यायकाले वि

विहितायेधर्मामधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयस्तैर्युक्तोधीयीतसमावृत्तः मेखलादयस्तुनभवंति अस्वाध्यायध
र्मत्वादितिवृत्तिकृदुक्तेश्चक्रतोभार्योपगमनंतुतेनापिकार्यंजायोपेयेत्येकेप्राजापत्यंतदितिसूत्रस्यवृत्तिकृतैवतादृशाशयेनव्या-
ख्यानात् अधीत्यवेदंस्नानमितिहिरण्यकेशीसूत्रव्याख्यावसरेमातृदत्तः अतिक्रांतेप्युक्तकालेसतिसंभवेधीत्यैवस्नातव्यम्
अत्यंताशक्तावेवव्रतमात्रेणस्नातव्यमितिव्रतमात्रस्नानंगर्हितमितिच कामंतुयाज्ञिकस्येतिसूत्रव्याख्यावसरेकर्कः यज्ञंवेदे
तियाज्ञिकस्तस्यकामंस्नानंभवति षडंगमर्थतोनधिगम्याधीति तथाहरिहरः मंत्रब्राह्मणात्मकंवेदमधीत्यावबुध्यस्नायादि
त्येकःपक्षः सांगवेदमधीत्यावबुध्यस्नायादित्यपरःपक्षः ग्रंथमात्रमधीत्ययज्ञविद्योंवाप्यस्यस्नायादितितृतीयः यज्ञविद्या
विरहेणग्रंथमात्रेधीतेनस्नायादितिनिषेधइतिच संहितापदवाच्यमंत्राध्ययनेनुकूल्यांतराणिशांखायनः आद्योत्तमेकामसू
क्तेवानुब्रूयादृषेरनुवाकस्यवैकैकांसूक्तादाविति एषाप्रभसतिरितिकामंसूक्तादावाचार्यइति ऋषिदृष्टस्यमंत्रजालस्यानुवाक
स्यवाआद्योत्तमेसूक्तेअनुब्रूयात्प्रतिसूक्तंप्रथमामृचंवायथेच्छंकतिपयसूक्तानामेवप्रथमामृचंवेत्यर्थः तच्चसमावर्तनेब्रह्म
चारिव्रतलोपप्रायश्चित्तंकृत्वैवकर्त्तव्यंतदाहपारिजातेबौधायनः शौचाचमनेत्यादीनिब्रह्मचारिव्रतान्यनुक्रम्यतल्लोपज
नितसकलदोषपरिहारार्थंब्रह्मचारीकृच्छ्रत्रयंचरेत् महाव्याहृतिहोमंचकुर्यात् प्रथमंव्यस्तसमस्तव्याहृतिभिश्चतस्र

आज्याहुतीर्हुत्वा भूरग्नयेचेति महाव्याहृतिभिश्चतसृभिर्हुत्वा यज्ञंपाहिविभावसोस्वाहा सर्वंपाहिशतक्रतोस्वाहा पुनरूर्जानिवर्त्त-
स्वपुनरग्नइहायुषा पुनर्नःपाह्यंसःस्वाहा सहरय्यानिवर्त्तस्वाग्नेपिन्वस्वधारया विश्वप्स्न्याविश्वतस्परिस्वाहा पाहिनोअ-
ग्नएनसेस्वाहा पाहिनोविश्ववेदसेस्वाहा व्याहृतिभिष्षिरंतेचतस्र आहुतीर्जुहुयादिति केचित्पाहिनोअग्नइत्याहुतिद्वयांतेयज्ञंपा-
हीत्याहुतिचतुष्टयंपठंति एतदल्पधर्मलोपे बहुधर्मलोपेतुपारिजातएवकृच्छ्रविधाने तंवोधियाजपेन्मंत्रंलक्षंचैवशिवालये ब्रह्म
चारीस्वधर्मंचन्यूनंचेत्पूर्णमेवतदिति न्यूनंचेज्ज्ञानीयाज्जपेत् तत्तेनजपेनन्यूनमपिधर्मंपूर्णमेवजानीयादित्यर्थः यत्तुस्मृत्यर्थ
सारे महानाम्न्यादिव्रतेषुलुप्तेषुतारतम्येनत्रीन्षड्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतमारभेतेति तद्व्रतस्नातकस्यविद्याव्रतस्ना-
तकस्यवामाधवादिमते वृत्तिकारादिमतेत्रिविधस्यापिस्नातकस्यारब्धव्रतस्यमध्येप्येषेज्ञेयं पुनर्व्रतमारभेतेतिवचसस्तथैव-
साफल्यात् विद्यास्नातकस्यतुनव्रतलोपप्रायश्चित्तंस्नानाधिकारसित्यर्थमपेक्षितंमतद्वये इतिसंस्कारकौस्तुभेसमावर्त्तना
धिकारः अथैतत्कालनिर्णयः आश्वलायनः विद्यांतेगुरुमर्थेननिमंत्र्यकृतानुज्ञातस्यवास्नानमिति पारिजाते-
श्रीधरीये वागीशादितिसौम्यपौष्णादिनकृन्मैत्रोत्तरारोहिणीगोविंदेषुशशांकभानुगुरुविच्छुक्रांशवारादिषु रिक्तांपर्वतथाष्ट-
मींप्रतिपदंमेषंचकीटंहरिंहित्वासुन्दियुतेष्टमेऽन्हिविमलेकुर्यात्समावर्त्तनमिति पुष्यपुनर्वसूमृगरेवती हस्तानुराधोत्तरात्र

यरोहिणीश्रवणेष्वेकादशनक्षत्रेषु सोमादित्यबृहस्पतिबुधशुक्रवारेषु तदीयांशहोरास्फ रिक्तात्रयपर्वद्वयाष्टमीप्रतिपद्भिन्नति-
थिषु मेषवृश्चिकसिंहभिन्नलग्नेषु अष्टमस्थानेग्रहविशेषाक्रमणदोषशून्येऽन्हि विमले गुरुशुक्रास्तादिदोषशून्य इत्यर्थः तथा
चमदनरत्नेनारदः अथोत्तरायणेजीवशुक्रयोर्दृश्यमानयोः द्विजातीनांगुरोर्गेहान्निवृत्तानांयथात्मनाम् मित्रोत्तरादितीज्यां-
त्यहरींदुरविधातृषु तेषु अर्केंद्वज्ञार्यशुक्राणांवारलग्नांशकेषुच अथवाबीजनक्षत्रवारलग्नांशकेष्वपि प्रतिपत्पर्वरिक्तारव्याम
ष्टमींचदिनक्षयम् हित्वान्यदिवसेकार्यंसमावर्त्तनमंडनमिति बीजनक्षत्राणि बीजवापनक्षत्राणि स्फदर्शनरक्तेउदगयनेकृत
समावर्त्तनस्यदक्षिणायनेविवाहप्रसक्तौ अनाश्रमीनतिष्ठेतेति निषेधातिक्रमापत्तेः आश्वलायनेनचौलविकारेगोदानेमासो
दगयनस्यपुनर्विधानेन तद्विकारेसमावर्त्तनेउदगयननियमाभावज्ञापनात् बौधायनेनापिसमावर्त्तनेचौलविकारत्वेनैवसुक्लप
क्षमासोपुनस्तन्नतद्विधानेनोदगयनानियमज्ञापनात् नसमावर्त्तनेउदगयननियमइत्याह हिरण्यकेशीनांतुन्नित्रायांविशारव
योर्वैतिनक्षत्रद्वयमधिकसुक्तम् इतिसमावर्त्तनकालः आश्वलायनः अथैतान्युपकल्पयीतसमावर्त्यमानोमणिंकुंड
लेवस्त्रयुगंछत्रमुपानद्युगंदंडंस्रजमुन्मर्द्दनमनुलेपनमांजनमुष्णीषमित्यात्मनेचाचार्यायचयद्युभयोर्नविंदेताचार्यायैवेति
अथप्रयोगः पूर्वेद्युस्तद्दिनएववादेशकालौसंकीर्त्यममशौचाचमनादिब्रह्मचर्यनियमलोपजनितसंभावितदोषपरिहारे

णसमावर्तनाधिकारसंपादनद्वारा श्रीपरमेश्वरप्रीत्यर्थं आज्यहोमपूर्वकं कृच्छ्रत्रयमाचरिष्ये इति संकल्प्य स्थंडिलसंस्काराद्यग्नि-
ध्यानांते ऽन्वाधानं कुर्यात् चक्षुषी आज्येनेत्यंते अत्र प्रधानं अग्निं वायुं सूर्यं प्रजापतिं च तस्नो देवताः चतसृभिराज्याहुतिभिः अग्निं
पृथिवीं महांतं एकयाज्याहुत्या वायुमंतरिक्षं महांतमेकयाज्याहुत्या आदित्यं दिवं महांतमेकया० चंद्रमसं नक्षत्राणि दिशो महां
तमेकया० हिरण्यमाज्येन० विभावसुं० शतक्रतुं० अग्निं० अग्निं० अग्निं० वायुं सूर्यं० प्रजापतिं चेत्यष्टौ देवता एकैकयाज्याहुत्या शे
षेणेत्यादि षट्पात्रासादनं प्रणीताप्रणयनांते आज्यस्य निर्वापादि बर्हिषि सादनांतं स्रुवसंमार्गश्च ततो ऽग्न्यर्चनाद्याज्यभागांते
व्यस्तसमस्तव्याहृतिभिश्चतस्र आहुतीर्हुत्वा ओं भूरग्नयेच पृथिव्यैच महतेच स्वाहा अग्नये पृथिव्यै महत इदं० भुवो वायवेचां
तरिक्षायच महतेच स्वाहा वायवेंतरिक्षाय महत इदं० स्वरादित्यायच दिवेच महतेच स्वाहा आदित्याय दिवे महत इदं० भूर्भुवः
स्वश्चंद्रमसेच नक्षत्रेभ्यश्च दिग्भ्यश्च महतेच स्वाहा चंद्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदं० पाहिनो अग्न एनसे स्वाहा अग्नय
इदं० पाहिनो अग्ने विश्ववेदसे स्वाहा अग्नय इदं० यज्ञं पाहि विभावसो स्वाहा विभावसव इदं० सर्वं पाहि शतक्रतो स्वाहा
शतक्रतव इदं० पुनरूर्जा निवर्तस्व पुनरग्न इहायुषा पुनर्नः पाह्यंहसः स्वाहा अग्नय इदं० सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया
विश्वप्स्न्या विश्वतस्परि स्वाहा अग्नय इदं० पुनर्व्याहृतिभिराहुतिचतुष्टयं हुत्वा कृच्छ्रप्रत्याम्नायत्वेन गोदानाद्यन्यतरच्चरित्वा-

स्विष्टकृदादि होमशेषं समापयेत् व्रतलोपनतु ष्टये प्रत्येकं गायत्र्या ष्टोत्तरशतमष्टाविंशतिमष्टौ वाज्याहुतीर्हुत्वा एकैकं कृच्छ्रं चरित्वा
पुनर्व्रतानि कुर्यादिति छन्दोगाः अस्मिन् विषये बौधायनीय गृह्यसूत्रे अन्यथा आम्नातं दृश्यते तद्यथा ब्रह्मचारिव्रतविपर्यासे मेखला
यज्ञोपवीतानां छेदने कृष्णाजिनस्याधारणे कमंडल्वधारणे दंडभंगे संध्यालोपे स्वाध्यायलोपे भिक्षाचरणलोपे शुश्रूषा शूद्रे एतेष्वा
न्येष्वानाम्नातेषु प्रायश्चित्तमग्निमुपसमाधाय संपरिस्तीर्य प्रायश्चित्तं जुहोति पाहिनो अग्न एनसे स्वाहा पाहि नो विश्ववेदसे स्वा
हा यज्ञं पाहि विभावसो स्वाहा सर्वं पाहि शतक्रतो स्वाहा पाहिनो अग्न एकया पाह्युत द्वितीयया पाह्यूर्जं तृतीयया पाहि गीर्भि
श्चतसृभिर्वसो स्वाहेति अथविवाहे चतुर्थे सद्यस्काल ब्रह्मचर्ये विछिन्ने प्रायश्चित्तानि व्याख्यास्यामश्चतुर्होता सारस्वतो होमो भव
तो दुर्गा मनस्वतीर्मिंदाहुतीर्महाव्याहृतीर्व्याहृतयश्च प्रायश्चित्तं जुहुयादिति व्याहृतिभिः पुरस्ताच्चोपरिष्टाच्च सानुक्रमणं यथा
पूर्वं करणं अविच्छिन्नं संततं भवति आम्नाते ष्वित्यंतरं प्रायश्चित्ते ष्वितिशेषः अत्र ब्रह्मचारी धर्मलोप प्रायश्चित्तं विवाहचतुर्थदि
न गत ब्रह्मचर्य व्रतभ्रंश प्रायश्चित्तं च प्रकृत्य आम्नातेन व्याहृतिभिः पुरस्ताच्चोपरिष्टाच्चेति सूत्रे णाद्विविध प्रायश्चित्तस्यापि उपक्रम
समाप्त्योर्व्याहृतिभिश्चतस्रश्चतस्र आहुतयो विहिता भवंति ततश्च ब्रह्मचारि धर्मलोपे त्रयोदशैव प्रधानाहुतयः सिद्धा भवंति
महानाम्न्यादिव्रतलोप प्रायश्चित्तपूर्वकं पुनः करणं तु विद्यास्नातकेन नैव कार्या इतराभ्यामपि आरब्धव्रतस्य मध्य एवैषविष

यमितिप्रागेवोक्तम्  अथसमावर्तनप्रयोगः  ब्रह्मचारीकृताग्निकार्यांतेनित्यक्रियोगुरवेसंतोषावहंद्रव्यंदत्वादेशकालौ
संकीर्त्यममगृहस्थाश्रमार्हतासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनंकरिष्यइतिसंकल्प्यगणेशपूजनादिनांदीश्राद्धांतंकुर्या
त् जीवसितृकश्चेत्पितुर्मात्रादीनुद्दिश्यश्राद्धंकुर्यात्  ब्रह्मचारिणोशक्तौतद्द्वारासंकल्पंकारयित्वापित्रादिस्तत्प्रतिनिधित्वेनता
नेवोद्दिश्यकुर्यात्  ततोयज्ञियस्यवृक्षस्याऽश्वत्थादेरैशानदिशिनिर्गतांशाखांआर्द्रांशुष्कांआर्द्रशुष्कांवायथायामंप्रादेशमितां
मात्तत्योपरिनिधायकरिष्यमाणसमावर्तनांगत्वेनत्रिभ्योब्राह्मणेभ्योभोजनपर्याप्तमन्नंगवातत्प्रत्याम्नायद्रव्येणवासहितंसंप्र
ददइत्येवंसंकल्प्योल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वाअग्निध्यानांतेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये आघारावाज्येनेत्यंतेत्रि
रग्निंपवमानंप्रजापतिमाज्येन अग्निमूर्ध्वंसमिधाविश्वान्देवान्दशसमिद्भिः शेषेणस्विष्टकृतमिध्मसन्नहनमित्यादिपूर्णपा
त्रनिधानांतेउत्तरतोग्नेर्दर्भेषुव्रीहियवमाषतिलैः पूरितानिशरावपात्राण्येकैकशः प्राक्संस्थान्यासाद्याग्नेःपश्चान्मातुरग्रेशमी-
पर्णयुक्तमेकंशरावमानडुहगोमययुक्तंचपरमासाद्यव्रीत्यादिपात्राणामुत्तरतस्ताम्रंक्षुरंशीतोष्णोउदकेनवनीतंदधिद्रप्सान्वा
मण्याद्येकादशद्रव्याणिचासादयति  ब्रह्मादक्षिणतएकविंशतिकुशपिंजूलानिधारयन्नास्ते  ब्रह्मचारीआघारांतेचोलवच्च
तस्रआज्याहुतीर्जुहुयात्  समावर्तनप्रधानाज्यहोमेविनियोगइतिविशेषः  ततोब्रह्माऽग्नेर्वोष्णोनवायउदकेनेहीतिचो

लवत्शीतोष्णेउदकेयुगपन्नीनीय नवनीतेनद भ्नावा तदेकदेशंपात्रांतरेमिश्रयित्वा ऽदितिः श्मश्रूणिवपत्वापउंदंतुवर्चसइति मंत्रेंत्रिरावर्तयन्वाश्मश्रुप्रदेशमारभ्यप्रदक्षिणंत्रिः क्लेदयित्वादक्षिणश्मश्रुप्रदेशेत्रीणिपिंजूलानिचौलवन्निधायसर्वैर्मंत्रैश्च तुर्थमित्यंतानिचशिखाछेदनानिकुर्यात् मंत्रेषुविशेषः ओषधेत्रायस्वमां स्वधितेमामाहिंसीः येनावपत्सविताक्षुरेण॰ तेनब्रह्माणोवपतेदंममायुष्मान्जरदष्टिर्यथास येनधाता॰ तेनमआयुषे॰ येनभूयश्च॰ तेनमआयु॰ वामभागेप्येवंभूतमंत्रै स्त्रीण्येवच्छेदनानि यत्क्षुरेणमर्चयता॰ वप्तावपसिश्मश्रूणि शुंधिशिरोमुखंममायुः प्रमोषीरिति॰ क्षुरावमार्जनेविशेषः अक्षण्वत्कुश लीकेशश्मश्रुलोमनखान्युदक्संस्थानिकुर्वितिप्रैषेविशेषः नापितःपूर्वविशिष्टोदकैःशीतोष्णैःश्मश्रुकेश लोमान्युदसंस्थानिवापयित्वातत्संस्थमेवनखनिकृंतनंकुर्यात् तस्मैव्रीह्यादिपात्रचतुष्टयंदत्वाकरंजफलंयदेकबीजंतत्पे षयित्वातेनांगोद्वर्तनंकुर्यादितिवृत्तिकारः करंजफलंकौशेयंवैक बीजंतत्पेषयित्वेतिजयंतः ततःपूर्वावशिष्टाभिःशीतो ष्णाभिरद्भिःस्नात्वाहिरण्यस्याग्नेर्वातिकंगत्वाशुवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् अनेनमंत्रेणैकंवस्त्रंप रिधायैतदावृत्त्याद्वितीयंप्रावरणांतंकुर्याद्द्विवचनस्यदेवतापरत्वादितिवृत्तिकृद्द्विवचनलिंगत्वान्मंत्रः सकृदेवभवतीतिजयं तः पुनर्हिरण्यदक्षिणकरांगुल्यांजनमादाय अश्मनस्तेजोसिचक्षुर्मेपाहीतिमंत्रमावर्तयन्क्रमेणसव्यदक्षिणेचक्षुषी

आंजयीत अश्मनस्तेजोसिश्रोत्रंमेपाहीत्यावर्त्तयन्क्रमेणदक्षिणसव्यश्रोत्रयोः कुंडलेआबध्नीत कुंकुमाद्यनुलिप्ताभ्यां-
मुखमग्रेनु लिप्य पश्चादि तरांगान्यनुलिप्य ॐ अनार्तास्यनार्तोहंभूयासमितिशिरसिस्रजंबध्नीत नमालेत्युक्तांमालेतिके
नाप्युक्ते स्रगित्यपिधाय्य बध्नीतदेवानांप्रतिष्ठेस्थः सर्वतोमापातं मंत्रांतेयुगपदुपानहावास्थाय दिवश्छदनासीतिछत्रंधृ
त्वा वेणुरसिवानस्पत्योसिसर्वतोमापाहीतिवैणवंदंडमादाय आयुष्यमितिसूक्तेनसौवर्णमणिंकंठेबध्नीयात् आयुष्यमि-
तिसूक्तस्यसनकादयऋषयः हिरण्यंदेवता अनुष्टुबादीनिच्छंदांसि कंठेमणिधारणेविनियोगः आयुष्यंवर्चस्यंरायस्पोष
मौद्भिदं इदंहिरण्यंवर्चस्वजैत्रायाविशतादिमाम् उच्चैर्वाजिपृतनाषाट्सभासाहंधनंजयम् सर्वाःसमग्राऋद्धयोहिरण्ये
स्मिन्समाहिताः शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ तेनमांसूर्यत्वचमकरंपूरुषुप्रियं सम्राजंचविराजंचाभिष्टिर्याचमे
ध्रुवा लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज अग्नेःप्रयातंपरियद्धिरण्यममृतंजज्ञेअधिमर्त्येषु यएनद्वेदसइदेनमर्ह-
तिजरामृत्युर्भवतियोबिभर्ति यद्वेदराजावरुणोयदुदेवीसरस्वती इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे नतद्रक्षांसिनपिशाचा
स्तरंतिदेवानामोजःप्रथमजंह्येतत् योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः य
दाबध्नंदाक्षायणाहिरण्यंशतानीकायसुमनस्यमानाः तन्नआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् घृतादुल्लु

संमधुमत्कृवर्णंधनंजयंधरुणंधारयिष्णु ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय प्रियंमाकुरुदेवेषुप्रियंराजसु
माकुरु प्रियंविश्वेषुगोप्त्रेषुमयिधेहिरुचारुचं अग्निर्येनविराजतिसूर्योयेनविराजति विराड्येनविराजतितेनास्मान्ब्रह्मण
स्पतेविराजसमिधंकुरु इतिसूक्तांतेकंठेमणिंबध्नीयात् ततउष्णीषंशिरसिप्रादक्षिण्येनसंवेष्ट्य आचारप्राप्तंबहिर्गमनादि-
उपानहौसंत्यज्यउपरिनिहितांसमिधमादायतिष्ठन्नेववक्ष्यमाणमंत्रांतेस्वाहाकारेणाग्नावादध्यात् स्मृतंचमेअस्मृतंचमेतन्मउ-
भयव्रतम् निंदाचमेअनिंदाचमेतन्मउभयव्रतम् विद्याचमेअविद्याचमेतन्म॰ श्रद्धाचमेअश्रद्धाचमे॰ प्रज्ञाचमेअप्रज्ञाचमेत
न्म॰ इष्टंचमेअनिष्टंचमेतन्म॰ दत्तंचमेअदत्तंचमेतन्म॰ अधीतंचमेअनधीतंचमेतन्म॰ कृतंचमेअकृतंचमेतन्मउ॰ सत्यंचमेअस-
त्यंचमेतन्म॰ श्रुतंचमेअश्रुतंचमेतन्म॰ व्रतंचमेअव्रतंचमेतन्मउभयव्रतम् यदग्नेसेंद्रस्यसप्रजापतिकस्यसऋषिकस्यसऋषि-
राजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्यस्यसमनुष्यराजन्यस्यसाकाशस्यसातीकाशस्यसानूकाशस्यसप्रतीकाशस्य
सदेवमनुष्यस्यसगंधर्वाप्सरस्कस्यसहारण्यैश्चपशुभिर्ग्राम्यैश्चयन्मआत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिदमहमग्नेसर्वव्रतोभ
वामिस्वाहा अग्नयइदं॰ अथोपविश्य ममाग्नइतिसूक्तस्यविहव्यऋषिः विश्वेदेवादेवताः अंत्याजगती आद्यास्त्रिष्टुभः
समिदाधानेविनियोगः वक्ष्यमाणदशस्वाहाकारसमकालंदशसमिधोजुहुयात् ममाग्नेवर्चो॰ मत्यंनमंतां॰ जयेमस्वाहा

ममदेवा॰ ममांतरिक्ष॰ अस्मिन्स्वाहा मयिदेवाद्रविण॰ देव्याहोता॰ स्ववीराः स्वाहा मर्त्यंयजंतु॰ एनोमानि॰ तानः स्वाहा देवीः ष-
ळुर्वी॰ माहास्महि॰ राजन्स्वाहा अग्नेमन्युं॰ प्रत्यंचोयं॰ नेशत्स्वाहा धाताधातृणां॰ इमंयज्ञ॰ न्यर्थात्स्वाहा उरुव्यचानो॰ सनः प्र
जायै॰ दाः स्वाहा येनः सपत्ना॰ वसवोरुद्रा॰ मक्रन्स्वाहा अर्वांचमिंद्र॰ इमंनो॰ मदिनंत्वास्वाहा १० सर्वत्रविश्वेभ्योदेवेभ्यइ
दं॰ प्रत्यृचग्रहणंव्याख्यातमित्यत्र प्रकरणेवृत्तिकृतोक्तम् गृहप्रवेशनीयहोमप्रकरणेतु प्रत्यृचग्रहणव्याख्यावसरे स्वाहाका
रंपठन्जुहुयादित्युक्तम् जयंतेनापिऋगंतेस्वाहाकारंकुर्वन्दशसमिधआदधातीत्युक्तम् कारिकायांतु ममाग्नेदशभिर्हुत्वा
स्वाहाकारमृगंततः परिषेचनपर्यंतंकुर्यात्स्विष्टकृदादिकमित्युक्तम् अत्रापिऋगंतइत्यनंतरंपठन्नित्येवाध्याहारः वृत्त्यादि-
मूलानुसारात् ऋगंतस्वाहाकारयोरविच्छेदाच्च एवंसत्यग्नावादध्यात्पश्चात्स्वाहाकारमुच्चारयेदितिवदन्त्योनमोमान्येभ्यः वि
भूतिधारणांते कृतसमावर्त्तनसांगतासिद्ध्यर्थंदशब्राह्मणान्भोजयिष्यइतिसंकल्पयेत् असंभवेत्रीनितिवा ततईश्वरार्पणंकु-
र्यात् कौपीनंमेखलांविसृज्यकेशश्मश्रुलोमनखान्यपराजितायांदिशिनिखनेत् यत्रस्वस्यमधुमर्कादिनापूजासंभाव्यतेतत्र
समावर्त्तनानंतरंरात्रौवासः कर्तव्यः तदनंतरंव्रतस्वीकारः दास्यंतिमधुपर्कंयेतत्रैतांरजनींवसेत् ततः संकल्पयेन्नक्तंनस्नामी-
त्युत्तराण्यपीतिकारिकोक्तेः तत्रैतांरात्रींवसेत्. अथव्रतानि ननक्तंस्नायादित्येवमादीन्यन्यान्यप्यत्रोत्यानीतिजयंतोक्तेश्च

अतश्चस्मृत्युक्तव्रतवत्सूत्रोक्तान्यपिपुरुषार्थान्येवनसमावर्तनांगानीतिभ्रमितव्यं समावर्तनभिन्नदेशकालत्वेन कारिकाकारा
दिभिः प्रतिपादनात् अनंगभूतवासप्राय:पाठात् आद्यंतयोस्तस्येति महद्भूतंस्नातको भवतीतिविज्ञायतइतिसूत्रकृदुक्त्यास्ना
तकपुरुषार्थप्रतीतेश्च स्नातकशब्दस्यवृत्तिकृतोगृहस्थपरत्वेनाभिप्रेतत्वप्रतीतेश्च नसंशयमभ्यापद्येतेत्यस्य नसंशयंप्रपद्येते
त्यनेनैकमूलत्वलाघवाच्च अतोशक्तः सूत्रोक्तान्येवव्रतानिकुर्यात् बह्कल्पंवास्वगृह्योक्तमितिशास्त्रात् इत्थंचसंकल्पान्कुर्यात्
ननक्तंस्नायामितिननग्नःस्नास्यामिननग्नांस्त्रियमीक्षिष्ये अन्यत्रमैथुनाद्धर्षतिनधाविष्येनवृक्षमारोहिष्येनकूपमवरोहिष्ये नबा
हुभ्यांनदीस्तरिष्येनसंशयमभ्या पत्स्येइति नदीग्रहणंतडागाद्युपलक्षणं बाहुग्रहणंतुविवक्षितमितिहरदत्तादयः स्मृति-
व्याख्यातारः शक्तस्त्वन्यान्यपि यथोक्तानिमाधवीयेकौर्मे यज्ञोपवीतद्वितयंसोदकंचकमंडलुम् छत्रंचोष्णीषममलंपादुकेवा
प्युपानहौ रौक्मेचकुंडलेवेदं कृत्तकेशनखः शुचिः स्वाध्यायेनित्ययुक्तःस्याद्बहिर्माल्यंचधारयेत् शुक्लांबरधरोनित्यंस्रग्गंधःप्रि
यदर्शनः नजीर्णमलवद्वासाभवेत्तुविभवेसति नरक्तमुल्बणंचान्य धृतंवासोनकंथिकामिति नित्यमित्यस्यप्रत्येकमन्वयः
अतोवेदमित्यंतेषु नित्यंधारयिष्येइतिप्रत्येकंसंकल्पः वेदोदर्भमुष्टिः एवंबहिर्माल्यंधारयिष्येरक्तंवासोनधारयिष्ये इत्येवंरक्ता
दिकंथांतेषुसंकल्पः माल्यंनिर्माल्यंस्वशरीरादुत्थितंचंदनपुष्पादिनपुनर्धारयेत् किंतुबहिस्त्यजेदित्यर्थः नधारयेदितिपाठेतुशि

रवावेष्टनादिरूपेण पुष्पमालां न धारयेदित्यर्थः कृत्तेत्यादिषु शुक्लेत्यादिषु च प्रथमांतेषु षट्सु प्रत्येकं स्यामित्यन्वयेन संकल्पः कृत्तं कर्त्तनेन ह्रस्वतां नीतं न तु वपनेन न समावृत्ता मुंडयेरन्निति आपस्तंबोक्तिसंवादात् केशग्रहणं श्मश्रूपलक्षणार्थं क्लृप्तकेशनखश्मश्रुरिति मनूक्तिव्याख्यावसरे क्लृप्तं कर्त्तनात् ह्रस्वतां नीतं न तु मुंडितमिति नारायणादिभिर्व्याख्यानाच्च विभवे सति जीर्णमलवद्वासा न स्यामिति संकल्पः उल्बणं शरीरपीठावहं बहुमूल्यं वा एवं याज्ञवल्क्येन न स्वाध्यायविरोध्यर्थमीहेतेत्यादौ दासगोपालकुलमित्रार्धसीरिणः भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेदित्यं तेग्रंथे उक्तव्रतानुसारिसंकल्पा अपि शक्तेन कार्याः तत्तपश्चेति चकारेण कुंभकारस्यापि संग्रहः अत्र शूद्रविशेषस्य भोज्यान्नत्वोक्तिरत्यंतापद्विषयेति हरदत्तः कंदुपक्वं स्नेहपक्वं पायसं दधिसक्तवः एतानि शूद्रात् ग्राह्याणि भोज्यानि मनुरब्रवीदिति विशेषवचनात् विशेषविषये वसेति नारायणः कलौ तु नैतद्विषयचिंतायाः प्रयोजनम् शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणां भोज्यान्नतेति कलिवर्जमध्ये पाठादिबोध्यम् एवं मनुनापि स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत् इत्युपक्रम्य एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती स्नातकव्रतकल्पश्च सत्यव्रतकरः शुभः अनेन विप्रो वृत्तेन वर्तयन् वेदशास्त्रवित् व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते इत्यनेन ग्रंथोक्तानि व्रतान्यपि शक्तेन विप्रेणानुष्ठेयानि कल्प इति विप्र इति च पदद्वयात् यत्तु तत्रैव पठितं न लंघयेद्वत्सतंत्रीं न प्रधावेच्च वर्षति न चोदके निरीक्षेत स्वं रूपमिति धारणा नाश्नीयाद्भा

र्ययासार्द्धमिति तत्रवत्सतंतीगोवत्सबंधनदामेतिनारायणः नोपरिवत्सतंतींगच्छेदितिगौतमोक्तिव्याख्यावसरेवत्सशब्दोगो-
जातेरुपलक्षणमितिहरदत्तः सार्द्धमेकयात्रेइतिनारायणः एकस्मिन्कालेइतिव्याख्यांतरंहरदत्तः एतदपवादंमाधवीयेंऽगिराः
ब्राह्मण्यासहयोऽश्नीयादुच्छिष्टंवाकदाचन नतस्यदोषमिच्छंतिनित्यमेवमनीषिणः इतितद्विवाहविषयमितिस्मृत्यर्थसारादयः
दोषाल्पत्वपरमितिमाधवः यच्च नशूद्रायमतिंदद्यान्नोच्छिष्टंनहविःकृतम् नचास्योपदिशेद्धर्मंनचास्यव्रतमादिशेत् तत्रमतिर्नी
तिशास्त्रादिविषया धर्माद्युपदेशनिषेधस्यपृथगाम्नानात् गृहस्थः शूद्रायनोच्छिष्टंदद्यादितिविवक्षितम् उच्छिष्टमन्नंदातव्यंशू
द्रायागृहमेधिने गृहस्थायतुदातव्यमनुच्छिष्टंदिनेदिनेइतिव्याघ्रवचनादितिहरदत्तः शूद्रायोपदेशनिषेधोपिसाक्षादुपदेशविष
यः श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतइतिब्राह्मणद्वारकोपदेशस्वीकारविधानात् नचेदंवक्तारंप्रतिब्राह्मणद्वारकवचना-
भ्यनुज्ञाशास्त्रम् तमध्यापयीतएतपान्नाद्यकामंयाजयेदितिवत् प्रयोजकव्यापारेणप्रयोज्यव्यापारंलक्षयित्वाशूद्रंप्रत्येवब्राह्म
णद्वारकश्रवणविध्यभ्युपगमात् एवंगौतमीयनवमाध्यायेपिउक्तान्यनुक्तानिउक्तव्रतभिन्नानिस्नातकव्रतानितान्यपिशक्तेनानुष्ठे-
यानि यथा नरक्तमुल्बणमन्यधृतंवासोबिभृयात् नस्रगुपानहौ निर्णितमशक्तौ नतिष्ठन्नुद्धृतोदकेनाचामेत् नशूद्राशुच्येकपा
णयावर्जितेन नाकल्पांनारीमभिगच्छेत्पादपादधावनासंदिस्थभोजनानिवर्जयेत् नप्राह्वस्यशिरोहनिपर्यटेत् प्राह्वस्यरात्रौमू-

त्रोच्चरणेच्च सोपानत्कश्चाशनाभिवादननमस्कारान्वर्जयेत् नपदासनमपकर्षेत् नशिश्नोदरपाणिवाक्चक्षुश्चापलानिकुर्यात् नकु
लकुलस्यादिति नस्त्रगित्यत्रान्यधृताइतिविपरिणातानुषंगः अशक्तेत्वन्यधृतमपिवासःप्रभृतिनिर्णिज्यधारयेत् उत्प्लुतेतिजानुमात्रे
तदधिकेवाजलेत्तुतिष्ठन्नथाचामेदित्याशयः शूद्रेणानीतंअशुचिनावाब्राह्मणेनशुचिनावातेनएकहस्तेनानीतंयज्जलंतेननाचामेत् पा
देनपादधावनंनकुर्यात् प्राहृत्त्यैवरात्रौपर्यटेत् प्राहृत्त्यैवमूत्रादिकुर्यात् नकुलमितिकुलमेवकुलं यस्यसकुलंकुलः स्वकुलएवाध्येत
व्यमितिनियमंपरित्यज्यविद्यालाभायकुलांतरमपिगच्छेदित्याशयः एवंचसूत्रोक्ताःस्मृत्युक्तावायेसंकल्पाःकृतास्तदुल्लंघनेज्ञान
तोऽज्ञानतोवाकृतेगौतमाद्युक्तंत्र्यहमेकरात्रंवा अभोजनप्रायश्चित्तंबोध्यम् इतिस्नातकव्रतानि अथब्रह्मचारिणाआतुरता
दशायामुक्तसमावर्त्तनासंभवेसंक्षेपेणातत्कार्यम् संक्षेपप्रकारमाहापस्तंबः अथैतदपरंतूष्णीमेवतीर्थेनस्नात्वातूष्णींसमिधमा
दधाति अत्रस्कदर्शनः अथापरमेतद्विधानमुच्यतेइतिविशेषः तीर्थेपुण्यनद्यादौसमिधंपालाशींएवकाराच्चास्मिन्विधौनान्य
त्किंचिदनुष्ठेयमिति प्रयोगस्तु ब्रह्मचारिलिंगानिमेखलादीनित्यक्त्वातीर्थेतूष्णींस्नात्वावासोत्तरपरिधानादिकृत्वाश्रौत्रियागारा-
ग्निमाहृत्ययत्रक्वचनाग्निंविधिनोपसमाधायतत्रप्रजापतिंमनसाध्यायन्तूष्णीमेवसमिधमादधाति केशश्मश्रुवपनादिकंअन्यदपि-
अविरोधितूष्णीमेवकर्तव्यमिति अत्रक्रमः संकल्प्यमेखलादीनित्यक्त्वाऽथवपनंततः तीर्थेस्नानमितिपरिधानादीत्यादिपदेन

द्विराचमनं तिलकधारणं च वपनादिकमित्यादिशब्देन नखनिकृंतनम् इति समावर्तनानुकल्पः ब्रह्मचारिदशायां मृत सपिंडानां समावर्तनानंतरं उदकदानपूर्वकं त्रिरात्रमतिक्रांताशौचं कार्यम् आदिष्टीनोदकं कुर्यादाव्रतस्य समापनात् समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेदिति मनुवचनात् आदिष्टी ब्रह्मचारीति मिताक्षरायाम् ततश्च ब्रह्मचर्यदशायां सपिंडमरणे सति समावर्त्तनानंतरं त्रिरात्रमध्ये विवाहो न कार्यः जनने तु सत्यपि कार्य एव जनने अतिक्रांताशौचाभावात् इति संस्कारकौस्तुभे समावर्त्तनम् अथ विवाहः मनुः गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्वितामिति लक्षणान्यप्याह स एव अव्यंगांगीं सौम्यनाम्नीं हंसवारणगामिनीम् तनुलोमकेशदंतां मृद्वंगीमुद्वहेत्स्त्रियमिति एतानि बाह्यानि आभ्यंतराणि तु अष्टौ पिंडान्कृत्वेत्याश्वलायनगृह्योक्तविधानाज्ज्ञेयानि कन्यागतविशेषांतरमाह याज्ञवल्क्यः अनन्यपूर्विकां कांतामसपिंडां यवीयसीम् अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजामिति अन्यपूर्विकाः सप्तविधाः पुनर्भ्वः वाचादत्ता मनोदत्ताग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति बौधायनोक्ताः एता नविवाह्याः इत्येवमर्थमनन्येति विशेषणम् प्रथमवरस्य पातित्यादिबलवद्दोषनिर्णये तु आद्यानां तिसृणामन्येन परिणयनं भवतीत्यवसरे वक्ष्यामः कांतां वरस्य चक्षुर्मनसोरानंदकारिणीमिति विज्ञानेश्वरादयः तेन श्वशुरादिचक्षुरादेस्तत्कारित्वाभावेपि न दोषः एकस्यां पिंडदानक्रियायां दातृत्वपिंडभाक्त्वलेपभाक्त्वान्यतरसंबंधेनान्वयः सापिंड्यं तथा च मात्स्ये लेपभाजश्चतुर्थाद्याः

पित्राद्याः पिंडभागिनः पिंडदः सप्तमस्तेषां सापिंड्यं साप्तपौरुषमिति पिंडद इत्येकवचनांतेनापि यजेतेति वद्यासज्यवृत्तिकर्तृत्वाभिप्रा
येणाग्निसाध्यश्राद्धेषु दंपत्यात्मकर्तृनिर्देशात् पत्न्या अपि सापिंड्यसिद्धिः एकस्यामिति चोद्देश्यदेवतायाः कस्या अप्यभेदेन पिंडदानक्रि
याया अभेदो विवक्षितः न तु क्रियाव्यक्त्यैक्यम् तेन चैत्रस्य स्वीयपितृव्यादिभिः सापिंड्यसिद्धिः अस्ति हि चैत्रीयश्राद्धोद्देश्य तत्पिता
महादेः तत्पितृव्यकर्तृकश्राद्धेपि तुल्येनोद्देश्यता न चैवं गयाश्राद्धादौ यन्नाम्ना पातयेत्पिंडं तं नयेद्ब्रह्मशाश्वतमिति शास्त्रेणोद्देश्यताया
मित्रादिसाधारणत्वात्तत्कन्यायामपि सापिंड्येन विवाह्यतापत्तिः अवयवानुवृत्तिः सापिंड्यमिति मते विधात्रवयवानुवृत्त्यातिप्रसंगस्यैवा
स्याप्यतिप्रसंगस्य सप्तमात्पंचमाद्वूर्ध्वं मातृतः पितृतस्तथेत्यादि वचोनुरोधेन पित्रादिसंबंधिषु केषुचिदेव सपिंडशब्दस्य योगरूढ्यंगीका
रेण परिहारसंभवात् ईदृशसापिंड्यरहिता असपिंडेति केचित् अस्मिन् मते शुक्रशोणिताद्यवयवानुवृत्तिसापेक्षप्रतीतिकस्य पितृत्वा
देरेव रूढिविषयत्वात् अवयवानुवृत्तिः सापिंड्यमित्येव मतं लाघवाद्युक्तम् नहि तत्र मते रूढिविषये पिंडदानक्रियायाः प्रवेशोस्ति अतः
समानएकः पिंडः कूटस्थदेहः आरंभको यस्याः सा सपिंडा तद्भावः सापिंड्यं तच्च द्विविधम् मुख्यमारोपितं च आद्यं द्विविधं साक्षादेक-
शरीरावयवानुवृत्त्या यथा भ्रात्रोर्भगिन्योश्च परंपरया पौत्रयोर्दौहित्रयोश्च अत्र हि पितृमातृद्वारकैकशरीरावयवानुवृत्त्या सापिंड्यं उक्त
याज्ञवल्क्यवचनाच्च वधूवरयोः पितृकुले सप्तशीर्षपर्यंतं कूटस्थावयवानुवृत्तिः सपिंडपद रूढिविषयः मातृकुले पंचमपर्यंतं तद

नुवृत्तिः तद्विषयःपंकजशब्दस्येवपद्मत्वंपद्मत्वे कार्यसमवायिकपंकजनिकर्तृत्वमित्यंगीकारेणनातिप्रसंगदोषः तथाच शास्त्रांत
रस्य वध्वावरस्यवातातःकूटस्थाद्यदिसप्तमः पंचमींचेत्तयोर्मातासापिंड्यंविनिवर्तत इति अतश्चपितृद्वारकसापिंड्यविचारेसप्त
मादूर्ध्वंसापिंड्यनिवृत्तिः मातृद्वारकतद्विचारेतु पंचमादूर्ध्वमितिनिर्णयः एवंचवरादेःपितृद्वारकसापिंड्यचिंतासमयेशीर्षगणनायां
पंचम्यांस्त्रीव्यक्तौसत्यामपितत्पुत्रकन्यानैवविवाह्या शास्त्रबलेनमंडूकप्लुत्या तत्रस्त्र्यादिविषयसापिंड्यानुवृत्त्यभ्युपगमात् यद्वसिष्ठे
नोक्तं पंचमींसप्तमींचैवमातृतःपितृतस्तथेति उद्वहेदितिशेषः यच्चपैठीनसिना त्रीनतीत्यमातृतःपंचातीत्यपितृतइतितदवां
न्निषेधार्थमितिविज्ञानेश्वरः अनुकल्पपरमितिमाधवः युक्तंचैतत् अश्रुतनिषेधपरत्वात् अनुकल्पतयापिस्वार्थपरतायान्याय्यत्वा
त् दशभिःपुरुषैःख्यातात्छ्रोत्रियाणांमहाकुलात् उद्वहेत्सप्तमादूर्ध्वंतदभावेतुसप्तमीम् पंचमींतदभावेतुपितृपक्षेत्वयंविधिः स
प्तमींचतथाषष्ठींपंचमींचतथैवच एवमुद्वाहयेत्कन्यांनदोषःशाकटायनः तृतीयांवाचतुर्थींवापक्षयोरुभयोरपि विवाहयेन्मनुः
प्राह पाराशर्योगिरायमः असपिंडाचयामातुरसगोत्राचयापितुः साप्रशस्ताद्विजातीनांदारकर्मणिमैथुने यस्त्वदेशानुरूपेणकुल
मार्गेणचोद्वहेत् नित्यंसव्यवहार्यःस्याद्वेदाच्चैतत्प्रतीयते इतिचतुर्विंशतिमताच्च तृतीयांमातृतःकन्यां तृतीयांपितृतस्तथा
विवाहयेन्मनुःप्राहपाराशर्योगिरायमइतिचंद्रिकापारिजातोदाहृतषट्त्रिंशन्मताच्च पूर्वस्मृतौसप्तमीमित्यादिषुचतुर्थीमित्यंतेषु

द्वितीयांतेषु प्रत्येकं महाकुलादित्यंतार्न्द्रस्यानुषंगः ततश्च महाकुलानुरोधेन सापिंड्यसंकोचस्वीकार्यो न तु तद्रीत्या अधमाकुलात् कन्या
स्वीकार्येति विधीयते अतएवाश्वलायनेन प्रथमं कुलपरीक्षैवोक्ता कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तादिति ए
तद्व्याख्यावसरे वृत्तिकृतोक्तं अग्रवचनं वधूवरगुणेभ्यः कुलमेव कथं प्रधानं स्यादिति पुरस्तादिति श्रौतसूत्रे नवमाध्याये दशमेय प्रकरणे
इत्यर्थः यथोक्तमिति प्रतीकगृहीतं च तत्रेत्थं पठितं ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभय
तो नाब्राह्मण्यमिति विद्यादिगुणसंपन्ना मातृकुले पंच पितृकुले पंच पुरुषाः विद्यंते तत्कुलमिति दशमेय इति कृस्वीकारा यथा कुलप-
रीक्षोक्ता सा कन्यास्वीकाराय कार्येत्याशयः मनुरपि महांत्यपि समृद्धानि गोजाविधनधान्यतः स्त्रीसंबंधे दशैतानि कुलानि परिवर्ज
येत् हीनक्रियं विहितक्रियारहितं निष्पुरुषं प्रसवरहितं निश्छंदो वेदाध्ययनरहितं रोमशं सर्वांगारूढरोमकं अर्शसमित्यादिपदे
स्तत्तद्रोगवंति कुलान्युच्यंते दारसंग्रहफलभूतसंततौ दोषानुवृत्तिपरिहाराय चैषा कुलपरीक्षोच्यते कुलानुरूपाः प्रजाः संभवंतीति
हारितवचनात् इत्थं चोक्तस्मृतौ कुलानुरोधेनानुकूल्यविधिः स्त्रीनेव वर्णान् प्रति स्वीयदेशकुलाचाराविरोधेनोच्यते श्रोत्रियाणामि
त्युपक्रमात् असपिंडेति श्लोके साभ्र शस्ता द्विजातीनामिति महाकुलीनायाः सप्तपुरुषसापिंड्यसामान्यभाववत्या द्विजान् प्रति मुख्य
कल्पत्वोक्त्या तदभावविहितानां अनुकल्पानामिति द्विजविषयत्वज्ञापनाच्च मुख्यकल्पानुकल्पयोरेकविषयत्वनियमात् यस्तु देशेति श्लोके

चव्यवहार्यत्वेन वेदसंमतत्वेन चोक्तानुकल्पेषु निर्दोषतया देशकुलपरिग्रहेणैवोपन्यासात् अतश्चासापिंडेतिश्लोके द्विजातिग्रहणात्
सापिंड्यसंकोचविधयः शूद्रविषयाः पंचमे सप्तमे चैव येषां वैवाहिकी क्रिया क्रियापरा अपि हि ते सर्वे ते शूद्रतां गता इति मरीचिवाक्ये
शूद्रे शूद्रतापत्तेरसंभावाच्चेति वदंतो निरस्ताः अंते शूद्रत्वमसच्छूद्रत्वं तस्य सच्छूद्रेष्वप्यापत्तिसंभवात् यच्चोदाहृते च चतुर्विंशतिम
तीत्यश्लोके वेदाच्चैतत्प्रतीयत इत्युक्तं तस्यायमाशयः तृतीयचतुर्थ्यादिविषये अनुकल्पतया स्वकुलदेशाविरोधेन परिणयनमुक्तं तद्
वेदात्प्रतीयत इत्युक्तम् तद्यथा शतपथे दार्शिकप्रकरणे पठ्यते तस्मात्समानादेव पुरुषात् अत्ता चाद्यश्च जायते उत तृतीये सं
गच्छावहै चतुर्थे संगच्छावहा इति अत्र च कूटस्थादुत्पन्नयोर्भोक्तृभोग्ययोर्मिथः संकल्पोक्तिस्तृतीय इत्यादिका तद्वशाच्च सापिंड्य-
संकोचविधिकल्पनमिति माधवः एवं आ याहीन्द्र पथिभिरिति बह्वृचमंत्रे दृष्टां जह्नुर्मातुलस्येव योषा भागस्ते पैतृष्वस्रेयी वपामि
वेति मातुलकन्यादेः भागिनेयादिं प्रति भागत्वोक्त्या परिणयनसूचनात् सापिंड्यसंकोचांगीकारेण मातुलकन्यादिपरिणयने इदं मं
त्रलिंगमपि साधकम् इदं च मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च समानप्रवरां चैव कृत्वा चांद्रायणं चरेत् इति स्मृत्यपेक्षया ब-
लवदिति बलाबलाधिकरणवार्तिकव्याख्यावसरे न्यायसुधाकार उक्तवान् वेदाच्चैतत्प्रतीयत इत्यत्र सर्वनाम्ना पूर्वार्धनिर्दिष्टदेश
कुलानुसारिण एव सापिंड्यसंकोचस्य परामर्शात्तदनुसरणमपि वेदोक्तमिति ज्ञाप्यते तथा चाममंतीति बह्वृचामंत्रं तेन रुक्माध्वं तेवत॰

मानः पथः पित्र्या० परावत इति अत्र हि पित्र्यात् पितुरागतात् मानवान्मनुसंमतात् उक्तं हि तेन येनास्य पितरो याता येन याताः पि-
तामहाः तेन यायात्सतां मार्गं तेन दुष्यन्न दुष्यतीति यथोक्तमार्गात्तदतिक्रमेण नोऽस्मान्दूरं मा नयतेति देवप्रार्थनया तादृशमार्ग एवा
वस्थानमुचितमिति ज्ञाप्यते इति स्कतासो अस्था० मनोर्देषाय ज्ञियास इति पूर्वर्चि प्रकृतिदेवानामेव नेष्टेति मध्यमपुरुषैकर्तृत्वानुवा
देन निषेधसंभवात् अत एव वेदाच्चेति च कारेण मनुस्मृतेरिति समुच्चीयते अनेन च यथा भृग्वग्न्यनशनाद्यैश्च वृद्धस्य मरणं तथेति सत्य-
पि कलिवर्ज्येषु पाठे येवैतन्वां विसृजंतीति श्रुतिस्मृतिसिद्धत्वात्त्रिवेणीप्रवेशस्य तत्तद्भिन्नस्यैव जलप्रवेशस्य कलिवर्जत्वं स्वीक्रियते
तथा स्वकुलदेशाविरोधिना मातुलदुहितृपरिणयनादेरुक्तविधया नेकश्रुतिस्मृतिसिद्धत्वाड्गोत्रान्मातुः सपिंडाच्च विवाहो गोवधस्तथेति
माधवोदाहृतब्राह्मणवचनेन प्रतीयमानं मातुलकन्यापरिणयनादेः कलिवर्ज्यत्वमपि स्वकुलदेशविरोधितादृशपरिणयनविषयमि-
ति ज्ञाप्यते तच्च बौधायनः पंचधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरत इत्युपक्रम्य दक्षिणतः पर्युषितभोजनादिभिः सह मातुलकन्याप
रिणयनाद्युपन्यस्याह तत्र तदितरस्मिन्दुष्यति इतरदितरस्मिन् तत्तद्देशप्रामाण्यान्मिथ्यैतदिति गौतमः उभयमेव नाद्रियेत शिष्ट-
स्मृतिविरोधदर्शनादिति तत्रापि प्रामाण्यादित्यंतो ग्रंथो मिथ्यैतदित्यादिना पर्युषितभोजनसीधुपानादेर्व्यावृत्त्य मातुलकन्यापरिणयना
दिविषयतया व्यवस्थाप्यते वेदाच्चैतत्प्रतीयत इति स्मृत्या श्रुतिस्मृतिसिद्धत्वेन्योपन्यस्तोक्तपरिणयने स्मृतिविरोधोपन्यासासंभवात्

पर्युषितभोजनादौ कर्त्तव्यतासूचकश्रुतेर्विशेषतः स्मृतेश्चाभावेनस्मृतिविरोधहेतूपन्याससंभवेनच मिथ्यैतदितितद्दूषणमेवेत्यादि-
स्वधीभिरूह्यम् अतःसिद्धमेतत् कलावपियेषांकुले देशेनुकल्पत्वेनसापिंड्यसंकोचः परंपरयासमागतः तेषांतादृशसंकोचेनवि
वाहेनदोषः अस्तिचभार्यात्वोत्पत्तिः अन्येषांतैःसहव्यवहारेनैवदोषः स्वयंतुस्वकुलदेशविरुद्धसापिंड्यसंकोचेनविवाहेभवत्येवदो
षः नचभार्यात्वोत्पत्तिः दृश्यंतेहिस्वयंसापिंड्यसंकोचेनविवाहमकुर्वंतोपितादृशसंकोचेनासकृज्जातविवाहेभ्यः कन्यास्वीकुर्वं-
तस्तत्कुलीनान्श्राद्धादौभोजयंतश्चबहवःशिष्टाः अतएवमातुलकन्योद्वाहिनांहेमाद्र्यादौश्राद्धेनिषिद्धोपिस्वकुलदेशेपरंपरया
गतसापिंड्यसंकोचेन कृतविवाहविषयएवेतिबोध्यम् दत्तकसापिंड्यंतुदत्तकनिर्णयेप्रागेवोक्तमितिनेहलिख्यते मुख्यावय-
वानुवृत्त्यभावेपिद्वितीयसापिंड्यप्रकारेक्रमंतुः पितृपत्न्यःसर्वामातरस्तद्भ्रातरोमातुलास्तद्भगिन्योमातृस्वसारस्तद्दुहितरश्चभागि
न्यस्तदपत्यानिभागिनेयानि अन्यथासंकरकारिणःस्युरितिमदनपारिजातेमाधवीयेच तद्भगिन्यइतिनपठितं अन्यग्रंथेषुतुपठ्य-
ते अत्रयावद्वचनंवाचनिकमितिन्यायेनपरिगणितेष्वेवसापिंड्यंनतुसप्तमादिपर्यंतमितिभट्टचरणप्रभृतयोबहवः अन्येतूद्देश
तावच्छेदकानांपितृपत्नीत्वतद्भ्रातृत्वादीनांभेदेनवाक्यभेदात् तन्निवृत्त्यैलक्षणयासापत्नमातामहकुलेचतुःपुरुषंसापिंड्यमतिदे
शिकंविधीयते अतश्चमातुलादिदुहितृष्विवतत्पुत्रेष्वपिसापिंड्यात्कन्यायाःसापत्नमातुलपुत्रेणनविवाहइत्याहुः तत्र यत्रहि

श्रुतयावच्छब्दानामेकस्मिन्नर्थे तात्पर्ये लक्षणोत्तरं चैकरूपेण प्रामाण्यं बोद्धव्यान् प्रति संभवति तत्रैव लक्षणया वाक्यभेदपरिहारः य
थार्थमंतर्वेघादौ अत्र च पितृपत्न्य इति प्रथमवाक्य एव न सापत्नमातरि उक्तविध सापिंड्यपरिहारं न हि तस्या विवाहप्रसक्तिरस्ति येन-
विवाहप्रतिबंधाय सापिंड्यातिदेशः क्रियते किंतु सापत्नमातरि मुख्यमातृत्वादिवशेन तद्भ्रात्रादि तन्निरूपित मुख्यमातृत्वादेरेव
विवाहप्रतिबंधकतापरम् मदनपारिजातेहि असपिंडा च या मातुरसगोत्रा च या पितुरिति मनुवाक्यव्याख्यावसरे असपिंडा
च या मातुरित्यस्य फलदर्शनायोक्तम् सपत्नमातृकुलजास्वासपिंडामात्रसगोत्रा मातृसपिंडा चेति तत्र विवाहप्रसक्ताविदमुच्यते
असपिंडा च या मातुरिति तथा च सपत्नमातुः सपिंडेष्वपि मातुलादिव्यवहारं दर्शयति स्मृमंतुरित्यु क्ता पितृपत्न्य इत्याद्युदाहृतम् एवं
वदता हि ग्रंथकारेण सर्वेषां वाक्यानां यथाश्रुते ऽर्थ एव तात्पर्यं प्रदर्श्यते लक्षणोत्तरं च भवन्मते सापत्न्यपुत्रं प्रति मातुलसापिंड्योक्ति-
स्तादृश कन्यां प्रति दुहितृषु सापिंड्योक्तिरफलेति नैकरूपेण प्रामाण्यसंभवः लक्षणतः पूर्वं च प्रतिवाक्यं मातृत्वमातुलत्वाद्यतिदे-
शो योग्यतया त्रैयीवधे ब्रह्महत्याप्रायश्चित्तस्येव मातृगमनप्रायश्चित्तस्य भागिनेयीपरिणयन तदुपगमनादिप्रायश्चित्तस्य चातिदे
शव्यवस्थया कुर्वन्न वैरूप्यमावहतीति न लक्षणोचिंता महि गुणभूतवाक्याश्रितदोषभयात् प्रधानप्रयोजनबाध उचितः उदाहृत
श्लोक स्मृमंतुवाक्येषु प्रतिवाक्यप्रयोजनभेदो भियुक्तैः मुख्यमात्रादाविव सपत्नमात्रादौ अभिवादनसंमानन्नाद्यतिदृश्यते तत्तद्रूप

गमनेच धेंचातदुहित्रादिपरिणये प्रायश्चित्तं तादृशे मातुलादिमरणे आशौचविशेषोंवेति किंच अतद्वेंदिदेशमात्रविधानेन वाक्यभेद
परिहारः बहिर्वेदिदेशोनियोगेनाव्दीतराप्राप्तेरिति वार्तिकादौ स्फुटं अत्रतु तदपत्यानि भागिनेयानि इत्येतावतैव तच्छब्दमहिम्नातत्पू
र्ववाक्याधिगम्यसापिंड्यप्राप्तेः पूर्ववाक्यान्यविधायकानि स्युरिति कथंवाक्यभेदः किंच तद्भगिन्योमातृस्वसार इति भवदुदाहृतपा
ठे तदनर्थकंभवन्मतेस्यात् तृतीयचतुर्थस्थान इव द्वितीयस्थानेप्येकशीर्षसंकीर्तनेनैव भगिन्यचतुष्टयसापिंड्यलाभात् अनर्थकेन
तद्भ्रातरो मातुला इत्यपि स्यात् पितृपत्न्यः सर्वामातरस्तद्भ्रागिनेयभगिन्य इत्येतावतापि तल्लाभात् एवंश्रीमतां लक्षणांगीकरणंस्व
सिद्धांतविरुद्धम् तथाहि अभ्युदयेष्टिवाक्येष्टस्यपि दृष्टदभोर्द्वयोरुद्देश्यतानिमित्तात् वाक्यभेदोभट्टैरंगीकृतः नांगीकृतश्च पंचशरा
ववाक्ये द्रव्यदेवताविधिनिमित्तोवाक्यभेदः अनयोर्वाक्यभेदयोः कोभेद इति केश्चित्कृताक्षेपनिरासः श्रीमद्भिरित्थंकृतः सहस्र
पयतीति वाक्यानर्थक्यभयादभ्युदयेष्टिवाक्ये तदंगीकार उचितइति एवंसति भट्टकृते नैकवाक्यानर्थक्यभयात्कथं न तदंगीकारेश्री
मतामौचित्यबुद्धिः अस्तुवाक्यभेदभयाच्चतुःपुरुषसापिंड्यनिषेधलक्षणा चतुष्टयेतु नव्यन्तपेक्षा मातृभगिन्यादीनामानंत्यात्
किंतु सप्तपदार्थवाक्येयथा घटादीनां रूपादीनां च यथाक्रममेकत्वापादकद्रव्यत्वगुणत्वादिसामान्यगोचरापेक्षाबुद्ध्यात्मकं सप्तत्वं ता
दृशबुद्धिजन्यंवास्वीक्रियते तथा प्रकृतेपि तद्भ्रातृदुहितृत्वादिसामान्यविषयापेक्षाबुद्ध्यात्मकं तज्जन्यमेव वा चतुष्ट्वादिस्वी-

कार्यम् नत्वनुपस्थित तदपत्यत्वादिविषयतादृशबुद्ध्यात्मकम् उपस्थितत्यागेनुपस्थितस्वीकारेच मानाभावात् किंचमाधवेन
असपिंडाचयामातुर सगोत्राचयापितुरितिवाक्यव्याख्यानावसरे ब्राह्मादिषु विवाहेषु यात्पूढाकन्यकाभवेत् भर्तृगोत्रेणकर्तव्यात-
स्याः पिंडोदकक्रिया गांधर्वादिविवाहेषुपितृगोत्रेणधर्मविदिति मार्कंडेयपुराणमुदाहृत्योक्तंमातुलकन्यादिनिषेधवाक्यानिगांधर्वा
दिविवाहोढोत्पन्नविषयाणितत्रसापिंड्यनिवृत्तेरभावात् मातुलकन्यादिविवाहकर्तव्यताबोधकास्तुश्रुतिस्मृतिसदाचाराब्राह्मादि
विवाहोढोत्पन्नविषयाः तत्रसापिंड्यनिवृत्तेरित्युक्त्वातादृशनिषेधप्रदर्शनावसरेमातुलस्यसुतामूढ्वेत्यादिप्रायेपितृपत्न्यइत्यादिषु
मनुवाक्यमुदाहृतम् तद्यथा शातातपः मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच समानप्रवरांचैवत्यक्त्वाचांद्रायणंचरेत् पैठी
नसिः पितृमातृस्वसृदुहितरोधर्मतस्ताभगिन्यस्तावर्जयेदिति सुमंतुरपिपितृपत्न्यइत्यादि व्यासः मातुःसपिंडायत्नेनवर्जनीया
द्विजातिभिरितिततोविशेषप्रवृत्तानामेषांवचनानांकथंविशेषविषयतेत्याशंक्यविशेषवचनबलादितिब्रूमइतिप्रतिज्ञायमनु
वाक्यमुदाहृतम् पैतृष्वस्रेयींभगिनींस्वस्रेयींमातुरेवच मातुश्चभ्रातुराप्तस्यगत्वाचांद्रायणंचरेत् एतास्तिस्रस्तुभार्यार्थे
नोपयच्छेतबुद्धिमानिति अत्रचभगिनीपदंपूर्वोत्तरद्विलीयाताभ्यांसंबध्यते आप्तपदंचमातुर्गांधर्वादिविवाहप्रयुक्तसापिंड्य
परंस्वस्रेयीगांधर्वविवाहोढैवविवक्षिता अतोभगिन्यादिपदसार्थकत्वानुरोधेनमनुवचनादीनामेषांविशेषविषयमित्युक्तं स्वीकृ

तश्चास्य मनुवाक्यस्य भगिन्यास्तपद महिम्नेदृशोपिप्रायोन्यायसुधाकारेणाबलाबलाधिकरणे एवंचमाधवेन स्मृत्यंतुवाक्यस्य पूर्वोत्तरदेशोदाहृतशातातपपैठीनसिमनुवाक्येषु मातुलसुतात्व मातृगोत्रत्वाद्युद्देश्यतावच्छेदकभेदेन वाक्यभेदस्यपरिहारायलक्षणीयैकोद्देश्यतावच्छेदकस्य वक्तुमशक्यत्वात् तस्यपुंसाधारण्येनचहि जश्चांद्रायणंचरेदिति ताभगिन्यइति एतास्तिस्रस्तुभार्यार्थेनोपयच्छेतेति नैमित्तिकविधेयसमर्पक पदानन्वयापत्तेर परिहार्योवाक्यभेदः तथाचतत्समानविषयतया माधवोदाहृते सुमंतुवाक्येपि वाक्यभेदएवमाधवस्य सुमंतुरितिस्वीकर्त्तुमुचितं प्रायपाठभंगस्यन्याय्यत्वात् गांधर्वविवाहप्रयुक्तकुप्तमाधवसंमतसापिंड्येनैव सकलस्य सुमंतुवाक्यानां संभवश्रुत्यंतरकल्पनापादकत्वतुःपुरुषापूर्वपरिणेतृनिरूपितसापिंड्यविधिकल्पनायाअन्याय्यत्वाच्च कल्पविधिविषयसापिंड्यस्यापिगौणत्वेनविधेयमुख्यत्वालाभाच्च अस्मिन्मतेतु मातृत्वाद्यतिदेशेनविधिविषयस्यसमान प्रायश्चित्तादेर्मुख्यत्वात् ननुसापिंड्य बोधनएव संकरकारित्वापादनरूपवाक्यशेषोपपत्तिरित्यपिशंक्यम् अवश्यकर्त्तव्यसमाननाशौचातिक्रमस्यानाचार संकरापादकत्वसंभवात् प्रायश्चित्तनिमित्तनिषेधातिक्रमस्यतुतदापादकतायामतद्द्येपितुल्यत्वात् नन्वेवंमदनपारिजातोक्त वसिष्ठव्याख्यासंगच्छते तेनहि पंचमींसप्तमींचैव मातृतःपितृतस्तथेति वसिष्ठवाक्यमुदाहृत्योक्तम् तत्सवर्णसापत्न्यमातामहकुलविषयंब्राह्मणादीनांक्षत्रियादिदानसमुत्पन्नपितृकुलविषयत्वंच एकत्रावयवानुवृत्तेरभावादन्यत्रसा

वर्णाभावाच्चेतिक्रमंतु वाक्यस्य सापिंड्यविषयत्वे तदवधिप्रदर्शनार्थं वसिष्ठवाक्ये पंचमीमिति संगच्छते अन्यथानुपपन्नं स्यादितिचेत्
नईदृशवाक्यानांचतुर्विंशतिमताद्यनुसारेणानुकल्पाद्यर्थांतर तात्पर्यस्य प्रागेव दर्शितत्वात् पारिजातव्याख्यायामपि तदपत्यानि भागिनेयानी
तिभागिनेयीत्वेन सिद्धायाइव तत्कन्याया अपियुक्त्याभासेन प्रसिद्धभागिनेयीकन्याया इव परिणेयत्वे प्रसक्ते तन्निवृत्त्या सर्वक्रमंतु वाक्यानांय
थाश्रुतेर्थ तात्पर्यदीर्घार्थत्वसंभवात् यथाहि सपत्नमातरि मातृत्वातिदेशपरे प्रथमवाक्ये यन्निरूपितं सपत्नमातृत्वं प्रत्येव भवन्मते पि सापिंड्या-
तिदेशो विधीयते नतु तत्पुत्रं प्रत्यपि यथाचास्मन्मते मातुलत्वाद्यतिदेशोपितं प्रत्येव विधीयते नतु मातुलकन्यादौ पितुर्भगिनीत्वातिदेशे न पुत्रं प्रत्यपि
यौक्तिकः पितृस्वसृत्वाद्यतिदेशः सिद्ध्यति यथाच तदपत्यानीति अंत्यवाक्येन भागिनेयत्वातिदेशेपि तत्कन्यायां न यौक्तिको भागिनेयीक
न्यात्वातिदेशः युक्त्याभासस्येदृशविषयसाधकतया वसिष्ठेनापि पारिजातोक्तरीत्या प्रदर्शनात् तथा मातुलकन्याभगिनीत्वातिदेशेपि न मा
तुलकृते भ्रातृत्वातिदेशोपि यावद्वचनं वाचनिकमित्येवाभियुक्तः स्वीकारो चित्यादित्यलं सवर्णसपत्नमातृकुले सापिंड्यविचारेण असव
र्णमातृकुले तु तद्विचारस्य न कलौ प्रयोजनम् असवर्णाविवाहस्य कलिवर्जत्वात् वध्वावरस्य वा मुख्यपितृद्वारक सापिंड्यं तु कूटस्थमारभ्य
सप्तमादूर्ध्वं निवर्तते तयोरेव मुख्यमातृद्वारकं तंतु मारभ्यैव पंचमादूर्ध्वं निवर्तत इतिसिद्धम् ततश्च मुख्यकल्पेन कुलद्वयवर्जनीयकन्याना
मभियुक्तोक्तसंख्योपपन्ना भवति यथाहुः उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्म हृद्दंपती द्वंद्वं तस्य चतुष्कमष्टकमतोप्यस्य क्रमात् षोडश

वंशारंभकदंपती प्रभिन्नरित्यासप्तकस्यांरदा एकैकान्वयकन्यकाः पितृकुले त्वासप्तकस्यं ब्रुवे १ यद्यप्येकस्य बह्व्योपि कृताः स्युस्तदपीह तु सं
बंधसाम्यादेकैव गणितेत्यवधार्यताम् २ एकस्मान्मिथुनात्कृतोथ दुहिताद्वंद्वद्वयं तद्द्वयात्तस्माद्द्वंद्वचतुष्कमष्टच ततोतः षोडशातो रदाः यावत्स
प्तमकस्य मन्निकृतवः कन्या इहैकान्वयेतादंतैर्गुणितार सैकरवदृशो वंशोसपिंडाः पितुः ३ मातुर्जन्मददंपती च मिथुनद्वंद्वं तयोः सागरास्तस्याः
पंचमकस्य मश्वमितिरित्येकान्वये पुंस्कृते द्वंद्वाद्वंद्वयुगं ततोऽब्ध्यइतोष्टौ पंचकस्यांशरक्षोण्यः सप्तगुणाः शराश्च विधवो मातुः सपिंडाः कुले
४ कुलद्वयस्य कन्यकासुता मिथः सपिंडकाः द्विमांस्युदृग्धरादृशो २१ २७ विवाहकर्मवर्जिताः ५ अत्र प्रथमश्लोके वरस्य पितृपक्षे सापिंड्ये-
नाविवाह्य कन्यानां संख्यां दर्शयितुं प्रत्येकं एककन्यायाः पितरावेकं द्वंद्वमित्येवमंगीकृत्य सप्तकस्थद्वंद्वानां संख्यासुक्ता पितृपक्षे एकैकद्वंद्वकुले
तावत्कन्यानां संख्योक्तिः प्रतिज्ञा क्रियते तथाहि वरः प्रथमः द्वितीयस्थानस्थितं वरपितरौ द्वंद्वं १ तृतीयस्थाने पितुः पितरौ द्वंद्वं १ चतुर्थस्था
नेतयोः प्रत्येकं जनके द्वंद्वे २ पंचमस्थाने तद्द्वंद्वद्वय घटक पुंद्वयस्त्रीद्वययोर्जनकद्वंद्वानि ४ षष्ठस्थाने तद्घटकाष्टसंख्यास्त्रीपुंव्यक्तिजनका
नि द्वंद्वानि ८ सप्तमस्थाने तद्घटकषोडशव्यक्तिजनकानि द्वंद्वानि १६ अतोपीति तसिः षष्ठ्यर्थे तज्जन्मकृदिति समासांतर्गतजन्मकृत्सदस्य-
तस्येत्यादिषष्ठ्यंतेषु ननिष्कृष्य प्रत्येकमन्वयः ततश्च तस्य जन्मकृद्द्वंद्वानां चतुष्कमित्येवं वाक्यार्थ उन्नेयः इत्यासप्तकक्षमित्यस्य मध्यमणि
न्यायेनान्वयः दंपतिशब्देन द्वंद्वमुच्यते रदशब्देन द्वात्रिंशत्संख्योच्यते ततश्चेति प्रमितिः सिद्धा तथा चापेक्षाबुध्या उक्तसंख्यासिद्धेत्याशयः ननु नोक्तद्वंद्व

संख्यानापि वक्ष्यमाणा कन्यासंख्यापि संभवति द्वंद्वद्वयघटयोः स्त्रियोरेकद्वंद्वजन्यसंभवात् एकस्माद्द्वंद्वादनेककन्यानामपि संभवात् अत उक्तं यद्य
पीति एकस्य द्वंद्वस्य स्युरित्यंते तेन शंकाद्वयानुवादः इह द्वंद्वसंख्यायां तु शब्दस्तद्विषयप्रथमशंकानिवृत्त्यर्थः साम्यादित्यनंतरं एकस्मादिति सामर्थ्य-
लभ्यं ततश्च गणनासौकर्याय जन्यकन्याभेदेन जनकद्वंद्वभेदमारोप्य जनकद्वंद्वैक्येन च जन्यास्वभेदमारोप्य संख्याद्वयोपपत्तिरित्याशयः
उक्तद्वात्रिंशद्द्वंद्वानां मध्ये एकद्वंद्वकुले उद्वोढुः सपिंडकन्यानां त्रिषष्टिरूपामवांतरसंख्यां तावदाह एकस्मादिति प्रथममेकं मिथुनं ततः
पुत्रः कन्या चेति द्वंद्वं द्वितीयस्थाने ततः प्रत्येकं ताभ्यां कयाचित्केनचिन्मिथुनभावं गताभ्यां पुत्रः कन्या चेति द्वंद्वद्वयं तृतीये ततो द्वंद्वद्वया
त्तयैव रीत्या द्वंद्वचतुष्टयं चतुर्थे ततश्चतुष्टयात्तयैव रीत्या द्वंद्वाष्टकं पंचमे ततोऽष्टकात्तेनैव प्रकारेण षोडश द्वंद्वानि षष्ठे तेभ्यः षोडशभ्यो
नेनैव प्रकारेण द्वात्रिंशद्द्वंद्वानि सप्तमे स्थान इति द्वितीयस्थानप्रभृति षष्ठपर्यंतमेकत्रिंशद्द्वंद्वांतर्गता एकत्रिंशत्कन्याः सप्तमस्थानगतद्वा
त्रिंशद्द्वंद्वांतर्गताभिस्तावतीभिः कन्याभिस्त्रिषष्टिः संपद्यते इयं संख्याग्निऋतव इति पदेनाभिधीयते अग्नयस्त्रयः ऋतवः षट् गण
करीत्या प्रातिलोम्येनांकपक्षे एतत्संपत्तेः पूर्वोक्तद्वात्रिंशद्द्वंद्वेषु प्रत्येकं त्रिषष्ट्यंगीकारेण पितृवंशे षोडशभिरधिका द्विसाहस्री कन्यानां सं
पद्यते इयं संख्या रसैकखदृश इति पदेनाभिधीयते रसाः षट् खं शून्यं दृशो द्वे उक्तरीत्या २०१६ ईदृशांकसिद्धेः वरस्य मातृवंशे उक्त-
रीत्यैव आरंभकद्वंद्वसंख्योपन्यासपूर्वकं कन्यानां पंचोत्तरसंख्यां वक्तुमाह मातुरिति अत्रापि वरः प्रथमे स्थाने तस्य पितरौ द्वितीये

मातुः पितरौ तृतीये द्वंद्वमेकं तयोः प्रत्येकं जनकद्वंद्वं चतुर्थे तदष्टकानां च तत्सृणां व्यक्तीनां प्रत्येकं जनकद्वंद्वचतुष्टयं पंचमे एतेषां सप्त
द्वंद्वानां मध्ये एकैकान्वये पंचदश सपिंडाः कन्या भवंति यत्किंचिदेकं द्वंद्वं कूटस्थं प्रथमे स्थाने ततः पुत्रो दुहिता चेति द्वंद्वं द्वितीये प्र
त्येकं ताभ्यां जातद्वंद्वयुगं तृतीये ततः पूर्वोक्तरीत्या द्वंद्वचतुष्टयं चतुर्थे ततस्तयैव रीत्या द्वंद्वाष्टकं पंचमे एवं पंचदश द्वंद्वप्रविष्टाः पंचदश
कन्याः संपद्यते इयं संख्या शरक्षोण्यपदेनाभिधीयते शराः पंच क्षोण्येकेति उक्तसप्तद्वंद्वेषु प्रत्येकं पंचदशसंख्यांगीकारे च पंचोत्तरशत
संख्यासंपत्तिः सा च शराभ्रविधव इत्यभिधीयते शराः पंच अभ्रं शून्यं विधुरेक इति कुलेति पंचमश्लोके पूर्वोक्तपितृवंशंगतायाः षो-
डशाधिकद्विसहस्रसंख्यायां मातृवंशगतया पंचोत्तरशतसंख्यया मेलनेन महासंख्या एकविंशतिसहितशताधिकद्विसाहस्री रूपोच्यते
हिमांशुदृग्धरादृशा इति इमांशुरेकः दृशौ द्वे धरैका दृशौ द्वे उक्तरीत्या २१२१ ईदृशांकसिद्धेः ततश्चैतावत्यः कन्याः कुलद्वयगता मुख्य
कल्पेन विवाहकर्मणि वर्जनीया इत्यर्थः अवादीत्यमनंतेन सापिंड्यस्य विनिर्णयः निर्मत्सराये विद्वांसस्तोषं संयांतु तेसुना १ इत्य
नंतदेवीये संस्कारकौस्तुभे सापिंड्यनिर्णयः अथ गोत्रप्रवरनिर्णयो मदनुजजीवदेवकृत एवास्मिन्नवसरे प्रदर्श्यते तत्र गोत्र
लक्षणं बोधायनः आह विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः सप्तानामृषीणामगस्त्याष्ट
मानां यदपत्यं तद्गोत्रमित्याचक्षते इति सप्तर्षिशब्दः प्रत्येकं रूढः पंचजनशब्दवत् एतत्सूत्रानुसारेणागस्त्याष्टसप्तर्ष्यपत्यं गोत्रमिति-

स्मृत्यर्थसारादयः केचित्त्वगस्त्याष्टमसप्तर्षय एव स्वापत्यानां गोत्रं वसिष्ठगोत्रावयवमित्यादिव्यवहारादित्याहुः तन्न तदपत्येषु व-
त्सादिषु गोत्रव्यवहारिकस्योपचारिकत्वप्रसंगात् गोत्राणामष्टसंख्यत्वापत्त्या गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि चेति बौधाय
नसूत्रविरोधाच्च नच भवन्मतेपि वसिष्ठादिगोत्रव्यवहारिकस्यौपचारिकत्वमिति वाच्यम् बौधायनोक्तसमानगोत्रत्वलक्षणसंख्या-
नुरोधेन तस्य स्वीकारात् कुंडिनादीनां स्वस्वगणे एकगोत्रत्वेन अविवाहप्रयोजकत्ववत् वसिष्ठादीनां सर्वगणेषु सदृशगोत्रत्वप्रयो-
जकत्वेन अविवाहप्रयोजकतया सादृश्याच्च यद्वाऽनादौ संसारे तिर्यगधिकरणस्थतंत्ररत्नोक्तन्यायेन पूर्ववसिष्ठाद्यपत्यत्वे नोत्तरोत्तरे
षु वसिष्ठादिषु लक्षणानुगमान्मुख्य एव गोत्रव्यवहारः अगस्त्याष्टमसप्तर्षीणां तु गोत्रत्वे तदपत्येषु गोत्रव्यवहारः सर्वथानुपपन्न इ
त्यपत्यान्येव गोत्रं अत्र केचित् तानि पूर्वेषां सप्तर्षीणां परेषां स्वापत्यानां च गोत्राणि इदानींतनेषु वत्सगोत्रावयवमिति बहुव्रीहिणा व्य
वहारात् वत्से च जमदग्निगोत्रं वत्स इति तत्पुरुषेण व्यवहारात् वत्स इदानींतनानां जमदग्नेश्च गोत्रमित्याहुः तन्न जमदग्निगोत्र वत्स
इति बहुव्रीहिणैव व्यवहारसंभवात् जमदग्नेर्गोत्रत्वस्य पूर्वोक्तरीत्योपपत्तेः अनादौ संसारे जमदग्नेरपि पूर्वजमदग्न्यपत्य वत्साद्यपत्यत्वसंभ
वेन गोत्रसंबंधसंभवात् जमदग्निर्गोत्रं येषामिति व्युत्पत्तिरित्यप्याहुः एवं व्यवहारोपपत्तौ सप्तर्षीणां यदपत्यं तद्गोत्रमित्यपत्यशब्दान्वितं
सप्तर्षिपदस्य पुनर्गोत्रशब्दान्वयकल्पनानुपपन्ना प्रतीत्यनारूढा न तदपत्यानां तु सोपपन्ने सप्तर्ष्यपत्यानि स्वापत्यभूतानां परेषामेव गोत्रा

णीति वृन्द्वाः नच परेषां तदपत्यानां अत्रानुपस्थितिः प्रकरणानुवृत्तौ मार्कंडेयाइत्यादिशब्दगतलुप्तप्रत्ययांशेन तत्समर्पणात् नच सप्तर्ष्यप
त्यत्वगोत्रत्वेऽस्मदादीनामपि परंपरया तदपत्यत्वादतिप्रसक्तिः प्रसिद्ध्यैव तन्निरासात् तथाच गोत्रत्वेन प्रसिद्धं यदगस्त्याष्टमसप्तर्ष्यपत्यं तद्गो-
त्रम् अतएव विज्ञानेश्वरमाधवमदनपारिजातेषु गोत्रं वंशपरंपराप्रसिद्धमित्युक्तं उक्तंच भट्टपादैरपि समानेपि ब्राह्मण्ये कुटिनोत्त्रिरिति
स्मरणलक्षणं गोत्रमिति नत्वेतावता प्रसिद्धमात्रं लक्षणं साधुशब्दप्रसिद्धेरेव गोत्रप्रसिद्धेरपि प्रामाण्यनिश्चयस्य स्मृत्यधीनत्वात् ननु के-
वलभृगुगणेषु यस्कादिषु केवलांगिरोगणेषु हरितादिष्वव्याप्तिः तेषां सप्तर्ष्यपत्यत्वाभावात् नच तेषां गोत्रत्वं नास्तीति वाच्यं तथा सत्येक
एव ऋषिर्यावत्प्रवरेष्वनुवर्तते तावत्समानगोत्रत्वमन्यत्र भृग्वंगिरसांगणादिति बौधायनोक्तपर्युदासानुपपत्तेः प्राप्तिसंभावनायां हि पर्यु-
दासो भवति यथा जयतिषु येयजामहे करोतीति सामान्यवाक्यादनुयाजेषु येयजामह प्राप्तिसंभावनायां नानुयाजेष्विति अनुयाजव्यतिरिक्ते-
ष्वित्येवं पर्युदासः केवलभृग्वंगिरोगणेषु सप्तर्ष्यपत्यबाह्यत्वेन गोत्रत्वप्राप्तिसंभावनाया अभावात् कथमयं पर्युदासः भृग्वंगिरोगणव्यति
रिक्तेषु एकप्रवरानुवृत्त्या समानगोत्रत्वमिति ननु चायं केवलभृग्वंगिरोगणविषयः पर्युदासः किंतु जामदग्न्यभृगुगणगौतमभारद्वाजांगिरो
गणाविषयः तेषां सप्तर्ष्यपत्यत्वेन गोत्रत्वात् तथाच तेष्वितरगणवदेकप्रवरानुवृत्त्या समानगोत्रत्वसंभावनायामयं पर्युदासः तेन तेषांशा-
स्त्रांतरबोधितद्वित्रिप्रवरानुवृत्त्या समानगोत्रत्वं नैकप्रवरानुवृत्त्येति चेत् न तथा सति केषुचित्तेष्वेकप्रवरसाम्ये समानगोत्रत्वमविवाह प्रयो

जकंनास्ति नापिसमानप्रवरत्वं तेष्वविवाहप्रयोजकमस्ति पंचानांत्रिषुसामान्यादविवाहस्त्रिषुद्वयोः भृग्वंगिरोगणेष्वेवमिति स्मृत्याहित्रि
प्रवरसाम्यस्यैव तेष्वविवाहप्रयोजकतयोक्तत्वात् तथाचतेष्वविवाहप्रयोजकाभावाद्विवाहप्रसंगः नचेष्टापत्तिः भृगूणांवत्साविदाआर्ष्टि
षेणा इत्येतेषांसर्वेषामविवाहः गौतमानांसर्वेषामविवाहइति बौधायनसूत्रविरोधात् तस्मात्तेष्वेकप्रवरानुवृत्त्यासमानगोत्रत्वमविवाह
प्रयोजकत्वमस्तीतिस्वीकार्यम् तथाचायंपर्युदासः केवलभृग्वंगिरोगणविषयएव वचनेष्वप्येकप्रवरसाम्येसगोत्रसप्रवरत्वयोरुक्तन्या
येनाभावाद्विवाहापत्तिः इष्टापत्तेः सचायंपर्युदासोसतिगोत्रत्वेऽनुपपन्नइति तेषांगोत्रत्वंस्वीकार्यं तस्माद्गोत्रलक्षणेहढाव्याप्तिरिति अ
त्रोच्यते प्रवरमंजरीस्मृत्यर्थसारादिप्रामाणिकनिबंधलिखितत्वेनेदंलक्षणमवश्यंस्वीकार्यम् तस्यचकेवलभृग्वंगिरोगणेष्वभावान्न-
तेषांगोत्रत्वम् पर्युदासानुपपत्तेस्तुसमाधानमाश्वलायनसूत्रवृत्तिकारआह एषांगोत्रसदृशपाठात्जामदग्न्यादिभृग्वंगिरोगणानांचगोत्र
त्वानत्साहृश्येनगोत्रत्वभ्रांतिर्भवति ताहृशभ्रांतिप्रसक्तिमपेक्ष्यायंपर्युदासः श्राद्धेकुंडगोलकादिनिषेधवदिति स्मृतिचंद्रिकाकारस्त्वा-
ह नास्मिन्बौधायनसूत्रे एकप्रवरानुवृत्त्यासमानगोत्रत्वमुच्यते किंतुसमानप्रवरत्वमेव प्रवरसाम्यस्यैवप्रागुपक्रमात् गोत्रलक्षणस्य
त्वंतेकथनात् प्रवरर्षीणांगोत्रापत्यत्वाच्च गोत्रशब्देनप्रवरलक्षणा सगोत्रसप्रवरयोरविवाहप्रयोजकतासादृश्यात् गौणीवा तथा
चायंपर्युदासः भृग्वंगिरोगणव्यतिरिक्तेष्वेकप्रवरानुवृत्त्यासमानप्रवरत्वमविवाहप्रयोजकमिति अतएवात्रऋषिशब्दः प्रवरर्षिमात्र

परः नतुगोत्रर्षिपरः भृग्वंगिरोगणेषुतुद्वित्रिप्रवरसाम्येन समानप्रवरत्वमविवाहप्रयोजकंकेवलेषुगोत्रभूतेष्वप्यस्ति तेनकेवलाना-
मगोत्रत्वेपिसमानप्रवरत्वस्याविवाहप्रयोजकत्वमस्ति गोत्रभूतभृग्वंगिरोगणेषुतुद्वित्रिप्रवरसाम्यंसमानप्रवरत्वमपि अतोयंप्रयुक्तःप
र्युदासइति नचायंस्वगोत्रावयवंहरितगोत्रावयवमित्यादिव्यवहारविरोधः गोत्रसदंशपाठात् गोत्रभूतभृग्वंगिरोगणसादृश्याच्चतत्प्रवृ
त्तेः तस्मादुक्तलक्षणंनिर्दोषं केचित्तुकेवलभृग्वंगिरोगणेषुमहर्षिषुचगोत्रव्यवहारोपपत्तये प्रवरऋषिसंबन्धाऋषयोगोत्रमितितल्ल-
क्षणंतैर्गोत्राणीतिसत्याषाढवचनात् प्रवरर्षिभिर्गोत्राणिबोद्धव्यानीतितस्यार्थादित्याहुः तत्र अगस्त्याष्टमानामपत्यगोत्रमित्यग्रि
मसत्याषाढोक्तविरोधादस्यान्यथार्थोव्याख्येयः तैःप्रवरैःगोत्राणिसमानानिबोद्धव्यानीति तथैवाहतट्टीकाकारः प्रवरैर्गोत्राणां
गणव्यवस्थासमानताचेति क्वापिनिबंधेअदर्शनादिदंनिर्मूलमितिकेचित् अन्येत्वाहुः यमधिकृत्ययेषांप्रवराभजंतेसतेषांगोत्रंबोधा
यनोक्तिस्त्वनुवादत्वादुपलक्षणम् अतःकेवलानामपिगोत्रत्वमुपपन्नमिति तदपिनतर्कितलक्षणानुरोधेनवाचनिकलक्षणस्यबाध
कल्पनापत्तेः प्रवरघटितगोत्रलक्षणांगीकारे प्रवरेगोत्रप्रवर्तकस्यमुनेर्व्यावर्त्तकोमुनिगणइतिमाधवाद्युक्तगोत्रघटितप्रवरलक्षणेऽ
न्योन्याश्रयापत्तेश्च केवलभृग्वंगिरोगणेषुमहर्षिषुव्यवहारउपपादितएवेतिसंक्षेपः तच्चाविवाहप्रयोजकंसगोत्रत्वंद्विविधम् ए
कगोत्रत्वंसदृशगोत्रत्वंचेति तत्राद्यमेकैकगणांतःपातिषुतत्रमूलभूतस्यवत्सादेरेकस्यैवगोत्रत्वात् यत्रापिगणावांतरऋषीणांगोत्र

त्वं तत्रापि तदपत्यानि प्रति तेषामेकत्वमेव द्वितीयं तु मित्रभिन्नगणांतःपातिषु वत्सबिदयोरपि गोत्रयोरेकसप्तर्ष्यपत्यत्वेन सादृ-
श्यात् एकसप्तर्ष्यपत्यत्वं च तदनुवृत्त्या ज्ञायते तदनुवृत्तिरपि द्वेधा ध्रियमाणतया सत्तया च आद्या वत्सादिषु जमदग्न्यादेः तत्प्रवरे-
षु जामदग्न्यादिपदसंकीर्त्तनात् द्वितीया कपिषु भारद्वाजस्य तत्प्रवरेषु भारद्वाजपदसंकीर्तनाभावात् केवलं सूत्रादिगतानुक्रमणे-
षु भारद्वाजगोत्रसंदेशपाठेन तदनुवृत्तिः प्रतीयते तदुक्तं स्मृत्यर्थसारे ध्रियमाणतया वापि सत्तया वानुवर्त्तनम् एकस्य दृश्यते यत्र
तद्गोत्रं तस्य कथ्यते इति एकस्या गस्त्यादेरंसप्तर्ष्यन्यतमस्य महर्षेरपत्यस्य यत्र कुले तदपत्यं तत्कुलसंबंधि गोत्रं कथ्यत इत्यर्थः
केचित्तु सत्तयानुवृत्तिर्न सगोत्रत्वप्रयोजिका तस्याः पुराणभेदेनाव्यवस्थितत्वात् अन्यथा विश्वामित्रस्यात्रिः वंशत्वेन पुराणेभिधा-
नात्तद्गणेष्वत्रेः सत्तयानुवृत्तेरत्रिगोत्रत्वप्रसंगः किंतु ध्रियमाणत्वेनैव कपिषु चतादृशभारद्वाजानुवृत्त्यभावान्न तत्सगोत्रत्वम् त-
थाच तेषां भारद्वाजैः सह विवाह एव यथाहाश्वलायनः एतेषां तु विशाषोयमहमप्याभिधानकैः उरुक्षय्यैश्च कपिभिर्विवाहस्त्विभि-
रिष्यते इति एतेषां भरद्वाजगणानां यत्तु स्मृत्यर्थसारः भारद्वाजाश्च कपयो गर्गा रौक्षायणा इति चत्वारोपि भरद्वाजगोत्रैर्व्यान्नान्वयुर्मि-
थ इति तद्वर्गांतर्गतकपिविषयमित्याहुः तत्र अविच्छिन्नशिष्टस्मरणपरंपरामूलकैः गोत्रप्रतिपादकैः कल्पसूत्रादिभिर्द्योतितैनैव सत्तया-
नुवृत्तिः सगोत्रत्वप्रयोजकांगीक्रियते नचैतैर्विश्वामित्रगणेष्वत्रेः साद्योतिता वापस्तंबादिभिः सर्वैः कपिषु भारद्वाजस्य ऋक्ष-

गर्गसंदेशेनपाठात् अन्यथाम्रियमाणतथानुवृत्तावप्यनाश्वासः स्यात् तत्रकल्पसूत्रप्रामाण्यमितितत्प्रकृतेपितुल्यम् आश्वलायन-
श्लोकस्कन्निर्मूलएव भाष्यकारादिभिराख्यातात् स्मृत्यर्थसारादिप्रामाणिकग्रंथविरोधाच्च गर्गांतर्गतकपिविषयतापिविवाह
निषेधस्यनयुक्ता गर्गतुल्यकक्षतयानिर्देशेनस्वतंत्रकपिप्रतीतेः गर्गांतर्गतकपीनामभावाच्च कात्यायनादिभिःकपिभूमीनांतद्वंतर्ग
तत्वेनोक्तत्वात् यत्त्वाश्वलायसूत्रेसुकूलादीनांकेवलांगिरसांभारद्वाजगर्गादिसंदेशापाठात्तत्रभारद्वाजस्यसत्तयानुवृत्तिप्रसंगइति त
दपिनबौधायनादिभिःसर्वैःकेवलांगिरोमध्येतेषांपाठात् आंगिरसत्वमात्रेणचाश्वलायनीयसंकरपाठोपपत्तेः तस्मात्सत्तयानुवृत्तिर
पिसगोत्रत्वप्रयोजिकेत्यलंप्रपंचेनतत्सिद्धंगोत्रलक्षणम् अथप्रवरलक्षणम् तत्रप्रवरणानिप्रार्थनानिप्रवराइतिनिबंधकारै
र्व्याख्यातम् तस्यप्रार्थनानीत्यपेक्षायांबौधायनादिसूत्रेषुएकार्षेयःप्रवरइत्याद्युक्तातद्धितवत्प्रत्ययांतप्रयोगाहृषिसंबंधेनाग्नेःप्रार्थना
नीतिज्ञायते होत्रमंत्रेहि अग्नेमहाँऽअसीत्यादिनाग्निप्रार्थनेकृतेतद्धितांतभार्गवादिशब्दप्रयोगःक्रियते पुनश्चदेवेद्धोमन्विद्धइत्यादि-
नाऽग्नेःप्रार्थनंक्रियते तत्संदेशपाठाद्भार्गवादिपदैरपिऋषिसंबंधेनाग्निःप्रार्थ्यते यथायजमानोभृगुवंशोत्पन्नत्वाद्भार्गवः तथात्व
हुत्सादित्वात्त्वमपिभार्गवइति अस्यफलंयथाभृग्वादीनांप्रसिद्धब्राह्मण्यानांहविस्त्वयादेवान्प्रतिनीयते तथातद्वंशस्यास्ययज
मानस्यप्रसिद्धब्राह्मण्यस्यहविर्देवान्प्रतिनेयमितिसूचनम् अध्वर्युमंत्रेपिऋषिसंबंधेनाग्नेःप्रार्थनंक्रियते एवंहिमंत्रः अग्निर्दे

वोहोतादेवान्यक्षद्विद्वांश्चिकित्विन्मनुष्वद्भरतवदित्यामुत्काजमदग्निवदित्यादिहोतृविपरीतक्रमेण वत्प्रत्ययांतंतत्प्रवरपादान्युच्चार्य-
ब्रह्मन्एवदाचवक्ष्ब्राह्मणाअस्ययज्ञस्यप्राविताराेऽमुकशर्मामानुषइति अस्यार्थः हेब्रह्मप्रमुखाः ब्राह्मणाः यथाग्निर्देवसंबंधीहोताचि
कितमनुभरतानामेतद्यजमानपूर्वजानांजमदग्न्यादीनांब्रह्मणाश्चयज्ञदेवताः यजमानांश्चाधिकारियोविद्वान्देवानिंद्रादीन् पक्षवक्ष
च्च तथामुकशर्मायंमानुषोपिहोतातदपत्यत्वेन तत्सदृशस्यास्ययजमानस्ययज्ञेदेवहोत्र्यग्न्यधिष्ठातृबलेनविद्वान्देवान्यजत्वावहतु
चेति तेनोभयत्रापिअग्नेरेवप्रार्थनाख्यवरणकर्मत्वं ऋषीणांतुविशेषणत्वेनतत्संबंधः एतत्संबंधविषयैर्वाक्यैरिदमार्षेनामप्रवर-
इतिमिताक्षरायामुक्तं नतुप्राधान्येनतत्प्रकाशनमुभयमंत्रानन्वयापत्तेः केवलप्रातिपदिकेनऋषिप्रकाशसंभवात्तद्धितवत्प्रत्ययांतता
वैयर्थ्याच्च अत्रकेचित् मंत्रकृतोवृणीतइतिविधौमंत्रकृतांकर्मत्वप्रतीतेः प्रथियंतइतिव्युत्पत्त्याऋषीणामेवप्रवरत्वम् मत्स्यपु
राणे भृगुच्यवनादिनाशब्दान्प्रयुज्यइत्येतेप्रवरामताइतिकीर्तनात् अतोनाग्नेर्वरणाकर्मत्वंउक्तविध्यनुसारेणमंत्रान्वयानौजस्यनदो
षाय ऐंद्रीवत् तद्धितादेश्चस्वार्थपरार्थादिनायोजनादित्याहुः तत्रतद्धितवत्प्रत्ययांतत्वस्याग्निप्रकाशकमंत्रपाठस्यऋषिपरत्वेआ-
नर्थक्यप्रसंगेनानर्थक्यप्रतिहतानांविपरीतंबलाबलमितिन्यायेनविधिनामेवानौजस्यकल्पनस्योचितत्वात् मंत्रकृतःसंकीर्त्याग्निंवृणी
तइत्यध्याहारेणविधयोव्याख्येयाः यद्वाविधिनैवाध्याहाराऋषीणामग्निविशेषणत्वेनवरणंप्रत्यनीप्सितकर्मत्वाभिप्रायेणव्याख्येयाः

एवंमत्स्यपुराणमपिकर्मव्य त्याकरणव्युत्पत्त्यावाव्याख्येयमितिदिक् तस्मिन्नुंप्रवर णान्यभिप्रार्थनानिप्रवराइति इतिप्रवरल-
क्षणम् तच्चविवाहप्रयोजकंसमानप्रवरत्वंद्विविधम् एकप्रवरसाम्यं द्वित्रिप्रवरसाम्यं अ द्यंभृग्वंगिरोगणेषु तत्रपंचप्रवराणां-
त्रिप्रवरसाम्यं त्रिप्रवराणांद्विप्रवरसाम्यमविवाहप्रयोजकमितिमंतव्यम् पंचानांत्रिषुसामान्यादविवाहस्त्रिषुद्वयोः भृग्वंगिरोग-
णेष्वेवंशेषेष्वेकोपिवारयेदितिवचनात् शेषेष्वेकोपिप्रवरःसमानश्चेद्विवाहंवारयेदित्यर्थः इदंचासंकीर्णकेवलभृग्वंगिरोगणेष्वविवा
हप्रयोजकम् तेषांगोत्रत्वाभावेनासमानगोत्रत्वस्याप्रसक्तेः अतएवंतेषुद्वित्रिप्रवर साम्याभावेविवाहएवभवति समानगोत्रत्वंचासं-
कीर्णेकपीनांभरद्वाजगणैःसहाविवाहप्रयोजकंतेषामेकप्रवरसाम्येपि अंगिरोगणत्वेनापेक्षितद्वित्रिप्रवरसाम्यस्याभावात् संकीर्णे
त्वेतेप्रायशःसर्वत्रैवेत्यलंभूयसागोत्रप्रवसंबंधिपरिभाषानिरूपणेकृतेगोत्राणितेषांचप्रवराङ्गणयाम्यहम् तत्रभृगवोद्विविधाः जाम
दग्न्याकेवलाश्चद्वौजामदग्न्यौवत्सविदौकेवलाः षट्वत्साः आर्ष्टिषेणाः यास्काः मित्रयुवः वैन्याः शुनकाः इतितत्रद्विविधाअपिवत्सा
स्तत्रेणोच्यंते मार्कंडेयाः मांडव्याः पैलाः पैंगलायनाः दार्भायणाः शार्कराक्ष्याः देवतायनाः शौनकायनाः मांडूकेयाः षाषीकाः साकांभ्रा-
त्तायनाः पैलाः पिंगलायनाः दाधेयकाः बात्यकःश्यवेश्वतरयः वैहितरयः वैरोहिताः बात्याः वृन्द्वाः गोष्ठायनाः टीकपाःकाशकृत्स्नाः
बादृभृतकाः कूलभगाः ऐतिशायनाः जातायनाः पाणिनिः वाल्मीकिः स्थौलपिंडयः सौपातवाः जिहितयः सावर्णिः वाकायनाः बाला

यनाः सौकृतयोमंडवः सोविष्टयोहस्ताग्नयः शौहूकयाः शौह्वाकयो वैकर्ण्यौ द्रोणकजिह्वयः औरसयः कंबलोदरयः वाकारकृतौ
वैहलयः सांकवाहाः कारस्तंबराः कारवाः तामसाः विरूपाक्षाः वृकाम्बाः उच्चैर्मन्यवो हैमत्याः आर्यापणाः यार्कायणाः काद्धायणाः
वापनयः वायनिनः शार्ङ्गरवाः चांद्रमसाः गांगेयाः लौयेययाज्ञियः जाबालिः बाहुमित्रार्यणाः आपिशलयः नैषधुरवो लौहितायनाः
उद्ध्राक्षाः मालायनाः शारद्वतायनाः रजतवाहाः वत्साः वत्स्यायनाः एतावंतो बौधायनोक्ताः कात्यायनलौगाक्षिभ्यामन्येप्युक्ताः
नालायनाः वागायनाः भैनुमानकयो जैह्मतयो जीवंतयः कांबलोदरयो वैहायनाः रैरवायनयः पार्षतयः पार्णिलयः उच्चयमानाः
सासकर्णयो वालाकयः तौलकेचिनः कृतभागाः आर्तभागाः आजिहीनाः आतिथयः स्थैामांगिरयः स्थोलाः सौरवाः बर्हिषोदे-
वमतयो गार्ग्यायणाः गैत्यायनाः गोष्ठायनाः वैशंपायनाः गालवाः सांकृतयः वाणकयः ऐनिकायनाः भ्राष्ट्रेयाः भ्रारुत्रेयाः लाक्षेयाः
लाकुञ्चयः लालाटयः आवपाः आगावपाः सौष्मिकयः सात्यकायनाः नैकर्षयः शाकल्याः याकानुमतयो जैकजिह्मयो जैह्माकनयः
आश्मकमाः कौचहस्तयो ऽनुलोमिनः क्रौंचाः चैक्षाः क्रौंचाक्षयः सौरध्वजयः वाष्यात्केपाः निरीणयः वासयः सदनाः स्थोपाः
स्यंदनयः कठेरणयः लवेरणयः सौगोलयः मांध्योदाः मात्स्योनाडायनो वैरायणो वैन्यो रौहित्यायनिः कृपानीलः सावर्णिः वि-
कस्वरूपः विष्णुः तौलकेशिः जह्निनः वीतिनः कनयाः नलिनः शिखापतिर्जलनिधिः सेनाजित् कृत्स्नः पैंगलायनिः दिवः

पति॰ ऋषभाः॰ स्रुत॰ पल्लव॰ कौपियज्ञ॰ मित्रयज्ञ॰ आमिलायनाः॰ हार्यति॰ वैकाणियि॰ भाल्लकायति॰ लाक्ष्मण॰ शाल्यपति॰ माल्या
पति॰ कौठलि॰ सौक्ति॰ कोठर॰ साक्षीसांद्रमणि॰ नैकजिह्व॰ जिह्वाशून्य॰ कैललेद्वि॰ डिकम्बरि॰ सारध्वजि॰ नैमिश्योलोष्टाक्ष॰ ग
रेवणि॰ पौर्णसौगंधि॰ काशोकृत् सौमदायनाः॰ स्वानुमतयो मंडचित्राः॰ शौंक्रायणाः॰ त्वाष्ट्रेयाः॰ कौञ्चकुंड्य॰ शौनायनाः॰ शौकपौ-
र्णयोर्व्रीहिमतय॰ मायामति॰ राघ्रेवकि॰ कोशनोमौद्गला॰ कारकारवच॰ सांतपनायनाः॰ जल्ह॰ भेन्हि॰ किरुष॰ स्तन्वंत॰ औल-
धि॰ वापर्गिराणि॰ श्येनयागति॰ नैकवि॰ शौन्हकर्णि॰ निडायनाः॰ २० इत्येतेवत्साः॰ तत्रयेजामदग्न्यावत्साः॰ तेषांपंचप्रवराः॰
भार्गवच्यावनाप्नवानौर्वजामदग्न्येति त्रयोवा भार्गवौर्वजामदग्न्येति येत्वजामदग्न्यावत्साः॰ तेषांत्रयः॰ भार्गवच्यावनाप्नवा
नेति अथजामदग्न्यबिदाः॰ बौधायनाबिदाः॰ शैलाः॰ अवठाः॰ प्राचीनयोग्याः॰ अभयदानाः॰ कोडरथयोवैनभृत॰ पुलस्त्य॰ आ-
र्कायणाः॰ नाष्ट्रायणाः॰ ताम्रायणाः॰ कौंचायशाः॰ कामलः॰ पौलस्त्यः॰ वेदभृत् अभयजाताः॰ त्रैकायनाः॰ भ्राजोभ्रादंत्याः॰ वैकायनाः॰ भृजा
यनाः॰ २० इत्यादयोबिदाः॰ तेषांपंचप्रवराः॰ भार्गवच्यावनाप्नवानौर्वबैदेति त्रयोवा भार्गवौर्वजामदग्न्येति अजामदग्न्यबिदानां
भार्गवौर्वजामदग्न्येतित्रयइतिकात्यायनाः॰ वत्सानां भार्गवच्यावनाप्नवानेतित्रयइत्यपितेनैवोक्तम् पंचप्रवरेषुबिदेषुजमदग्नेस्सत्तया
नुवृत्तिः॰ आर्ष्टिषेणाः॰ नैकेथयो यास्यायणाः॰ काणायणाश्चांद्रायणाः॰ पैठकलायनाः॰ सिन्हाः॰ रूमनायनाः॰ गौराषि॰ भृग्वंदीयो-

मार्गयथा नैकर्षिः आपस्तंबिः वाल्बिः कार्दमायनिः गार्दभिः अनूपाः चट्टायनिः कर्किः आश्वभिः ११ इत्यार्ष्टिषेणाः तेषांपंचप्र-
वराः भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति त्रयोवा भागवार्ष्टिषेणानूपेति केचिदेष्वपिजमदग्नेः सत्तयानुवृत्तिमाश्रित्यजामदग्न्यत्व
माहुः तत्स्मृत्यर्थसारादिविरुद्धं पंचावर्त्तीनांचैषामजामदग्न्यत्वेपि वाचनिकी एतेपंचान्वावृत्तित इति बौधायनवचनात् अविवा-
होवत्सविदाभ्यांसहत्रिप्रवरसाम्यात् यद्यपित्रिप्रवरार्ष्टिषेणानांनान्यैः सहद्विप्रवरसाम्यंतथापि पंचार्षेयसंगतमपि प्रवरसाम्यमेषु
अविवाहप्रयोजकंवत्साविदा आर्ष्टिषेणा इत्येतेषामविवाहइतिबौधायनवचनादिति वृद्धाः नचपंचप्रवरेषुविदेषु अपिजमदग्नेः सत्त
यानुवृत्तौमानाभावः तत्रजामदग्न्यत्वप्रयुक्तौर्वशब्दसमन्वयात् यथाहाश्वलायनसूत्रवृत्तिकृत् और्वजमदग्निशब्दौजामदग्न्यत्व
प्रयुक्ताविति त्रिप्रवरेषु तदनुवृत्त्याऽन्यत्रापितदुन्नयनसंभवाच्च अतोजामदग्न्यवत्सविद्योः सगोत्रत्वसप्रवरत्वाभ्यामविवाहः अ-
जामदग्न्यवत्सार्ष्टिषेणाभ्यांसप्रवरत्वेनेतिदिक् वात्स्यानांत्रयः भार्गवच्यावनाप्नवानेति वत्सपुरोधसयोः पंचभार्गवच्यावनाप्नवा
नवात्सपौरोधसेति वैजवमिथितेति तयोः पंच भार्गवच्यावनाप्नवानवैजवनमिथितेति एतेपिक्वचित् एतेषांपरस्परंपूर्वोक्तैश्चाविवाहः
प्रवरसाम्यात् यस्काः मौनोमूकोवाधुलोवर्षपुष्पोभागलेयोभागविज्ञेयोदुर्निदोभास्करोदैवतायनोवार्कलेयोमार्ष्टमेयावासयः कोशां
बेयाः कौथिल्याः सत्यकपयः वित्रसेनाः भारुरिः च्छयाः वातहव्याः माधूल्याः मौसलाः जीवंत्यायनाः अर्थलेखयोवृकाश्वकयोमथो-

कंधोवारथाः गौरिक्षिताः वैद्यंविताः पंचालवाः पौष्णावताः गौदायनाः पंदुमोदनो भागलिर्भागवत्तिः पिलिः खलिः काश्यपिः काले
पिः समदागपिः सौरिः त्वरिः भागंजयः सानुष्टयोमादायनाः शालंकायनाः तार्क्षाः प्रावरेपाः शार्करास्तिः कौटिल्योविलेभिः क्रियोहाले
योर्दिर्धवित्तः ५३ इत्येतेयस्काः वैतहव्याइतिकेचित् एषांत्रयः भार्गववैतहव्यसावेतसेति मित्रयुवः रैष्णायनाः सापिंडिनाः
रभिनेयाः माल्याः महाबाल्याः तार्क्ष्यायणाः कैतरायणाः शाकटाक्ष्याः मैत्रेयाः सांवर्याः द्रोणायनाः ऐकव्ययनाः आविकायनाः हंस-
जिह्वारोप्यायणाः सात्यडिनः पिंडिकाक्षामोदायनाः कापिशायनाः शौंडेयाः साक्षिनामित्रयुजः आपिशायनाः पाठिकायनाः वा-
ध्र्यश्वादिवोदासः ३१ इत्येतेमित्रयवः द्विवोदासाइतिकेचित् एषांत्रयः भार्गववाध्र्यश्वदैवोदासेति अंत्योपांत्ययोर्व्यत्ययोवा
एकोवावाध्र्यश्वेति भार्गवच्यावनदैवोदासेतिवा वैन्याः पार्थाः बाष्कलाः श्येनाः ४ इत्येतेवैन्याः श्येनाइतिकेचित् तेषांत्रयः भा
र्गववैन्यपार्थेति शुनकाः गार्त्समदाः यज्ञपतयः सौगधयः रवार्दमायनाः गार्भायणाः मत्स्यगंधाः श्रोत्रियाः तैत्तिरीयाः सौकराः
पारसगंधाः प्रत्यूषाः कार्दमायनाः चोक्षाः श्रोण्याः शान्तयायनाः राजबांधवयाः १७ इत्येतेशुनकाः एषामेकः शौनकेति गार्त्सम
देतिवा द्वौवा भार्गवगार्त्समदेति त्रयोवा भार्गवशौनहोत्रगार्त्समदेति शौनहोत्रेत्यस्यस्थानेशौनकेतिकेचित् यास्कादीनांचतु-
र्णांस्वगणंहित्वापरस्परंपूर्वैश्चसहविवाहोभवत्येवद्वित्रिप्रवरसाम्याभावात् तदुक्तंस्मृत्यर्थसारे यास्कामित्रयुवोवैन्याः शुनकाः

प्रवरैक्यतः स्वंस्वंहितागणंसर्वैर्विवरेयुः परावरैः प्रवरैक्यतःस्वगणंहित्वेतिसंबंधः मित्रयूनां याक्षिकद्वित्रिप्रवरसाम्यात्त्रिप्रवरै-
र्वत्सादिभिःसहविवाहइतिकेचित् तत्पक्षग्राहिणामविवाहः पक्षांतरग्राहिणांमित्रयूनांविवाहएवेत्यन्ये चतुर्विधशौनकानांपर-
स्परंविवाहएवप्रवरसाम्याभावादितिकेचित् वृद्धास्तु एकगणस्थत्वाद्गोत्रत्वाभावेप्यविवाहएव एतेषामविवाहइतिकात्यायनादि
भिःसर्वेषामविवाहाभिधानात् स्वगणंहित्वेतिस्मृत्यर्थसाराच्चेत्याहुः केचित्त्वधिकंगणद्वयमुक्तम् वेदविश्वज्योतिषांत्रयः भार्गववेदवि
श्वज्योतिषेति शाठरमाठराणांत्रयः भार्गवशाठरमाठरेति अनयोःपरस्परंपूर्वैश्चविवाहः इतिभृगवः अंगिरसस्त्रिविधः गौत
माःभारद्वाजाः केवलाश्च गौतमांगिर सम्बसप्त आयास्याः शरद्वंताः कौमंडाः दीर्घतमसः कारेणुपालयःवामदेवाः औशनसाश्च आ
पास्याःश्रोणिवेधाः मूढरथाःसत्यकायःसैवदेहाःकौमारवत्याः तौडंदर्भिःदैवकिःसात्यमुनिःकौबात्याः वैम्याःतौकरिःस्वस्तेषकिः
कीलालयः कारुठायः कांठीरयः काशीवाजःसाक्षीकःपार्थिवाः १९ इत्यायास्याः तेषांत्रयःआंगिरसायास्यगौतमेति अथशरद्वंताः
अभिजिनाःरौहिण्याः क्षीरकरंभाःसौमुचयःसौयामुनाःऔपविंदवः रहूगणाःगणायोभाषणीक्षौलेभाः नैकरयःकरपोगिण्याःसैं
धवागतवाःसांगराःसौमिवयःपौष्पिंडयःभागलाःकुंडवाः कारोठाः काशवरयोमाञ्ज्यर्थाः इषवोरोहितायनाः अंगारकाःशैलाय-
नाः कास्तोष्णायी गरुणयःपार्थिवाःमौदहायनाःस्कंदाःसरवाःकौटिल्याः वासमुलयोवासपुष्पयोवासरस्तेवयोवासधूपयःकाचाक्षयः

क्षपावारर्षयः कारलयः उतथ्याः बोधयनगाः स्फगोमापक्षाः क्षीरयष्टिकयोराहूकर्णायः सौमुत्रयः सामलोमकयः पौष्कजितयो भागः
वाडंडकाः स्फतयः स्फरेषिणः रौहिणायनयः कोष्टावनयः अरुणायनयः सौदामनयः कासोनाः कौशल्याः रौहिणीयाः कारथमयः
मूलयः वासवः पुष्पवंतः वाविकः रेवयः औपमन्याः षष्टिकाः शौनरयः शाययस्वरिकाः नैकषयः तौदेयाः वाल्यैौह्वाः इत्येतेशरद्वंताः
तेषांत्रयः आंगिरसः गौतमः शारद्वद्वेति कौमंडः मामंथरेषणाः मांस्फराक्षाः काषरेरवयः आजायनाः चांजायनाः कार्क्षीवताः
औशिजाः मास्फरेस्वयोवाशायः १ इतिकौमंडाः तेषांपंच आंगिरसौ तथ्य कार्क्षीवतगौतमकौमंडेति दीर्घतमसांपंच आंगिर
सौ तथ्यकाक्षीवतः गौतमः दीर्घतमसेति त्रयोवा आंगिरसौ तथ्यदैर्घ्यतमसेति कारेणुपालयोवास्तव्याः श्वेतीयाः पौजिष्ठाः औद
जायनीः साधुक्षाराः अंजगंधाः ७ इतिकारेणुपालयः तेषांत्रयः आंगिरसागौतमकारेणुपालेति वामदेवानांत्रयः आंगिरसवा
मदेव्यबार्हदुक्थ्येतिवा औशनसाः दिश्याः प्रशस्ताः स्फरूपाक्षाः महोदराः विकंहताः स्फबुत्थ्याः निहताः गुहाः ९ इत्यौशनसाः
तेषांत्रयः आंगिरसगौतमौशानसेति कचिदन्येप्युष्टौउक्ताः औतथ्यानांत्रयः आंगिरसौतथ्यगौतमेति औशिजानांत्रयः औशीरसौ
शिजकाक्षीवतेति आयसौशिजानांपंच आंगिरसायास्योशिजगौतमकाक्षीवतेति रहूगणानांत्रयः आंगिरसराहूगणयगौतमेति
काक्षीवतांपंच आंगिरसौतथ्यगौतमौशिजकाक्षीवतेतिसमुवानांत्रयः आंगिरससुवगौतमेति एषांसर्वेषांगौतमांगिरसांपरस्परंअ

विवाहः गौतमस्यध्रियमाणतयासत्तयानुवृत्तेः सगोतमत्वात् प्रायेणाहित्रिप्रवरसाम्याच्च इतिगौतमाः अथभरद्वाजाः ते
चत्वारः भारद्वाजाः कपयः गर्गाः रौक्षायणाश्च भरद्वाजाः क्षाम्यायणाः भेगणाः देवाश्वाः इंद्रहव्याः प्राग्वंशयोवाहलक्षाः वात्स्यो
गाः वसीतायनाः तैदेहाः आम्लाः औक्षाः श्रूरयः पारिणद्द्याः केशरवेयाः शौहूयः उरूढाः स्वारिग्नीवयः औपवसयोवयोक्षिपीदाः
अग्निवेश्याशयः गौरिवावनाः रवेलकाः स्तनकर्णाः ऋक्षाः माणिभिंद्याः कद्वादकाः सौज्वलायाः वैलाः रैवारडाः देवयोभरुंडयोः
भद्रादयः सौरभराः श्रृंगाः देवमतयः इक्षुमात्राः औद्यमेययः प्रवाहणेयाः कल्माषाः राजस्तवयः संधोपकृतयः पराहरयोः बलभीकयो
रुद्रांगयथाः शालङ्क्योर्वेलाः नृत्यायनाः नृत्याः शाललयः शार्दूलयः काक्सलयः बाष्कलाः सत्यकेयाः कौंडायनाः कौंडिन्याः ब्रह्मस्तंभाः
राजस्तंभाः अग्निस्तंभाः वायुस्तंभाः सूर्यस्तंभाः सोमस्तंभाः विष्णुस्तंभाः यमस्तंभाः इंद्रस्तंभाः आपस्तंबाः येचान्येस्तंभशब्दांतास्ते
पि आरण्यः सिंधवः कौमुदगंधयः शिरवायनाः मात्रेयापणाः भामारापाः कुक्षाः कौकाक्षयः जैतुंदपादार्णयः शामेयाः मत्स्यका-
पाः कारुणायनाः कारुपथयः कारिषायणाः कावल्याः वालिशायनाः सौरयः वाराहयः विविपयः शिलापलयः पैलाः शालंकायनाः जै
त्र्यलायनयः साष्टकपः लाभायः आपस्तंबयोधौतांचकयोक्षित्य द्रोणेयोवात्स्यगच्छेयः व्यटाकपस्तारय्यौवायोवाजवृषयः प्रवाहयः द
शादीकयः तूर्णकर्णयः कांचयः देवगारयः हाविकर्णयः सपोलयः सौगेयाः मालेहराः स्वगरवलायनाः सौविष्टाः हालीहराः सात्या

सुग्रयोलेखायना॰ कारुणायना॰ चैला॰ रुक्षा॰ विकायना॰ बाललक्षा॰ गौरिवा॰ सौपथा॰ सौभरा॰ सोबुन्द्रयो धौर कुलिका॰ विकारा॰
कुपिया॰ मालाहला॰ श्रीपाया॰ निद्रांगवधा॰ शैखेया॰ माधकबर्या॰ कांडण्या॰ औन्चेया॰ मैथुनमतय॰ कौलेत्रया॰ खारणादय॰ देवस्था-
नतय॰ शालहयो गोरवइंगलयो गांगोदयो अधिकारग्रीवयो यंकवयोमायायणा॰ शाक्रा॰ काजा॰ सौविश्वा॰ कासुकायना॰ सिंधव॰ सा
रावयवाहय॰ सामस्तंबस्तोमस्तंबय॰ ब्रह्मस्तंबय॰ आश्वलायनयोमार्कंडेयोउक्ता॰ सौगय॰ १६ इतिभरद्वाजा॰ तेषांत्रय॰ आंगिरस॰
बार्हस्पत्यभारद्वाजेति कपय॰ स्वस्तितरयोविदचोदंडिनोदिक्षशक्तय॰ पतंजयोभूयसिन॰ तैरंधय॰ चैतकप॰ ऊर्ध्वास्ताराजकेशिन॰
कलसिन॰ कण्वा॰ करीतय॰ वान्यायवा॰ आमावास्यायना॰ कात्यायना॰ कपेतरा॰ स्वदतरा॰ जलसिंचय॰ कुसीदरय॰ स्वौजटय॰ सासव
य॰ सहुम॰ क्षरापा॰ सावस्थायनय॰ १३ इतिकपय॰ तेषांत्रय॰ आंगिरसामहपौरुक्ष्यायेति आंगिरसामहीयवोरुक्षयसेतिआश्वला
यनपाठ॰ केचित्वं गिरस बार्हस्पत्यभारद्वाजेति आंगिरसबार्हस्पत्यकापेयेतिपक्षद्वयमाहु॰ गर्गा॰ सोभरायणा॰ सखीतयोमाधरा
यणा॰ बाहुलयोभ्राष्टकृतोभ्राष्ट्रबिंदव॰ क्रोष्टकप॰ सौयासुना॰ भ्राजिनाक्षयोहोत्रापवय॰ सत्यापवया॰ मत्स्यतरायणा॰ संभरा॰
वत्सचतुरायणा॰ काण्वायना॰ सांख्यायना॰ कात्यायना॰ कैवलायना॰ कौंडायना॰ भारमता॰ प्रश्यंगा॰ पैल्वकायना॰ विश्वायवकायना॰
कौलिन॰ मधुरावहा॰ सांपरिवारा॰ बालातप॰ शालायतप॰ साहनायोमाधुरावदाऐंद्राक्षय॰ लोपकृत॰ भालकृतौ वांसायना॰ शारायणा॰

शामायनाः रामिणोभागिनः कारिणः आस्मिनः क्रीडितः रावारताः मालविदाः औपमकंपः कार्षायनाः कौंजवयः शालंकायनाः कौ
त्सास्ताः श्यामाः ५० इतिगर्गाः तेषांपंचांगिरसः बार्हस्पत्य भारद्वाजसैन्यगार्ग्यैति शैन्येतिक्वचित्पाठः त्रयोवा आंगिरससैन्यगार्ग्येति
अंत्ययोर्व्यत्ययोवा भारद्वाजगार्ग्यसैन्येतिवा तित्तिरः कविभूमयः रवंडिताइत्येतेषांमार्गणांत्रयः आंगिरससैन्यगार्ग्यैति आंगिरसतैत्ति
रकविभुवेतिवा रौक्षायणाः कपिलाः शबलाः शिफिलाः विपिंडयः कौस्तुमाः अग्निजिह्वाः कर्णाः ऋताः ९ इत्युक्षाः तेषांपंच आंगिर
सबार्हस्पत्यभारद्वाजवांदनमातवचसेति त्रयोवा आंगिरसवांदनमातवचसेति आत्मभुवांपंच आंगिरसबार्हस्पत्यभारद्वाजमंत्रवरा
त्मभुवेति अयंगणः क्वचित् एषांभारद्वाजांगिरसांपरस्परमविवाहः ब्रियमाणतयासत्तयावाभारद्वाजानुवृत्तेः सगोत्रत्वात् प्रायेण
द्वित्रिप्रवरसाम्याच्च इतिभरद्वाजाः केवलांगिरसः षट् हरिताः कुत्साः कण्वाः रथीतराः विष्णुवृद्धाः मुद्गलाश्च हरिताः शंखदर्भ
यः सौभाग्याः नेय्यगवाः मतायवाः वालोदराः महोदराः नैमिश्रयो मिश्रोदकाः कौतपाः करीषवः कौलयः पौलयः पौटलयः पौटलाः म
त्स्याः मांधातवो मांडकारयः रवांडायनाः मांडमालयः गवेरणयो मत्स्य मालयीगाराः गरयो मद्रागरयः कुत्साः हंसाः हस्तिवायसाः पैंग
लाः पिंगाः पालाशिनोदादंलाः हस्तिनः कौमारहारितः इलाः ३३ इतिहरिताः तेषांत्रयः आंगिरसांबरीषयौवनाश्वेति मांधात्रांबरी
षयौवनाश्वेतिवा कुत्सानांत्रयः आंगिरसमांधातृकौ त्सेति कण्वाः औपमर्कटायनाः बाष्कलाः पौलहस्तिनो मौंजिभाजयः मौंजि

गंधाः विजयाजयाः वाजश्रवसः भारडाः भरूडारमणाः सणामर्कराः गर्दभाः भाकासराः शाकटायनाः गोदायनाः शानायनाः रामायणाः
शोवेरिणाग्नारिणाः आर्यादयश्चतुराः श्यामायनाः २२ इतिकण्वाः तेषांत्रयः आंगिरसाजमीढकाण्वेति आंगिरसघोरकाण्वेतिवा र
थीतराः हस्तिदाः सिकाक्ष्यनाः नैतिरक्षयः भैलयः भिलोभायनाः सावहवाः भेक्षवाहाः हेमगवाः वैरूद्यापिरूपाः अंगुष्ठाः अष्टादंष्ट्राः पृ
षदश्वाः १५ इत्येतेरथीतराः तेषांचत्रयः आंगिरसवैरूपराथीतरेति आंगिरसवैरूपपार्षदश्वेतिवा अष्टादंष्ट्रवैरूपपार्षदश्वेतिवा अंत्ययो
र्व्यत्ययोवा विष्णुवृद्धाः शठाः मरणाः मद्गणाः भद्रणाः भद्रयः बादरायणाः वात्सप्रायणाः सात्वकपसात्यकायनाः नैतुंद्याः स्तुत्याः भा
रुण्याः वैहोदाः देवस्थायनः क्षात्रिणाः छत्रिणाः होत्रिणाः सत्रिणः जतृणाः वज्रिणाः कर्तृणाः शांवरायनाः औपमीतयः औपगवयः
१५ इत्येतेविष्णुवृद्धाः तेषांत्रयः आंगिरसपौरुकुत्सत्रासदस्येति मुद्गलाः सात्यमुग्रयोहिरण्यस्तंबयोहंसजिह्वाः देवजिह्वाअलवालाः
विडालादयः आम्रादयः सजयः छत्रहयाः तारणाः कार्यभासिताः हिरण्याक्षा दीर्घजिह्वाः हिरण्यगर्भाः भिंदयः १९ इतिमुद्गलाः ते-
षांत्रयः आंगिरसभार्म्याश्वमौद्गल्येति आद्यस्तार्क्ष इतिवा आंगिरसताविमौद्गल्येति वा एषांकेवलांगिरसांस्वस्वगणांहित्वापरस्प
रंपूर्वैरंगिरोभिश्चविवाह एवसगोत्रत्वाभावाद्धित्रिप्रवरसाम्याभावाच्च हरितकुत्सयोरस्त्वविवाहः पाक्षिकद्विप्रवरसाम्यात् हरितकुत्स
पिंगशंखदर्भभैमगवानामित्याश्वलायनेनसर्वप्रवरसाम्योक्तेरित्याहुः इतिकेवलांगिरसः अथात्रेयाः तेचत्वारः अत्रयः गवि

ष्ठिराः वाद्भूतकाः मुद्गलाश्च अत्रयोभ्रूरयः छांदयाः छंदोगेयाः पौपिकाः मौहलयः सौवालगलाः छागलाः भृतृणबिंदवः भार्गतपः मा-
लरुचव्यालयः सांचव्यानयः कामर्यनयो दाक्षायस्ते दहामायितयाः औदालकयोद्रोणभावाः गौरीग्रीवियाः माविरिणः शैशुपालाः कृ
ष्णात्रेयाः गौरात्रेयाः रूक्षात्रेयाः नीलात्रेयाः श्वेतात्रेयाः श्यामात्रेयाः महात्रेयाः गालेयाः वालेयाः शौफेत्रेयाः बामरथ्याः श्वेतभावाः शौ-
ंडेयाः गोपवनाः भारद्वाजायनाः इंद्रातिथयः शांरवरयः आहायगाः पवनाशाः किकिदिवयः शौनककर्णायः सौश्रुतयः सौरग्रीषः कैरंज
यः जैत्रायणाश्चैकयः बाहुतंत्राः वाहमित्राः जानुकयाः पतंजनाः भागमादनाः सांख्येयाः सारायणाः सौक्तवराः अर्यमथाः गोपन्याः कल-
जिह्वाः उड्डरग्रीवयोर्वैडाळयः शाकलायनाः गौणीपथाः बलदाः भागपादाः आर्च्यायणाः बादर्यायणाः मांगलाः बाहुदंतयाः भागलेयो
हणात्रेयाः दत्तात्रेयाः शैस्वयः करायणाः नीशायनाः रथ्याः वुपाद्वुलाः वामरथ्यावैश्वानकय शोधूलकः निकलाः ९४ इत्यात्रेयाः आद्या
त्रयइतिकेचित् तेषांत्रयः आत्रेयार्चनानसश्यावाश्वेति गविष्ठिराः दक्षयोभलंदनाः और्णनाभयः चांद्रात्रेयाबैजवापयः मौजकेशाः
पूर्वातिथयः श्यामपुष्पयः शिलंदलंदलयः बह्मपुष्पयो व्याघ्रपुष्पयो सौपुष्पयः कणशीयवकः हिरण्यपुष्पयः कालासयकालशीर्षयः प्लु
क्षयः वलयः घृतपः पार्ष्णयः कटुकयोमैत्राण्याः शिरीषकाः २४ इतिगविष्ठिराः तेषांत्रयः आत्रेयार्चनानसविष्ठिरेति आत्रेयगाविष्ठि
रपौर्वातिथेतिवा वाद्भूतकानांत्रयः आत्रेयार्चनानस वाद्भूतकेति मुद्गलाः शालिसंधयः अर्णवाः बौधाक्षाः तैतवाहः शिरीषयः शालि-

मताः गौरिताः गौरिकाये वाजवतः १० इतिसुङ्ला: पूर्वातिथयइतिकेचित् तेषांत्रयः आत्रेयार्चनानसपौर्वातिथेति कृविक्षन्येपं
चाप्यातः अतिथयः वामरथ्याः स्तमंगलाः बीजवापाः धनंजयाश्च आद्यचतुर्णा आत्रेयार्चनानसगाविष्ठिरेतिवा स्तमंगलानामत्रिसु
मंगलश्यावाश्वेतिवा धनंजयानां आत्रेयार्चनानसधानंजय्येति वालेयाः डालेयाः कौड्रेयाः शौफ्रेयाः वामरथ्याः गोपवनाः इत्यत्रे:
पुत्रिकापुत्रास्तेषांत्रयः आत्रेयवामरथ्यापौत्रिकेति अत्रीणांसर्वेषामविवाहःसगोत्रत्वात् सप्रवरात्त्व इत्यत्रयः अथविश्वामित्रा-
स्तेदश कुशिकाल्लोहिताः रौक्षकाः कामकायनाः अजाः कताः धनंजयाः अघमर्षणाः पूरणाः इंद्रकौशिकइतिकुशिकाः पार्णतजयाः
वारक्याः औदलयो माणायोबृहदग्नयः आलवयःआयहयः आयघप्याःकामंतकाः बन्धूकथाः चिकिताः कामकायनाः शालंकायनाः का
त्यायनाः लौकाः गौराः सौगंतव्याः यमदूताः आनभिन्नाः तारकायणाः चौवलाः जाबालयो याज्ञवल्क्याः चितंडाजुवलयः सौश्रुतयाः औ
यगहृतयः उदंपरयःषाष्टग्याः श्यामेयाः चैत्रेयाः तालोच्चतराः मयूराः सौमत्याः चित्रतवयाः स्यानतायनाः मानवः ततवः मांतवः यक्षा
न्यत्वशब्दाः बाभ्रव्याः कालायाः उत्सरयो देवजाताः एलकपउलूकाः बाभ्रव्याः शालाः विशालाः कालवत्ताः संधवायनाः सौरथयः का-
रीषयः संस्तृत्या ऐलोप्याः पार्योदरयः क्षरयः पडलयोगालवाः वकुलयोवतंडावलशंकवः श्यामायनाः कालाः वालखिल्याः यांज-
यः सौमेयाः आश्वलायनाः आवाहाः उलूखलाः जैमिनयः सांकृतेयाः ऐधेयाः सास्याः इतिकुशिकाः तेषांत्रयः वैश्वामित्र

देवरातौदलेति लोहिताः कुडकयाः चाक्रवर्णायनाः तानायनाः वासकर्णेष्टकाः ६। इतिलोहिताः रोहिताइतिकेचित् अष्टकावाते-
षांत्रयः वैश्वामित्राष्टकलोहितेति अंत्ययोर्व्यत्ययोवा वैश्वामित्रमाधुच्छंदसाष्टकेतिवा द्वौवाविश्वामित्राष्टकेतिवा रौक्षकाः सौहृहल्याः
रेवणाः ३ इतिरौक्षकाः रेवणावा तेषांत्रयः वैश्वामित्ररौक्षरैवणेति वैश्वामित्रगाथिनोरैवणेतिवा कामकायनाः देवश्रवसः श्रो
मनाः ज्यमकायनाः ५ इतिकामकायनाः श्रौमतावा तेषांत्रयः वैश्वामित्रदेवश्रवसदैवतरसेति अजाः मार्गमित्राः माधुच्छंदसाइ
त्यजास्तेषांत्रयः वैश्वामित्रमाधुच्छंदसाज्येतिकताः औदुंबरयः शैशिरयः तैकायनाः स्तौकायनाः तार्क्ष्यायनयः कात्यायनयः क
राभयोबालकेयाः शालंकायनाः मौंजहायनाः गांगायनयः कालयोवेदायनयोगोदायनयोमोदायनयोभेदायनयोवैनायनयोरामणयोरा
तकयोमौंजायनयः ३२ इतिकताः तेषांत्रयः वैश्वामित्रकात्यात्कीलेति धनंजयाः पार्थिवाः मंदकाः बंधुलाः पाणिलाः बैजेयाः परि
कुच्चयः इतिधनंजयाः तेषांत्रयः वैश्वामित्रमाधुच्छंदसधानंजय्येति वैश्वामित्रमाधुच्छंदसाघमर्षणेतिवा अघमर्षणानांत्रयः वै
श्वामित्राघमर्षणकौशिकेति पूरणाः वारिधापयंताश्च तेषांद्वौ वैश्वामित्रपौरणेति वैश्वामित्रदेवरातपौरणेतिवा इंद्रकौशिका-
नांद्वौ वैश्वामित्रैंद्रकौशिकेति क्वचिदन्येप्येकादशोक्ताः आश्मरथ्याः साहुवाः गाथिनाः वैपावाः हिरण्यरेतसः सुवर्णरेतसः कपोत-
रेतसः शालकायनाः घृतकौशिकाः कथकाः रौहिणाइतिआश्मरथ्याः यौरसुरवाः कासुकायनाः कामलायनाः बभ्रुलाः पाणितयो

मैतुलांगुलयः कौशिकाः इत्याश्मरथ्याः कुशिकाइतिकेचित् अजाइत्यन्येतेषांत्रयः वैश्वामित्राश्मरथ्यवाधुलेति साहुलाः माहु-
लाः फाशुलाः कहुलाः ऐमिलाः एदलाः शातातपाः कामलायनाः सातवयः जातवयः १३ इतिसाहुलाः तेषांत्रयः वैश्वामित्रसा
हुलमाहुलेति गाथिनाश्चोद्दालकयः उदवासाः रौक्ष्यकाः आज्योक्कलाः रेणुकाः इतिगाथिनाः रेणवइतिकेचित् उदवेणवोवा ह
र्यश्ववावा तेषांत्रयः वैश्वामित्रगाथिनरैणवेति रेणुवेतिक्वचित्पाठः वैणवानांत्रयः वैश्वामित्रगाथिनवैणवेति हिरण्यरेतसांद्वौ वै
श्वामित्रहैरण्यरेतसेति सुवर्णरेतसांद्वौ वैश्वामित्रसौवर्णरेतसेति कपोतरेतसांद्वौ वैश्वामित्रकपोतरेतसेति शालंकायनाः शाला
क्षाः लोहिताक्षाः लोहिताः जन्हवः इत्येतेशालंकायनाः कौशिकावा जन्हवोवा तेषांत्रयः वैश्वामित्रशालंकायनकौशिकेति ध
नकौशिकानांद्वौ वैश्वामित्रधृतकौशिकेति कथकाः क्रथकाः अतृद्यपाः उत्तृण्याः ४ इतिकथकाः तेषांत्रयः वैश्वामित्रमाधुच्छंद
सरौहिणेति विश्वामित्रगणानांपरस्परमविवाहः सगोत्रत्वात्सप्रवरत्वाच्च इतिविश्वामित्राः अथकश्यपाः तेषांत्रयः निध्रुवाः
रेभाः शांडिलाश्च निध्रुवाः कश्यपाः अष्टांगिरयो मठराः ऐतिशायनाः आम्भून्या वैशिप्राः धूम्राः धूम्रायणाः सौम्याः भव्यायणाः स्ववहस्ताः रायां
यणाः वैवकपयः सुरायणाः छागव्याः सैनयः स्थैलकेशयः वार्षकयः औपव्याः लाक्षायणाः कौष्टवोजीवनयः स्वाद्यायणाः रोहितायनाः मित
कुंभाः पिंगलाक्षयः औडलयः आरयणाः पौलयोवैकर्णयः कौषीतकेयाः धूमलहार्णयः स्फुराः गौरिवायनाः महाचक्रेयाः पैठिनस्याः

विषगणाः दाक्षायणयोर्भालंदजाः शांखमित्रेयाः हरित्याजाः मात्स्याः रमणयः साविश्रवसो वैशंपायनाः स्वरंकयः कासलयः उल्का
यनयोर्नार्जल्वायकाः कासकायनाः देवाः होतारः स्कन्वकयः खरेभा अयस्थूणाः भागुरयः पाथिकयाः गोमयनाः हिरण्यवायाः अग्नयो देव
यः सौर्याः मुसलाः आविश्रेण्याः उदलीमंत्रिताः वैकर्णयः स्थूलिबिंदवः आग्रायणाः मोषकाः नतिकायनाः औपप्रतिमाः साराहरेयाः कै
रंजाः वैकेताः मानृत्यारैवकयोर्भौवनाः चैत्रगाः आङ्कगायकाः देवयाताः सोमयागाः शत्रुहयः काचायनाश्वक्रधर्मिणः महाचक्रधर्मि
णः श्रैपयणाः हार्करयः दाक्षयाणयोर्हस्तयोर्दासयोर्वात्स्यपाणयोर्हास्तलायणाः अश्वरातायनाः कौसीरकाः खगादाः अग्नि-
शर्माणः कैकशयाः काश्वहायणाविहायना हस्त्यासानुश्रुनाहटितायना मार्गणाः सोमश्रुवाः ज्ञानराधात्स्यामा पक्षावभ्रवोवोजिवा
हायनाः बाह्ककायनाः भामनयाः गाष्ठायनाः वात्स्यायनाः वाष्टायनाः नागशिरसः शौंकयाः ज्ञानहस्तयोर्भवनंदयोर्प्रतिश्रवाः प्राति
थेयाः कैंजालयः कांडवायनाः पैलमेलयः ब्राह्मायणाः कौषीतकाः मारीचाः कामेयाः नकपोलवणीवभिक्षवः १४ इतिनिध्रुवाः ते
षांत्रयः काश्यपावत्सारनैध्रुवेति रेभाणांत्रयः काश्यपावत्साररैभ्येति शांडिल्लाः कोहलाः पावकाः वापिकाः औदमेघाः सौदानवाः
सावनसाः कारेयः कौकंटयः तैक्षिमाहवयः महोदकयः कोद्रायः माजयनाः भागावंशाः स्वावंशायनाः वात्सभालयो गोभिलाः वेदा
यनाः वात्स्यायनाः बहूदरयः खार्दतीसुरवाः हिरण्ययावाः नेदेहाः गोमूत्राः वाष्क्यशठाः जानंधरयो धन्वंतरयो एकखंडाः गर्दभीसुरवाः

अजावंशा स्तृणबिंदवः कोकिलाः पैप्पलादयो जलंधवाः गोशिलाः शत्रुगायनाः जीमाःपिप्पलाः शिंजाःकेशिलाः मुंचमयूराः वैदान-
वाः कौवलयःकौरंडरजाः उत्तराःस्रुजातपूरान्वेरलाः स्रुकवतवः कुंडलाः बहुपिंडाः हैपुद्यःचटापनाः महोकौरलयःकुहुलाः मंहलामंग
लाःधवलाःकैराताःपर्यश्वाःभुजांजलयःपरिणाः ६३ इतिशांडिल्लाः तेषांत्रयः काश्यपावत्सारशांडिलेति अंत्यस्थानेदेवल्लोवा
असितोवा काश्यपासितदेवलेतिवा अंत्ययोर्व्यत्ययोवा शांडिल्यासितदेवलेतिवा शांडिल्येतिकचित्पाठः असितदेवलशांडि-
ल्येतिक्वचित्पाठःअसितदेवलशांडिल्येतिप्रवदेवः द्वौवा देवलासितेति कश्यपानांपरस्परमविवाहः कश्यपस्यध्रियमाणतयास्तत्तया
वानुवृत्तेःसगोत्रत्वात्सप्रवरत्वाच्च इतिकाश्यपाः अथवसिष्ठाः तेचत्वारः वसिष्ठाःकुंडिनाउपमन्यव ःपराशराश्च वसिष्ठाःचै
तालकवयः करकवयःसारवल्याःगारिश्रवसाःआश्वलायनाः कपिष्ठलाः सौविहृक्षाः व्याघ्रपादाः बात्यकायनयो गायनयो नवाब्याः
जातूकर्ण्याःरौभ्रामयाःकौशोजयःकौलायनाः स्रुवाहारिताः कांडहन्दुद्वयः सौपवत्सायनाःआलाभायनाःलोमायत्याःस्वस्त्याः
कार्षिताःपार्ष्णिकायनाःपा र्णवल्काःदेवनाःगौरव्याःविश्वायनाःवाहकथयः अवकितयोवस्वयाजयाः पूतिमाषाःसमवेषाःऔप-
गवाःवैष्णवाः सात्वालायनाः औडलोमाः गोपायनाःधौवयो पालिसयावाग्रथया आपःस्थूणा ब्रह्मपुरेयाःस्वस्तिकाः पांडुलयोगो
षिलयोमालोहवयः ब्रह्मवलयश्चोलयः यौहिश्रवसोयाज्ञवल्क्याः रावणेयोमौलेयकौलयाःऔपलोमाःआम्लायनाःमिथोवलयः

कंडालयोगौडिलयोव्यालाहवः स्यानुमाश्वाः स्रुपार्श्वयाः दासव्याः भ्नलिशयाः आर्जवाक्षयः ६५ इतिवसिष्ठाः तेषामेकः वासिष्ठे
ति त्रयोवा वासिष्ठेंद्रप्रमदाभरद्वस्विति कुंडिजाः लोहितायनाः गुग्गुलयोऽश्वरथाः बाहवाः कौंक्रोल्याः सांगतिनः कायठवः पेठकाः
नवग्रामाः हिरण्याक्षायणाः पैप्पलयलादयः सौगम्येक्षिताः माध्यंदिनाः सोमयक्षयः सौस्थयोघ्नतयोत्रैभृंगाः लोभायनाः गोवनाः वि
धंकषयो मैत्रावरुणाः २५ इतिकुंडिणाः तेषांत्रयः वासिष्ठमैत्रावरुणकौंडिण्येति उपमन्यवः औदलयः मांडलेखयः कापिंजलाः जा
लागताः तपोलोकाः त्रैवर्णाः पर्णगिरयः सादाक्षराः सौलालयो महाकण्वायनाः बालशिखाः औद्गहनायनाः वलायनाः भागवित्तायनाः
कुंडोदरायणाः लक्ष्मणेयाः वात्स्यकेयोवार्केयः सरावणाः कण्वायनाः कालाक्षाः दशेरकाः कृष्णाः तारायणाः पालंकायनाः उद्गाहाः
कौरव्याः क्रोधिनोमानेयाः ब्रह्मवलयो माशरावत्याः सांख्यायनाः गोत्ररथाः स्रुहाकाश्यामयोरास्थेयाः औपलेखयोगापोदंतयः कौमा
राकांडोदरयः वक्रदर्भयः कारधुरयः कौलमयः व्याघ्रायणाः रौक्षहेमयोनाहुलयोबाहुलयोकालपायनाः भागुरायणाः शांकर्याः मुंचका
यनाः पाथश्रवसः मारायणाः वादकायनाः स्तंभायनाः धीतुह्वयो भागहयः कौरकृतः कशानयाः ७० इत्युपमन्यवः तेषांत्रयः मुंचुकायनाः
पादकायनाः वासिष्ठेंद्रप्रमदाभरद्वस्विति आभरद्वसव्येतिकश्चित्पाठः वासिष्ठाभरद्वाजेंद्रप्रमदेतिवा आद्ययोर्वा पराशराः कांडश
याः वाजयोवाजिमंतयो भैमतायनाः गोवालयः भागेहयः वैकलयः लक्षयः कौकुचादयो हार्यश्वयः कात्याः पनयोगोपेयाः स्यानयोवा

रूपायो भालर्वी: वाजरय: कैमतय: कृष्णाजिना:कापिस्करवा: स्वाप्यायनय: श्वेतयूपय: पौष्करसादय: गार्ग्यादय: नार्णीया: श्रौतुहवो लयोजेनया: पार्थेया: कारुजायना: कार्ष्योयना: शोकयोवा घृर्षायना कपिश्रोता: स्कंभित्या: मौडिका: शानयातया: पठिका: वधिका तिलयूपय: स्वालायना: क्षौमयो हर्यावय: शिवय: इषीकहस्ता: ४७ इति पराशरा: तेषांत्रय: वासिष्ठशात्त्यपाराशर्येति एषांव- सिष्ठानां परस्परमविवाह: सगोत्रत्वात्सप्रवरत्वाच्च इति वसिष्ठा: अथागस्त्या: तेदश अगस्तय: इध्मवाहा: सोमवाहा: यज्ञवाहा: दर्भवाहा: सारवाहा: पूर्णमासा: परणिन: हिमोदका: पाणिकाश्च अगस्त्यय: करंभय: कौशल्या: क्रमेधस: सोमयोश्रुवोगाधराय्यणा: पुलस्त्यय: पुलहा: क्रतव: कार्णाटा: महेंद्रा: ११ इत्यगस्तय: तेषांत्रय: आगस्त्य: महेंद्रा: मयोभुवेति इध्मवाहा: विशालाद्या: फा लायना: औपदहनय: कल्मषा: दंडयोलावणयोलब्यावरंडयो वैरणयोसुदोदरया: सैवयय: शाल्यातया: मौंजिलता: पायोहता: हारियी वा: रोहिण्यामौशलय: सैवरा: सामरायणा: कैकर्णायना: मार्गायणा: आचार्या: शालंकायना: उपकल्मकायमयोवारितापोवात्यायन- य: क्षौमिनयो लाशय: साकाक्षय स्तंडयोलाज्यायनयोत्लदोगयो प्राहुराक्षयो पंडोहता: कुंड्याक्षय: उपकुला: अर्बुदा: शैवायुधा: परहता: चैत्योरंदय: औकुला: वैरंडयोगव्यादयोदाम सौम्यादय: ब्राह्मण्या: पुत्रयोवासिष्ठायणा: शारंगरा: फायवचना: ५२ इती ध्मवाहा: तेषांत्रय: आगस्त्यदार्ढ्यच्युतैध्मवाहेति दाधेतिवापाठ: एकोवा आगस्त्येति संभवाहानांसांभद्राहानांशांभदाहानांल्यो-

पूर्वांचैव एवंसोमवाहीनांचतुर्णांतत्तन्नामांत्यापूर्वांचैवपूर्णमासानांपारणिनांचत्रयः आगस्त्यपौर्णमासपारणेति हिमोदकाः अंकाः शकाः शुक्राः हसाश्वासाः हेमवर्चयः इतिसोदकास्तेषांत्रयः आगस्त्यहैमवर्चिहैमोदकेति पाणिकाः विमिलयः मामितकलयः विनायकाः नंदयोभिल्लाः विलयः इतिपाणिकाः तेषांत्रयः आगस्त्यपौनायकपाणिकेति अगस्तीनांसर्वेषांपरस्परमविवाहः सगोत्रत्वात्सप्रवरत्वाच्च इत्यगस्त्तयः अथद्विगोत्राः तेत्रयः शौंगशैशिरयः संकृतयः लौगाक्षयश्चतत्रभरद्वाजाच्छुंगाद्वैश्वामित्रास्यशैशिरेः क्षेत्रेजातः शौंगशैशिरिनामतद्गोत्राणांपंच आंगिरसबार्हस्पत्यभारद्वाजशौंगशैशिरेति अंत्योकात्यात्कीलेतिवा त्रयोवा आंगिरसकात्यात्कीलेति आद्योभारद्वाजोवा एषांविश्वामित्रभरद्वाजाभ्यांनान्वयः संकृतयः पूतिमाषास्तंडवः शंबवः शैगवाः सैववयाः जानकयः तैराद्याः सरव्याः ऋषनयः वारायणयः सहयोगांगयोर्लौगाक्षयः नालानागहयोभिल्लातयोर्बीभीतकाः तैलयः परिभावाः वैय्याघ्रपादाः श्रौतायनाः चांद्रायणाः मलकाः शालायनाः आर्षण्याः हारिनिवाः पौलाः व्याघ्रपाः २८ इतिसंकृतयस्तेषांत्रयः आंगिरसगौरिवीतसांकृत्येति शाक्त्यगौरिवीतसांकृत्येतिवा अंत्ययोर्व्यत्ययोवा एवंसंकृतीनांवासिष्ठत्वंतावदस्ति आपस्तंबादिभिर्वसिष्ठगणमध्येपाठात् वासिष्ठशक्तेः पाक्षिकवरणाच्च आंगिरसत्वमप्यस्ति बौधायनेनकेवलांगिरोमध्येपाठात् आंगिरसप्रवराच्च तेनैषांसर्वैर्वासिष्ठैरविवाहः लौगाक्षिभिश्चसहाविवाहः सगोत्रत्वात् किंचित्प्रवरसाम्याच्च केवलांगिरोगणैश्च

विवाह एव सगोत्रत्वाभावाद्द्विप्रवरसाम्याभावाच्च केचित्तु भरद्वाजात्पठितत्वात् भारद्वाजांगिरसत्वमाश्रित्य भरद्वाजानां शौंगशैशि
रैः सहाविवाहमाहुः तन्नेच्छंति वृद्धाः केवलांगिरसां मध्ये पाठात् भरद्वाजस्य सप्तयानुवृत्तेः कपिवद्ज्ञापकाभावात् प्रयोगपारिजा
ते तु काश्यपैरेषामविवाह इत्युक्तम् तन्न्याय्यं केचिदाहुः तत्र हेतुश्चिंत्यः लौगाक्षयः दांभायणाः मैत्रवादयो देहकालेयाः कापुटयः का
लपाः कंसपात्राः बालकामनयो नित्यरातादयः औंदकयो कौनामयः सौनामयः सैतिकपौष्टिमेराः निष्ठयः ऐषिकयः सौक्रासिकयः
सैरंध्रयः चौषणायो कालकयो राजवाहयः अनष्टयो सिग्रुरयो राजवत्रयः सैरयः रिवरोद्वाहयो सजसकवयः सौरंध्रयः पिंगाक्ष्यः काकु-
लयः शाकल्यः रावफाल्यः सैकयः सायुधयः शारद्वंताः औपवत्यकटाः सौतपाः १९ इति लौगाक्षयः तेषां त्रयः काश्यपावत्सारवासिष्ठे
ति काश्यपावत्साराऽसितेति वासिष्ठावत्सवः काश्यपेति वा एते ह्यर्वासिष्ठाः नक्तं कश्यपाः एषां वसिष्ठकश्यपाभ्यां संकृतिभिश्चाविवा
हः सगोत्रत्वात् केचित्समप्रवरत्वादपि पारिजातधृतसंग्रहस्मृत्यर्थसारयोस्त्वन्ये षडुक्ताः देवरातानां त्रयः वैश्वामित्रदेवरातौदलेति ए
षां जमदग्निविश्वामित्राभ्यामविवाहः जमदग्निगणस्यापि विश्वामित्रगणस्य च न देवरातगोत्रेण विवाहः स्यात्परस्परमिति संग्रहोक्तेः
बौधायनादिभिर्जामदग्न्येषु देवरातस्यापि पठितत्वात् जामदग्न्यत्वं चिंत्यमिति केचित् अन्ये तु और्वस्यैव मृचीकस्य सत्यवत्यां महायशाः
जमदग्निस्तपोवीर्योजज्ञे ब्रह्मविदां वरः मध्यमश्च शुनःशेपो शुनःपुच्छः कनिष्ठक इत्युक्त्वा देवैर्दत्तः शुनःशेपो विश्वामित्राय भार्गवः

दैवैर्दत्तः सर्वैर्यस्माद्देवरातस्ततोऽभवदिति हरिवंशे देवरातस्य जमदग्निसंबंधस्य कथनाज्जामदग्न्यत्वमुपपन्नमित्याहुः धर्मप्रदीपे तु माता
महैः शुद्धजामदग्न्यैर्देवरातादीनां न विवाह इत्युक्तम् वस्तुतस्तु हरिवंशश्रीभागवतादौ भार्गवत्वं तावद्देवरातस्य निःसंदेहमवगम्यते तन्नि
र्वाहश्च जामदग्न्य केवलभार्गवान्यतरत्वेनैव वाच्यः न च तत्साधको बौधायनादिपाठोऽस्ति भवति तु संग्रहगता देवरातानां जामदग्न्यैरवि
वाहोक्तिर्जामदग्न्यत्वसाधिका सती भार्गवत्वनिर्वाहकरी यद्यपि जमदग्निभ्रातृत्वं साक्षान्न जामदग्न्यत्वसाधकं तथापि जमदग्नेर्जामद-
ग्न्येष्वपि देवेषु मत्स्यपुराणे पाठात्सिद्धम् जामदग्न्यत्वं तदनुजदेवरातस्यापि जामदग्न्यत्वसाधकः न ह्येकस्मादृषेरुत्पन्नयोर्भिन्नगोत्रत्व
प्रवरत्वसंभवः न च विदोऽन्तर्गतजमदग्नेर्देवरातज्येष्ठत्वे मानाभावः भार्गवत्वविवाहकसंग्रहस्यैव तन्मानत्वादित्यलं धनंजयानां वि
श्वामित्रमधुच्छंदसधानंजयेति एषामत्रिविश्वामित्राभ्यामविवाहः जातूकर्ण्यानां वासिष्ठात्रेयजातूकर्ण्येति एषामत्रिवासिष्ठा-
भ्यामविवाहः वामरथ्यादीनां पूर्वोक्तानामत्रिपुत्रिकापुत्राणामत्रिवसिष्ठाभ्यामविवाहः अत्रिविश्वामित्राभ्यामिति केचित् कपिलानां पं
च अंगिरसबार्हस्पत्यभारद्वाजवांदनमातवचसेति एषां विश्वामित्रभरद्वाजाभ्यामविवाहः तत्र कपिलस्य विश्वामित्रसंबंधे मानाभा
वः वैश्वामित्रं देवरातं प्रकृत्य तस्यैते कापिलेयबाभ्रवाइति ऐतरेयब्राह्मणगतकापिलोक्तेर्लिंगविधया मानत्वात् कपिलानां वैश्वा
मित्रत्वाभावे कापिलानां वैश्वामित्रत्वानुपपत्तेः कतानां त्रयः वैश्वामित्रकात्यात्कीलेति एषां विश्वामित्रभरद्वाजाभ्यामविवाहः

एवमिदानींतनानामपिदत्तकादीनांद्व्योरपिपित्रोः समगोत्रैरविवाहः यथाह प्रवरमंजरीकारः एवंपुत्रिकापुत्रदत्तक्रीतादीनामपि-
द्व्योरपिगोत्रयोरविवाहइति यत्तुमनुवचनंगोत्ररिक्थेजनयितुर्नभजेद्दत्रिमः सुतः गोत्ररिक्थानुगः पिंडोव्यपैतिददतः स्वधाइति
दत्तकादेर्जीवतः आर्षेयप्रवरणाभिवादादिषुमरणे मृतस्यचश्राद्धदेवतात्वेजनकगोत्रसंबंधनिवृत्त्यर्थंविवाहस्तुजनकगोत्रायायाः निषिद्धए
व स्वस्यचजनकगोत्रसंबंधाभावेनतस्याः स्वगोत्रत्वाभावेपिपितृसगोत्रत्वात् असगोत्राचयापितुरित्यत्रपितृग्रहणस्येदमेवप्रयोजनमि
तिस्मृतिचंद्रिकादौतूक्तमितिसंक्षेपः सर्वेषांचद्व्यामुष्यायणानांगोत्रद्वयसंबंधिप्रवरणप्रसक्तौव्यवस्थामाहाश्वलायनः तेषामुभयतः
प्रवृणीतैकमितरतोद्वावितरतोद्वौवेतरतस्त्रीनितरतोनहिचतुर्णांप्रवरोस्तिनपंचानामतिप्रवरण आंगिरसबार्हस्पत्यभारद्वाजवैश्वामि
त्रकात्याक्षीलेतीति विशेषांतरंकात्यायनलौगाक्षी ऊचतुः पूर्वः प्रवरउत्पादयितुरुत्तरः प्रतिग्रहीतुरिति अतएवनचतुरोवृणीतइति
निषेधोननित्यानुवादाविति उक्तंचपारिजाते संग्रहेद्व्यामुष्यायणकार्येचदत्तकक्रीतकादयः गोत्रद्वयेप्यनुद्वाह्याः शौंगशैशिरयोर्यथे
ति तथानारायणवृत्तौदत्तक्रीतादीनांजनकपालयोर्गोत्रनिषेधः शौंगशैशिरग्रहणस्यप्रदर्शनार्थत्वात् इतियथाचक्रियाभ्युपगमात्
क्षेत्रेबीजिनेयत्प्रदीयतेतस्येहभागिनौदृष्टौबीजीक्षेत्रिकएवच फलंत्वनभिसंधायक्षेत्रिणांबीजिनांतथा अत्र पक्षेत्रिणामर्थो-
बीजाद्योनिर्बलीयसीतिमनूक्तेः क्षेत्रजस्याभिसंधिनैवद्व्यामुष्यायणत्वं तथादत्तकादिष्वपीत्यत्रमानमस्ति सर्वेषांतत्वेतूक्तंग्रं-

भ एवेत्यलम् इतिद्विगोत्राः अथक्षत्रियवैश्यानांक्षत्रियाणांमनुगोत्रं मानवैलपौरूरवसेति प्रवराः वैश्यानां भलंदलगोत्रंभा
लंदलवात्सप्रमांकिलेति प्रवराः यद्वापुरोहितप्रवराएव तेषामिति पक्षद्वयंसूत्रकारैरुक्तम् मिताक्षरादयस्त्वंत्यपक्षमेवस्वीचक्रिरे
तत्रहेतुः नचादौ आगस्त्याष्टमसप्तर्ष्यपत्यत्वरूपंगोत्रलक्षणाभावात् प्रवरमंजरीकारस्तुतयोरेकरूपगोत्रप्रवरत्वे सर्वेषांपरस्परम
विवाहप्रसंगइति हेतुमाह तस्मात्पुरोहितगोत्रप्रवरादेवेति राजर्षिप्रवरणस्यचाभिषिक्तविषयत्वंराज्ञामित्यर्थः नक्षत्रियाणामिति
तद्गोत्रेत्यत्रच तच्छब्देनपुरोहितपरामर्शः तस्यैवमुख्यतोगोत्रसंभवाच्छ्रोतस्मार्तरसंवादलाभाच्चेति सर्वथैवसिन्दूमेतत् विवाहेक्ष-
त्रियवैश्यानांपौरोहित्यप्रवरैक्यप्रयुक्तएवनिषेधइतिबहवः वस्तुतस्तुपौरोहित्यान्राजविशान्राजर्षीन्वाराज्ञांसर्वेषांमानवेतिसंशये
इतिसूत्रं हृद्यप्रथमभागेयेनमिताक्षराकारेणालिखितः सकथमेवंवदेत् यद्यपिप्रातिस्विकगोत्राभावात्प्रवराभावः तथापिपुरोहि
तगोत्रप्रवरौवेदितव्याविति तस्यैवसूत्रस्यवाक्यशेषे प्रातिस्विकप्रवरदर्शनात् अतोलक्षणांस्त्रियमुद्वहेदिति विवाहाधिकारात्तन्नि
र्णयोपयोगिनापौरोहित्यान्यप्रवराणामभावस्तदभिप्रेतइतिगम्यते तथाचस्मृत्यर्थसारे गुरोःसगोत्रप्रवरानोद्वात्याक्षत्रविट्द्विज
नैरिति कर्मणितुवरणादौपक्षद्वयविकल्पः उक्तसूत्रस्यकर्माधिकारप्रवृत्तेः सोपिव्यवस्थितः येषांकुलेयादृशंवरणमागतंतथैवक-
र्तुमुचितमितिविप्रेष्वपिव्यवस्थादर्शनात् अभिषिक्तराज्ञस्तुपौरोहित्यानांराजर्षिभिःसमुच्चयःक्षत्रियवैश्ययोःपौरोहित्यान्रा

जर्षीन् वेति सत्याषाढसूत्रव्याख्यावसरे शंबरस्वामिना यथोक्तं वाशब्दः समुच्चये कुतः राजन्ये अतिज्ञापनार्थं तद्गोत्रपरिणयनप्रतिषेधा
र्थमिति गतश्रीप्रदर्शनार्थं वचसीव राजन्यः शब्दोक्ताभिषिक्तःपरः अतिशब्दश्च ते पंचातिवृणीतं इत्यत्र प्रसिद्धपंचाधिकनिषेधः प्रतिप्रस-
वार्थः समुच्चये तदवश्यं भावात् उक्तं च तेनैव प्रवराध्यायांत्यस्याथ राजर्षयो मानवैल पौरूरवसेति सूत्रस्य व्याख्यावसरेपि उक्तसमु
च्चयांतर्गतेति अथ गोत्राज्ञाने उपनेताचार्यस्तद्गोत्रप्रवरैरेव कर्मणि विवाहाविवाहौ च अथासंप्रज्ञातबंधुमाचार्यद्व्यामुष्यायणा नानुप्र
ब्रवीताचार्यप्रवरं वृणीतेति बोधायनवचनात् आचार्यगोत्राज्ञाने तु आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् दत्वात्मानं तु कस्मैचित्
तद्गोत्रप्रवरो भवेदिति यत्तु गोत्रस्य तत्परिज्ञाने काश्यपं गोत्रमिष्यते इति तदाचार्यगोत्रज्ञाने सत्वे च विवाहातिरिक्तविषयमिति वृन्द्धाः
अथ मातृगोत्रनिर्णयः मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेदिति मातृगोत्राया विवाहो नि
षिद्धः यद्यप्येकगोत्रत्वं सदृशगोत्रत्वं चेति द्विविधसगोत्रत्वमुक्तम् तथापि मातुर्गोत्रैक्यमेव वर्ज्यम् मातुर्गोत्रं यस्यास्तामिति व्या
ख्यानेनैव तस्य प्रतीतेः मातुश्च गोत्रद्वयम् प्राग्विवाहात्पितृगोत्रं उर्ध्वं भर्तृगोत्रं स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे एकत्वं-
सा गता भर्तुः पिंडे गोत्रे च सूतके इति वचनात् पितुर्गोत्रस्य स्वोत्पत्तिदशायामनुवृत्त्या स्वगोत्रेणैव निषेधः तेन परिशेषान्मातृगोत्रपदे
न मातामहसगोत्रस्यैव निषेधः तस्य स्वोत्पत्तिदशायामनुवर्तमानस्य सगोत्रत्वप्रयोजकत्वाभावात् अत एव पुत्रिकायां गांधर्वविवाहो

दायांचदानभावेनपितृगोत्रसंबंधस्यानुवृत्तेः स्वोक्सतिदशायामनुवृत्त्यातस्यस्वगोत्रत्वादेवनिषेधः ब्राह्मा दि विवाहोढायांतुपितृगो
त्रसंबंधनिवृत्तावपिभूतपूर्वगत्यामातामहगोत्रस्यैवमातृगोत्रत्वेननिषेधः परिशेषात् एवंचपुत्रिकागांधर्वादिविवाहोढासुतानांसर्वेषां
मातृगोत्रंवर्ज्यं ब्राह्मादिविवाहोढासुतानांसर्वेषांमातृगोत्रत्वंनवर्ज्यं किंतुमाध्यंदिनीयानामेवमातृगोत्रमितिसत्याषाढोक्तेः शिष्टा-
चारोप्येवमेव केचित्तुस्वस्यवचनस्यनिर्मूलत्वात्सर्वेषांमातृगोत्रवर्जनमुक्तमिति युक्तंतुशिष्टाचारसहकृतवचनान्माध्यंदिनानामेवतद्व
र्जनं निर्मूलत्ववचनंतुप्रामाणिकानांनयुक्तं पराक्रांतंवातत्रसूरिभिरित्युपक्रम्यते कुलक्ष्मालल्लवर्त्तिपंडितजनालंकारचूडामणिर्गो
दातीरजनिर्गुणोच्चयरत्नविनिर्नाम्नापदेवोग्रणीः तत्सूनोरिहजीवदेवकृतिनःसद्धर्मशास्त्रेकृतौ गोत्राणांप्रवरैःसहेयमभवन्निर्णी
तिरीशार्पणा १ इतिगोत्रप्रवरनिर्णयः एवंभार्यात्वप्रतिबंधकानिसापिंड्यसगोत्रत्वसप्रवरत्वानिनिरूपितानि विज्ञानेश्वरः
सपिंडासुसमानगोत्रासुसमानप्रवरासुभार्यात्वमेवनोत्पद्यते रोगिण्यादिषुभार्यात्वेउत्पन्नेपिदृष्टविरोधइति इदमुपलक्षणंभा
र्यात्वोत्पत्तावपि अदृष्टदोषांतरप्रयोजकानिसंत्यन्यानि यथाहनारदः प्रत्युद्वाहोनैवकार्योनैकस्मिन्दुहितृद्वयम् नचैकजन्ययोः
पुंसोरेकजन्येतुकन्यके इति स्वकन्यायस्यपुत्रायदत्तातत्कन्यकायाः स्वपुत्रेणपरिणयनंप्रत्युद्वाहः अत्रोत्तरार्द्धगतनिषेधापवादः
पारिजातेस्मृत्यंतरे एकोदरीकरतलग्रहणंयदिस्यादेकोदरस्यवरयोःकुलनाशनंच एकाब्दकेतुविधवाभवतीहकन्यानद्यंतरेतुपृथुशे

त्सरोधइति विवाहात्त्वेकजातानामेकस्मिन्नुदयेकुले नाशंकरोत्येकवर्षे स्यादेकाविधवातयोरिति उदयोलग्नमिति पारिजातेगर्गः
भ्रात्रोर्युगेस्वसृयुगे भ्रातृस्वसृयुगेतथा नजातुमंगलंकुर्यादेकस्मिन्मंडपेहनि पुत्रीपरिणयादूर्ध्वंयावद्दिनचतुष्टयं पुत्र्यंतरस्यकुर्वीत
नोद्वाहमितिसूरयइतिवचनद्वयंभिन्नपितृमातृकविषयमितिपारिजाते ज्योतिर्निबंधेप्येवं सामान्यप्रवृत्तमपि एकोदरप्रसूतानां-
मेकस्मिन्वत्सरेयदि विवाहोनैवकुर्वीतकुर्वंतिसुनयोन्यथेतिसारावलीवचनेनसमानोदरप्रसूतविषयनिषेधस्यप्राप्तत्वात्तद्भिन्न
विषयंभवतीतितदाशयः उद्वाह्यपुत्रींनपितावदध्यात्पुत्र्यंतरस्योद्वहनंहिजातु यावच्चतुर्थीदिनमत्रसर्वंसमाप्यचान्योद्वहनंविदध्या
दितिकपर्दिवचोप्येवंभिन्नोदरविषयम् अत्रेतिचतुर्थीदिनइत्यर्थः यत्तुज्योतिर्निबंधेमेधातिथिः पृथङ्मातृजयोःकार्योविवाहस्त्वे
कवासरे एकस्मिन्मंडपेकार्यःपृथक्वेदिकयोस्तथा पुष्पंपट्टिकयोःकार्यंदर्शनंनशिरःस्थयोः भगिनीभ्यासुभाभ्यांचयावत्स
प्तपदीभवेदितितत्कर्तृकभेदाभिप्रायं कार्यइतिकर्मप्रत्ययेद्वाभ्यांत्रिभिरित्यन्वयसंभवात् उदाहृतगर्गवाक्ययोःकापर्दिवाक्येचैवं
कर्त्तारंप्रतिनिषेधोज्ञाप्यते कुर्यात् कुर्वंतिनपिताविदध्यादितिशब्देस्तथैवप्रतीतेः अतश्चद्वाभ्यांकर्तृभ्यांएकस्मिन्नपिलग्ने एकस्मि
न्नपिगृहेभिन्नोदरयोःकार्यः भिन्नकर्तृकत्वेनैवमंडपप्रतिष्ठादिभेदःप्रतिपत्तौएकः कर्त्तातुदिनचतुष्टयेनपूर्वविवाहंसमाप्योत्तरं
कुर्यात् अतिसंकटेत्वेकस्मिन्नपिदिनेमंडपदेवप्रतिष्ठाद्यभेदेपिगृहभेदेनचेतिव्यवस्थाबोध्या वक्ष्यमाणवसिष्ठवाक्योत्तरा

र्द्धस्यभिन्नोदरसाधारणत्वात् मदनरत्नेनारदः मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वातुमंगलम् ऋतुत्रयंपुनर्यावन्नकुर्याल्लघुमंगलम्
एकमातृजयोरेक वत्सरेपुरुषस्त्रियोः नसमानक्रियांकुर्यात्मातृभेदेविधीयतेइति ऋतुत्रयस्यमध्येचेदन्याब्दस्यप्रवेशनं तदान्ये
कोदरस्यापिविवाहकृत्प्रशस्यते अत्रत्यतुशब्देनविवाहभिन्नमेकोदरविषयंमंगलद्वयमब्दभेदेनभवतीतिज्ञाप्यते तत्रैवमिहिरःसु
पुत्रोपनयनादूर्ध्वंषण्मासाभ्यंतरेतथा पुत्र्युद्वाहान्नकुर्वीतविवाहव्रतबंधनम् यमयोस्तु एकस्मिन्वत्सरेचैव वासरे मंडपेतथा कर्त-
व्यंमंगलंस्वस्त्रोर्भ्रात्रोर्यमलजातयोरिति तथामदनरत्नेवसिष्ठः द्विशोभनंत्वेकगृहेपिनेष्टंशुभंतु पश्चान्नवभिर्दिनैस्तु आवश्य
केशोभनमुत्सुकोवाद्वारेथवाचार्यविभेदतोवेति एकोदरप्रसूतानांनाग्निकार्यत्रयंभवेत् भिन्नोदरप्रसूतानांनेतिशातातपोब्रवीदि
ति शातातपग्रहणेभिन्नोदरविषयाग्नित्रयनिषेधस्यानित्यताज्ञाप्यते गृह्यपरिशिष्टे अविरुद्धसंबंधामुपयच्छेतत्सु पक्रमस्यविरुद्ध-
संबंधोयथाभार्यास्वसादुहितापितृव्यपत्नीस्वसाचेतिइत्यमूल्यं अथविवाहकालः आश्वलायनः उदगयनआपूर्यमाणपक्षेक-
ल्याणेनक्षत्रेचौलकर्मोपनयनगोदानविवाहाः सार्वकालमेकेविवाहमिति कल्याणनक्षत्रंज्योतिःशास्त्राविरुद्धमितिवृत्तिकृत्
पुण्यनक्षत्रेदारान्कुर्वीतेति छंदोगसूत्रेनक्षत्रग्रहणात्तिथ्याद्यपेक्षयानक्षत्रमावश्यकमिति तज्ज्ञाप्यते नविवाहोदिवाकार्यः रात्राव-
पिकेचित्कुर्वंतितत्रकारणंनविद्मइतिजयतः हेमाद्रौतुदेवलः राहुदर्शनसंक्रांतौविवाहात्ययवृद्धिषु स्नानदानादिकंकुर्युर्नि

शिकाम्यव्रतेषुचेति वृद्धवसिष्ठः ग्रहणोद्वाहसंक्रांतियात्रादौ प्रसवेषु च दानंनैमित्तिकंज्ञेयंरात्रावपितदिष्यत इतिरात्रावपि-
पिकन्यादानमुक्तम् अन्यत्रापिस्कंदे तु ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च श्रवणेचेतिहासस्य रात्रौदानंप्रशस्यते इतिनिर्णया-
मृते अर्कार्किभूमिपुत्राणांदिनेषुकलहप्रियेतिदिनग्रहणाद्रात्रौनदोषइत्युक्तमिति रात्रावपिविवाहसिद्धिः मदनरत्नेनारदः यु-
ग्मेष्टे जन्मतः स्त्रीणांप्रीतिदंपाणिपीडनम् एतत्तुसामयुग्मेष्टव्यत्ययेनाशक्तत्तयोरिति पारिजातेयमः दद्याद्गुणवतेकन्यांनग्नि-
कामविशंकितमिति अस्यामवस्थायांशंकाप्रसक्तिंवदन् अष्टमवर्षपर्यंतोगर्भपंचमप्रभृतिः कन्याविवाहेउचितःकालःस्त्रीणा-
मुपनयनस्थानापन्नोविवाहइतितदुचितोवयोवस्थायांविवाहस्योचितत्वात् अतस्तत्रविवाहेशंकानेतिदर्शयति षड्वर्षोत्तरंतुप्र-
शस्ततरः कालः षडब्दमध्येनोद्वाह्याकन्यांवर्षद्वयंततःसोमोभुंक्तेततस्तद्वद्गंधर्वश्चतथानलइतिज्योतिर्निबंधोदाहृतवचनात् हेमा-
द्रौवात्स्यः माघेमासेभवेद्यूढाकन्यासौभाग्यसंयुता फाल्गुनोढाभवेत्साध्वीवैशाखेपुत्रिणीभवेत् धर्मयुक्ताभवेज्ज्येष्ठे धनिनीका-
र्तिकेभवेत् देवपूजारतानित्यंमासेस्यात्सोमदेवतइति धनिनीस्वातंत्र्येणधनसंग्रहवती नित्यमितिभर्त्रादिशुश्रूषाव्यावृ-
त्तिःसूचिता सोमदेवतोमार्गशीर्षः अतएवमदनरत्नेनारदः माघफाल्गुनवैशाखज्येष्ठमासाःशुभप्रदाः मध्यमःकार्तिकोमार्ग-
शीर्षोवैनिंदिताःपरेति यत्तुतत्रैवभरद्वाजवचनम् माघफाल्गुनवैशाखज्येष्ठाषाढामृगाह्वयाः षडेतेपूजितामासाश्चातुर्वर्ण्येस्व-

नित्यशाइति अत्रविहितप्रतिषिद्धानामाषाढादीनांदेशभेदेनव्यवस्थेतिमदनरत्ने वसिष्ठस्तु पौषेपिकुर्यान्मकरेस्थितेर्केंचैत्रेभवेन्मेष
गतोयदास्यात् प्रशस्तमाषाढकृतंविवाहंवदंतिगर्गामिथुनस्थितेर्केइति यद्यपिज्येष्ठमासाद्यगर्भस्यशुभंवर्ज्यंस्त्रियाअपिइतिनिषे
धोस्तितथापिवधूवरयोरन्यतरज्येष्ठत्वेनदोषः ज्येष्ठस्यज्येष्ठकन्यायाविवाहोनप्रशस्यते तयोरन्यतरेज्येष्ठेज्येष्ठोमासःप्रशस्यते द्वौ-
ज्येष्ठौमध्यमौप्रोक्तावेकज्येष्ठंसुखावहम् ज्येष्ठत्रयंनकुर्वीतविवाहेसर्वसंमतमितिमिहिरोक्तेः तथाकृत्तिकास्थरवेरतिक्रमेपिनदोषः
कृत्तिकास्थरविंत्यक्त्वाज्येष्ठेज्येष्ठस्यकारयेदितिसंग्रहोक्तेः यत्तुसार्वकालवचनंतदासुराद्यधर्म्यविवाहविषयमितिमदनरत्ने आश्व-
लायनसूत्रवृत्तिभाष्यकर्तारौतुप्रत्यासन्नर्तुकालायाविवाहविषयमित्यूचतुः इतिमासाः अथतिथयः भारद्वाजः प्रतिपद्दुःखज
ननीद्वितीयाप्रीतिवर्द्धनी सौभाग्यदातृतीयास्याच्चतुर्थीचार्थनाशिनी पंचम्यांसुखवित्तानिषष्ठीविघ्नप्रदायिनी विद्याशीलसुखा
प्तिःस्यात्सप्तम्यामफलाष्टमी नवमीशोकफलदाआनंदोदशमीदिने सुखदैकादशीज्ञेयासफलाद्वादशीस्मृता मानपुत्रौत्रयोदश्यां
चतुर्दशीतुदोषदा फलंबहुविधंपंचदश्यांचैवविशेषतइति पंचदशीपूर्णमासी विवाहमारभ्यचतुर्थीमध्येश्राद्धंदिनं दर्शादिनंयदिस्यात्
वैधव्यमाप्नोतितदासुकन्याजीवेत्सतिश्चेदनपत्यतास्यादितिज्योतिर्निबंधवचसा ऽ मायाविवाहाभावान्नांतर्भावनिषेधेनतत्रसुतरां
विवाहनिषेध सिद्धेः श्राद्धंतद्युक्तंदिनमितिविवाहमध्येश्राद्धस्यैवनिषेधः नतुतद्रहिततत्तिथिमात्रस्य वृत्तेविवाहेपरतस्तुकुर्या

च्छ्राद्धं स्वधाभिर्नतुदूषयेतेति शास्त्रांतरस्य निर्विषयत्वापातात् दर्शादिनमितिस्वरूपेणतिथिनिषेधः तथासत्येव पृथग्ग्रहणस्यसा-
र्थकत्वात् प्रेतश्राद्धसपिंडीकरणानुमासिकानां तु विवाहादिनिमित्तक वृद्धिपूर्वकालप्रमीतविषयाणां प्राप्तकालानां कालेऽनुष्ठानेनाप्रा-
प्तकालानामपकृष्य अनुष्ठानेन च प्रेतस्य चतुःपुरुषपर्यंतं सापिंडानां वृद्धिश्राद्धविशिष्टतत्कर्मस्वधिकारः प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्यु-
दयक्रियां आचतुर्थं ततः पुंसि पंचमे शुभदं भवेदिति मेधातिथिवचनात् अतएव प्रेतश्राद्धानि सर्वाणि सपिंडीकरणं तथा अपकृष्या-
पि कुर्वीत कर्तुं नांदीमुखं द्विजेति हेमाद्रिलिखितशाट्यायनिवचनं सोऽपि तावत्सपिंडविषयत्वं प्राप्तकालप्रेतकर्मणां यावतःपुरुषान् प्रति-
नांदीमुखानुरोधेनावश्यकर्तव्यता विहिता प्रत्येवापकर्षविधावपि शब्दसामंजस्यात् सपिंडीकरणस्य सत्यपि प्रेतश्राद्धत्वे आहि-
ताग्न्यादिविषयत्वेन व्यवस्थापितत्रिपक्षादिकालबाधेनाप्यपकर्षसिद्ध्यर्थं पृथग्ग्रहणं एवं च सपिंडीकरणादर्वागपकृष्य कृतान्यपि
पुनरप्यपकृष्यंते वृत्त्युत्तरनिषेधनादिति स्मृत्यंतरमपि तावत् पुरुषविषयमेव पुनरपीत्युक्तेतान्प्रत्येव संभवात् यद्यपि केचिदपि पु-
क्तो नांदीश्राद्धनिमित्तोऽयमपकर्षोऽसपिंडीकृतानां तत्र देवतात्वसंभवात् अतः स्वपितृदेवत्यनांदीश्राद्धांगके संस्कार्यपितृदेवत्य तदंग-
केवोपनयनादौ शास्त्रानियुक्तेन पुंसा स्वपितुः संस्कार्यपितुर्वा सपिंडीकरणोपस्थितौ विहितकालात्प्रागपि षोडशश्राद्धैः सहापकृ-
ष्य सपिंडीकरणं कार्यमिति विधीयते नतु सपिंडकर्तृक नांदीश्राद्धानुरोधेन नांदीश्राद्धसंबंधदेवत्यसपिंडीकरणस्याप्यपकर्षः शा

१९८

स्मार्थइत्याहुः तथापिनेत्थम् स्वीकर्तुंमुचितंमेधातिथिवचनविरोधात् संस्कार्यपित्राद्युद्देश्यनांदीश्राद्धांगकोपनयनाच्चतुर्थपु-
रुषादूर्ध्वमपिसंभाव्यते असपिंडीकृतानांचदेवतात्वासंभवस्तत्रापिसमइतिकथंनापकर्षः अतआचतुर्थमित्युपपन्नमितितिथयः
अथनक्षत्राणि कात्यायनः उदगयनआपूर्यमाणपक्षेपुण्याहेकुमार्याःपाणिंगृण्हीयादित्युपक्रम्यत्रिषूत्तरादिषुस्वातौमृगशिरसि
रोहिण्यांचेति उत्तराहस्तचित्राइतित्रीणि तथाउत्तराषाढाश्रवणधनिष्ठाइतित्रीणि उत्तराप्रोष्ठपदारेवत्यश्विन्यइतित्रीणीतिव्या-
चष्टेहरिहरः यद्यप्याश्वलायनेनविवाहकालनियमउक्त्वाअलंकृत्यकन्यामुदकपूर्वांदद्यादेषब्राह्मोविवाहइत्युक्तं विवाहपदार्थेदा
नेएवपुण्यनक्षत्रादिनियमः प्रतीयतेतथापिकात्यायनेनपाणिग्रहेनियमविधानात्तदंतकर्मस्कमुहूर्तेकार्यं अतएवपारिजातेबृहस्प
तिरप्यन्यनक्षत्रविधिंवदन्नाह सौम्यपैतृकहस्ताश्वमैत्रमूलाश्विवायवः त्रीण्युत्तराणिपौष्णंचरोहिणीचशुभप्रदाः अन्याश्चस
र्ववर्ज्याःस्युस्ताराःपाणिग्रहेसदेति हेमाद्रावपि हस्तोत्तराणिवायव्यंमैत्रंमूलंचरेवती रोहिणीसौम्यपित्र्येचशुभंपाणिग्रहेस-
देति विहितेष्वपिग्रहविशेषाक्रमणेननक्षत्रेषुनिषेधंतदपवादंचपारिजातेबृहस्पतिवसिष्ठावूचतुः वत्सरेणतदर्द्धेनतस्याप्यर्द्धेनयां
तियेमंदजीवकुजैर्दग्धाराशयःपूर्वजंगुणमिति राहुकेतुविमुक्तंयदृक्षचक्रनिपीडितम् वत्सरार्द्धेनशुद्ध्येतग्रहयुग्दृष्टंचभमि
ति यस्मिन्भेस्तमयंयांतिग्रहास्तद्दग्धंत्रिमासतः शुद्धत्वमुपयातीतिवज्जिन्यद्भासनोदितमितिच चंद्रशुक्रसमायोगादुद्भूनिशुभ

तामिस्रः ग्रहयुक्तेतुनक्षत्रेतदैवयदिचंद्रमाः तयोर्मध्येव्रजन्पीडांदोषान्सर्वान्व्यपोहतीतिच इतिनक्षत्राणि अथवासरादिनृ
सिंहः बुधशुक्रेंदुजीवानांवारेषुशुभदंभवेत् शुभानामंप्यकंश्चेष्ठवर्गादिचविवाहकइतिमदनरत्नेगर्गः चंद्रताराबलंसुरव्यंदंप-
त्योःपाणिपीडने सुरव्यंगुरुबलंवध्वावरस्येष्टंरवेर्बलम् विवाहेसुरव्यकालेतयोर्बलालाभेपूजाकार्या विवाहेबलमावश्यंदंप-
त्योर्गुरुसूर्ययोः चेत्पूजायत्नतःकुर्याद्दुर्बलप्रदतातयोरितितत्रैवनारदवचनात् चेदित्यस्यदुर्बलेत्यत्रान्वयः गुरुपूजाप्रकारछु-
पनयनप्रकरणएवोक्तइतिनेहोच्यते रवेरपिपूजाग्रहमरवरीत्याद्रष्टव्या उक्तानुक्तकालसंग्रहार्थश्लोकःश्रीधरीये अर्केक-
र्कटकन्यकाघटधनुर्युक्तेमृगेमंत्रिणिस्फीतज्योतिषिशीतरोचिषिनवोद्रिक्तेविरिक्तेतिथौ रोहिण्युत्तररेवतीपितृमरुन्मित्रेंदु-
हस्ताक्षरेष्वाराकार्किजवासरादिरहितेषूद्वाहकर्मारभेदिति मंत्रीगुरुः स्फीतज्योतिषीत्यस्यमध्यमणिन्यायेनाभयतोन्वयः
भृगुमंत्रिणोरनेनविशेषणेनास्त बाल्यादिनिषिध्यते शीतरोचिश्चंद्रः नवोद्रिक्तइतितद्विशेषणेनशुक्लपक्षविधिः पूर्वविशेष-
णेनतत्रापिषष्ठ्यादेःप्राशस्त्यं अनेनैवकृष्णपक्षनिषेधस्तत्रापिपंचम्यंतस्यनानिषेधइतिज्ञाप्यते तत्रस्फीतज्योतिष्ठ्वाच्चंद्रस्यपूर्वो-
दात्ततशास्त्रांतराच्चविरिक्तइतिउक्तविहितकालेपिरिक्तानिषेधः पितरोमघाः मरुतःस्वाती मित्रोनुराधाः इंदुर्मृगः भास्करं मू
लम् आरोभौमः अर्कजःशनिः आदिशब्देनवि ष्टिव्यतीपातवैधृत्यादिनिषेधाःसंगृह्यंते सिंहस्थेमकरस्थेगुरौनिषेध-

इतिप्रसवव्यवस्था नसंवत्सरकृत्यकौस्तुभे बार्हस्पत्यवत्सरदीधितौद्रष्टव्या जन्ममासादेर्निषेधः प्रतिप्रसवयोर्व्यवस्थोपनयनाधि-
कारएवोक्तइतिनेहोच्यते एवंक्षयपक्षक्षयमासक्षयवत्सराणामपिविवाहेनिषेधः तत्रक्षयपक्षः चंडेश्वरीये त्रयोदशदिनेप
क्षेविवाहादिनकारयेत् गर्गादिमुनयःप्राहुः कृतेमृत्युस्तदाभवेत् मृत्युर्विवाहेदंपत्योः आदिपदोपात्तचौलादौशिशोः ज्यो
तिर्निबंधे उपनयनंपरिणयनंवेश्मारंभादिपुण्यकर्माणि यात्रांद्विःक्षयपक्षेकुर्यान्नजीविषुःपुरुषः मदनरत्ने पक्षस्यमध्ये
द्वितिथीपतेतांतदाभवेद्रौरवकालयोगः पक्षेविनष्टेसकलंविनष्टमित्याहुराचार्यवराःसमस्ताः त्रयोदशदिनेपक्षेनूनंसंहरे-
तेजगत् अपिवर्षसहस्रेण कालयोगःप्रकीर्तितइति तत्रपक्षस्यचांद्रदिनात्मकतिथिसमूहात्मकत्वात्पक्षपदसमभिव्याहारव
शेनदिनपदंचांद्रदिनपरंदिनेशादर्शनंदिनमितिचप्रसिद्धेस्त द्रहितक्षीणतिथ्योरदिनत्वमभिप्रेत्यतद्व्दशिष्टत्रयोदशतिथ्या
त्मकानिदिनानियस्मिन्निति व्युत्पत्त्यात्रयोदशदिनत्वंपक्षस्यबाध्यं एवंचपक्षांतर्गतयोः कयोरपितिथ्योःक्षयेणतत्संगे पक्ष-
स्यद्वितिथीपतेतामितिवचनेपक्ष इतिसप्तम्यप्रयोगेणमध्यपदप्रयोगेणआरंभसमाप्तित्वेनाभिप्रेतेप्रतिपत्पंचदश्योनक्षयं-
यत्रगच्छतः तद्भिन्नयोःकयोश्चित्तिथ्योःक्षयेणसपक्षोनिंद्यत्वेनाभिप्रेतइतिगम्यते नचप्रतिपदाक्षयेद्वितीयामारभ्यविशेष्य
पक्षस्यापिसंभवइतिकृतबुद्धयएवविदांकुर्वंतु अतएवभीष्मपर्वणि उत्पातप्रदर्शनेनयुद्धंनिवारयिष्यतोव्यासस्यप्रतरा-

द्रप्रत्यक्तिः खरागोप्रप्रजायंतेइत्यादिग्रंथे चतुर्दशीपंचदशीं भूतपूर्वांचषोडशीं इमांचनाभिजानेहममावास्यांत्रयोदशीमिति एक-
तिथिहध्याषोडशीतत्क्षयेणचतुर्दशीक्षयस्तत्स्थभावेपंचदशीममावास्यां पूर्वंभूतामपिजानेइमां युद्धकालेसन्निहितांतिथिद्वयक्षये
णत्रयोदशींपूर्वकालेभूतांनाभिजानेएषामहानुत्पातइत्याशयः एवंचपूर्वार्द्धेचतुर्दशीत्वादेःप्रतिपन्निरूपितत्वात्तत्प्रायपाठात्त्रयो
दशीत्वमपिप्रतिपन्निरूपितम् तच्चतदेवंघटते यदिप्रतिपत्पंचदश्योर्नक्षयः अस्तिचमौसलेपिभगवदुक्तिः त्रयोदशीपंचदशी-
कृतेयंराहुणापुरा तदाचभारतेयुद्धेप्राप्ताचाद्यक्षयायनइति अत्रापियापंचदशीसात्रयोदशीतिप्रकृतामावास्यादिषयोक्त्योर्नि
रूपकैक्यावश्यंभावात् प्रतिपत्पंचदशीभिन्नयोरेवतिथ्योःक्षयेणक्षयपक्षोनान्यथेतिसिद्धम् इतिक्षयनिर्णयः तथाक्षयमा
सोपिनिषिद्धः काम्यादिष्वखिलेषुकर्मसुपरित्याज्योक्षयाख्योत्तरासंक्रांतीइति दीपिकोक्तेः तन्निर्णयश्चांद्राब्दकोस्त्कमेउ-
क्तइतिनेहोच्यते तथाक्षयसंवत्सरोनिषिद्धः विवाहानुवृत्तौमदनरत्नेलल्लः अतिचारगतोजीवस्तंराशिंनेतिचेद्यदि लुप्तः
संवत्सरोज्ञेयःसर्वकर्मबहिष्कृतइति पूर्वराशिशेषमतिक्रम्यराश्यंतरंसंचारोतिचारः तंप्राप्तोगुरुःपुनस्तंराशिंयदिनैतितदायदि-
लुप्तःसंवत्सरःसर्वधर्मबहिष्कृतोज्ञेयःइत्याशयः एवंचपूर्वनिमित्तेसत्यपिसंवत्सरःक्षयःपाक्षिकइत्युक्तंभवति तथाचविहृतंते
नैव यदातिचारंस्फुरराजमंत्रीकरोतिगोष्ठश्विकमीनसंस्थः नायात्यसौयद्यपिपूर्वराशिंशुभायपाणिग्रहणंवसिष्ठः मेषेवृ

षेमीनकुंभे यद्यतिचारगोगुरुः नतत्र कालेलोपःस्यादित्याहगालवोमुनिरिति इतिक्षयसंवत्सरनिर्णयः यच्च माधवीयादौ
प्रारंभात्प्राग्विवाहस्य मातायदिरजस्वला निवृत्तिस्तस्यकर्त्तव्यासहत्वश्रुतिचोदनादितिनिषेधस्तन्निमित्तरजोदर्शनस्यनांदी
श्राद्धोत्तरमुत्पत्तौ ततः पूर्वोत्पत्तावपिमुहूर्त्तांतरालाभेश्रीपूजनादिनाविवाहसंभवोप्युपनयनाधिकारएवोक्तोनुसंधेयः रजोदर्शना
दिसंभावनायांनांदीश्राद्धस्यापकृष्यानुष्ठानेप्यवधिः प्रयोगरत्ने एकविंशत्यहर्यज्ञेविवाहेदशवासराः त्रिषट्चौलोपनयने-
नांदीश्राद्धंविधीयतेइति एवंनांदीश्राद्धोत्तरंसूतकेपिनविवाहप्रतिबंधः विवाहव्रतयज्ञेषुश्राद्धेहोमार्चनेजपे आरब्धेसूतकं-
नस्यादनारब्धेतुसूतकम् प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेतिविष्णूक्तेः मुहूर्त्तां
तरालाभेसामग्र्यांच कृतायांसूतकिनोप्यधिकारोपायमाह पारिजाते विष्णुः अनारब्ध विशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्घृतम् गांदद्या-
त्पंचगव्याशीततःशुध्यतिसूतकी ततःशुध्यतीतिपुनरुक्तिर्विवाहाद्युपयोगिपाकपरिवेषणादावपिशुद्धिज्ञापनार्था गांपयस्वि
नींदद्यात् संकटेसमनुप्राप्ते सूतकेसमुपस्थिते कूष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्विनीम् चूडोपनयनोद्वाहप्रतिष्ठादिकं-
माचरेत् यदैवसूतकप्राप्तिस्तदैवाभ्युदयक्रियेतिसंग्रहोक्तेः एवंशुद्धिपूर्वकविवाहाद्यनुष्ठानेतदंगत्वेनसंकल्पितान्नभोजनेन
दोषइतिबृहस्पतिनोक्तम् विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके पूर्वसंकल्पितान्नेषुनदोषःपरिकीर्तितइति मृतसूतकमध्ये

विवाहाद्यनुष्ठानेउक्तमभ्युदिपूर्वकमारब्धेइत्यर्थः नांदीश्राद्धोत्तरं सूतकादौ विवाहारंभोत्तरमपिसंकल्पितान्नेविशेषः षड्विंशन्म
ते पूर्वार्द्धपूर्ववत् परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैरिति विवाहादिमध्येसूतकादिप्राप्तावित्यर्थः पूर्वसंकल्पितान्नेभो-
जनसमयेसूतकादौतुविशेषस्तत्रैव भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताःइति भोक्तृ-
भिर्भुक्तशेषस्त्याज्यःपक्वशेषःसूतकीभिर्भोक्तव्यइत्याशयः कन्यायारजोदर्शनेतुविवाहात्पूर्वंजातेविवाहयोग्यतासिद्ध्यर्थं
उपायमाहाश्वलायनः पितान्कृत्वस्वपुत्र्याश्च गणयेदादितःसुधीः दानावधिगृहेपत्नासालयेत्स्वरजोवतीं दद्यात्तद्गतुसंख्या
गाःशक्तःकन्यापितायदि दातव्येकापियत्नेनदानेतस्यायथाविधि दद्याद्वाब्राह्मणेष्वन्नमतिथिभ्यःसदक्षिणम् तस्यातीं
तर्तुसंख्येषुवरायप्रतिदापयेत् उपोष्यत्रिदिनंकन्यारात्रौपीत्वागवांपयः अदृष्टरजसेदद्यात्कन्यायैरत्नभूषणं तामुद्वहन्वरः
श्चापिकूष्मांडैर्जुहुयाद्द्विजइति तस्याःकन्यायादानेकर्तव्येयथाविधिस्रुवर्णशृंगादिगोदानविधिनेत्यर्थः वरायेति उक्तप्र-
काराणामन्यतमेनदाताकन्यायोग्योभवतीत्यर्थः उपोष्येतिश्लोकेनदृष्टरजस्ककन्यायाउपवासस्त्र यांतेगव्यपयःपानपूर्व
कंअदृष्टरजसेकुमार्यैसरत्नभूषणदानेनविवाहयोग्यतोच्यते तामुद्वहन्निति वरस्य कूश्मांडहोमेनतद्वुद्वाहयोग्यतेतिबोध्यं



होमकालेरजोदर्शनेतुयज्ञपार्श्वः विवाहेविततेयज्ञेहोमकालउपस्थिते कन्यामृतुमतींदृष्ट्वाकथंकुर्वंतियाज्ञिकाः स्नापयि

त्वातु तां कन्यामर्चयित्वा यथाविधि युंजानामाहुतिं हुत्वा ततस्तंत्रं प्रवर्तयेति युंजानेति मंत्रस्तैत्तिरीयशाखायां प्रसिद्धः यदा
तु दातृभावेन रजोदर्शनं ततः स्वयंवरं वरयेत् सत्यपि वा रजसि कंचित्कालं जीवत्स्वपि दातृषु तान् प्रतीक्ष्य स्वयंवरं वरयेत् तद्विशे
षमाह मनुः त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ऊर्ध्वं तु कालादेतस्माद्विंदेत सदृशं पतिं अदीयमाना भर्त्तारमधिगच्छेद्य-
दि स्वयम् नैनः किंचिदवाप्नोति न च यं साधिगच्छतीति अदीयमाना दातृभावात् दातृोपेक्षणाद्वेति मंतव्यं सा यं भर्त्तारमधिग
च्छति सोपि नैनो अधिगच्छतीति व्याख्यातं माधवेन अथ प्रतिकूलविधिः कृष्णभट्टीये वधूवरार्थे घटितेषु निश्चितेवरस्य
गेहेप्यथ कन्यकायाः म्रियेत कश्चिन्मनुजो यदि नारी तदा न कुर्युः खलु मंडनं ते वाङ्निश्चयेकृते पश्चादासितरौनिधनं गतौ तयोस्तु
त्प्रतिकूलं स्यान्नान्येषां तु कदाचन इत्थं वसिष्ठः वरवध्वोः पिता माता पितृव्यश्च सहोदरः एतेषां प्रतिकूलं स्यान्महाविघ्न
प्रदं भवेत् पिता पितामहश्चैव माता चैव पितामही पितृव्यस्त्री सुतो भ्राता भगिनी चाविवाहिता एभिरेव विपन्नैश्च प्रतिकू
लं बुधैः स्मृतम् अन्यैरपि विपन्नैस्तु केचिद्रूचुर्न तद्भवेत् मांडव्यः वाग्दानानंतरं माता पिता भ्राता विपद्यते विवाहो नैव कर्त्त-
व्यः स्ववंशहितमिच्छता अथ संकटे प्रवृत्तिप्रकारमाह मेधातिथिः वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः तदा संवत्सरादू
र्ध्वं विवाहः शुभदो भवेत् पुरुषत्रयपर्यंतं प्रतिकूलं स्वगोत्रिणाम् प्रवेशनिर्गमौ तद्वत्तथा मुंडनमंडने प्रेतकर्माण्यनिर्वर्त्य चरेन्ना

ष्युदयक्रियाम् आचतुर्थंततःपुंसिपंचमेशुभदंभवेत् स्मृतिरत्नावल्याम् पितुरब्दमिहाशौचंतदर्द्धंमातुरेवच मासत्रयंतुभार्याया
स्तदर्द्धंभ्रातृपुत्रयोः अन्येषांतुसपिंडानामाशौचंमाससंमितम् तदंतेशांतिकंकृत्वाततोलग्नंविधीयते ज्योतिःप्रकाशे प्रतिकू-
लेपिकर्त्तव्योविवाहोमासमंतरा शांतिंविधायगांदत्वावाग्दानादिचरेत्तुनरिति स्मृत्यंतरे प्रतिकूलेनकर्त्तव्यंलग्नंयावदृतुत्रयम्
प्रतिकूलेपिकर्त्तव्यंकेप्याहुर्बहुसंप्लवे प्रतिकूलेसपिंडस्यमासमेकंविवर्जयेत् विवाहस्तुततःपश्चात्तयोरेवविधीयते ज्योतिःसाग
रे दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये प्रौढायामपिकन्यायांनानुकूलंप्रतीक्षते अन्यत्रापि दीर्घरोगाभिभूतस्यदूरदेश
स्थितस्यच उदासीनस्थितस्यापिप्रतिकूलंनविद्यते संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना शांतिरुक्तागणेशस्यकृत्वातांशु-
भमाचरेत् अकृत्वाशांतिकंयस्तुनिषिद्धेसतिदारुणे प्रकरोतिशुभंकर्मविप्रस्तस्यपदेपदे वृद्धवसिष्ठः प्रतिकूलेतुसंप्रा
प्तेविवाहंनैवकारयेत् अंतेदोषविनाशायकुर्याच्छांतिमिमांशुभाम् श्रियेजातइतिश्रियं इदंविष्णुरितिविष्णुं गौरीर्मिमायेति
गौरीं त्र्यंबकमितित्र्यंबकं परंमृत्योरितियमं पूजयित्वातिलाज्यंचहुनेदष्टोत्तरंशतम् भूःस्वाहामृत्युर्नश्यतांस्नुषायैसुखं
वर्द्धतांस्वाहा ततोहोमंसमाप्याथगोद्वयंदक्षिणाभवेत् स्मृतिचंद्रिकायां कृतेवाङ्निश्चयेपश्चान्मृत्युर्मर्त्यस्यगोत्रिणः त
दानमंगलंकार्यंनारीवैधव्यदंध्रुवमिति वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः तदोद्वाहोनैवकार्यःस्ववंशक्षयदोषतइति

अत्र यद्यपि म्रियते कश्चिदिति मृत्युर्भवति कस्यचिदिति चाविशेषेणोक्तम् तथापि पितामहादीनामिव मातामहादीनामपि मरण
स्य प्रतिकूल दोषनिमित्तत्वेन क्वचिदकीर्तनाद विवाहितायाः भगिन्या इव विवाहितायाः मरणस्य तथात्वानुक्तेर्मेधातिथिवाक्ये स्वगो
त्रिणामिति चंद्रिकावाक्ये मर्त्यस्य गोत्रिणः इति च कीर्त्तनात् वध्वा वरस्य वा सगोत्रसपिंडेषु त्रिपुरुषांतर्गते मर्त्ये मृते प्रतिकूलदोष-
इति मंतव्यं स्त्रीवरस्य द्वितीयादिविवाहसमपूर्वोढा स्त्री तस्त्रस्यां पूर्वोत्पन्नः एतत्पौत्रोपलक्षणम् एवं पितृव्यग्रहणं तत्सुतस्य ए
वं च वरमारभ्य जनकत्रिपुरुषी जन्यात्रिपुरुषी कूटस्थमारभ्य संतानभेदेन त्रिपुरुष्यत्र बोद्धव्या वधूवरयोः समानगृहे तन्मरणे किं-
चित्कालं प्रतीक्ष्यैव विवाह इति तदा न कुर्युरित्यादिशब्दैर्बोध्यते तयोस्तत्प्रतिकूलं स्यादिति कालप्रतीक्षाशांतिभ्यामसमाधेयो दो
षो द्वयोर्युगपन्मरणज इत्यर्थः अत एवोक्तं नान्येषां तु कदाचनेति अन्येषां सपिंडानां तयोरप्येकैकमरणज स्तु समाधेय इत्याशयः
वृद्धवसिष्ठवाक्ये चतुर्णां मरणस्य महाविघ्नस्य महाविघ्नकरत्व कथनं तत्र प्रतीक्षासहिता केवला वा विनायकशांतिरिति कथनार्थं
अत एव तद्विधिवाक्यशेषे शांत्यकरणे पदे पदे इति विघ्नस्य महत्त्वं प्रदर्शितं एभिरेव विपन्नैरिति कालप्रतीक्षासहितायाः श्रीपूजना
दिशांतेर्निमित्तमेतन्मरणमेवेत्याशयः अत एव वाक्ये नैव कर्त्तव्यो निमित्तांतरमिति व्याख्येयम् एवं वृद्धवसिष्ठवाक्यमपि प्रती-
क्षां च सामान्यतः संवत्सरमृतुत्रयं मासमात्रं चेति पक्षत्रयं मेधातिथिवाक्यसहितस्मृत्यंतरवाक्याद्बोध्यं रत्नावलीवाक्ये तु आशौच

शब्देन प्रतिकूलकृतं विवाहानधिकारमात्रं प्रतीक्षातात्पर्यकं बोद्धव्यम् तत्र पितुर्मरणे अब्दप्रतीक्षायामात्रादिमरणनिमित्ततदर्धादिप्र
तीक्षायास्तूल्यकल्पनेनोक्तत्वात् पितुर्मरणे संकटतारतम्येन पक्षत्रयम् मातुर्मरणे तदर्द्धमासत्रयं वेति पक्षद्वयं एवं भार्यामरणे मा
समात्रं वेति भ्रातृमरणे पुत्रमरणे च सार्द्धमासं मासमात्रं वेति पक्षद्वयं पितामह्यादिसपिंडांतरमरणे तु मासमेव प्रतीक्षेति व्यवस्था य
दि गुणवत्तरमातृमरणे ऋतुत्रयप्रतीक्षया परितोषः तदा संवत्सरप्रतीक्षापि कार्या एवं गुणवत्तरभार्यादिमरणे ऋतुत्रयं प्रतीक्षापी
त्याशयेन तयोरपि पक्षयोः सामान्यविध्युपपत्तिः पितृमातृपितृव्यसोदराणां चतुर्णां मरणे उक्तव्यवस्थया प्रतीक्षांते विनायकशांतिः
अन्यमरणे तदंते ग्रहशांत्यंतरं यदात्यतिसंकटवशेन सर्वत्र निमित्ते मासाधिकप्रतीक्षाया असंभवः तदा तन्मध्येपि किंचित्कालं प्रतीक्ष्यो
क्तव्यवस्थयान्यतरां शांतिं कृत्वा गां दत्वा पुनर्दानं चरेदिति ज्योतिःप्रकाशवाक्यकृतो विशेषः न तु क्वचिदपि प्रतिकूले पूर्वाशौचादि-
निमित्ते न निवृत्ताशौचस्यापि सद्यो विवाहे प्रवृत्तिरुचिता यथा सगोत्रसपिंडेषु पुरुषत्रयपर्यंतमेव प्रतिकूलस्य निषेधनिमित्तत्वम्-
एवं प्रवेशमुंडनयोर्निर्गममंडननिषेधत्वनिमित्तत्वमपि तेष्वेतावत्पर्यंतमेवेति पुरुषत्रये इति मेधातिथिवाक्यार्थः प्रेतकर्माणीत्युत्त
रवाक्ये तु यद्यपि आ चतुर्थमिति संख्यांतरस्योपादानत्वात् प्रेतकर्मनिवृत्तेर्निमित्तत्वस्य आभ्युदयनिषेधस्य नैमित्तिकस्योपादाना
त् पूर्ववाक्यादत्यंतभिन्नविषयता स्फुटैव प्रतीयते तथापि स्वगोत्रिणामा चतुर्थमित्यनुषंगलभ्यार्थसिद्ध्यै तदनंतरपाठः प्रेतकर्माणी

तिच प्रेतोद्देशेन विहितानि कर्माण्युच्यंते नतु प्रेतशब्दोद्देशविशिष्टानि तेन सपिंडीकरणोत्तरं मासिकानामपि संग्रहः तेषामुत्पत्तिवे-
लायां प्रेतोद्देशेन विहितानामपि तच्छब्दोद्देशरहितपुनरावृत्तेर्वाचनिकत्वात् अतएव कात्यायनः निर्वर्त्य वृद्धितंत्रं तु मासिकानि नतं
त्रयेत् आयातयामं मरणं न भवेत्पुनरस्य त्विति वृद्धिकर्मोत्तरं मासिकानुष्ठाने मृतस्य मरणं आयातयामं भवेत् नूतनमिव भवेत् तच्च-
मांगलिककर्मणः पूर्वमृतस्य मांगलिककर्मोत्तरमापद्यमानमनुचितमिति भावः शाट्यायनिरपि सपिंडीकरणादर्वागपकृष्य
कृतान्यपि पुनरप्यपकृष्यंते वृद्ध्युत्तरनिषेधनादिति एवं च मृतमरणस्यारोपितनूतनत्वे दोषं वदताऽनारोपितनूतनत्वापादकानां सपिं-
डीकरणांतानामाभ्युदयिकोत्तरमनुष्ठानमतिदुष्टमिति ज्ञाप्यते मासिकसाहचर्यादेव च सपिंडीकरणांतानामनुष्ठानमपि नात्र नां-
दीश्राद्धदेवतात्वसित्यर्थमुक्तमासिकानां तदर्थतया बाधितत्वात् अनिर्वर्त्येति यद्यपि प्रेतकर्मभिः सहाभ्युदयक्रियायाः मंगलपरं-
परायाः समानकर्तृकत्वं प्रतीयते तथापि तदसति कर्त्रंतरे मुख्ये सति तु प्रेतकर्मसु प्रयोजककर्तृतामादायोपपादनीयम् इत्थमेव हि व
ध्वंजलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपतीति सूत्रे वृत्तिकृदादिभिरुक्त तदुपपाद्यते विवाहहोमे उपस्तरणस्य वरकर्तृकत्वं
लाजावापस्य भ्रात्रादिकर्तृकत्वं विच्छिन्नसंधानार्थं तु तस्मिन् लाजहोमस्यापि वरकर्तृकत्वमिति वदद्भिः एवं नांदीश्राद्धदेवतात्वसित्य
र्थं सपिंडीकरणापकर्षपरत्वेन पराभिमतवचनेऽपि समानकर्तृकत्वमित्थमेव स्वीकार्यम् तद्यथा शाट्यायनिः प्रेतश्राद्धानि सर्वाणि स

पिंडीकरणंतथा अपकृष्यापिकुर्वीतकर्तानांदीमुखंततइति तथालघुहारीतोपि भ्रातावाभ्रातृपुत्रोवासापिंडःशिष्यएववा सहपिं-
डक्रियांकृत्वाकुर्यादभ्युदयंततइति मृतस्यकन्यादानेहितस्यज्येष्ठकनिष्ठौभ्रातरावधिकारिणौकन्यायाःपितृपितामहभ्रातृभावात्सं-
भवतः पितामातामहोभ्रातासकुल्योजननीतथा कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरस्परइतियाज्ञवल्क्यवचनात् तस्यसपिंडीकर
णंतुकनिष्ठस्यैवाधिकारोनज्येष्ठस्य नपुत्रस्यपितादद्यान्नानुजस्यतथाऽग्रजः अपिस्नेहेनकुर्यातांसपिंडीकरणंविनेतिसपिंडीकरण-
स्यतंप्रतिविशिष्यनिषेधात् नचेदंशास्त्रंशास्त्रांतरावगतकालनियमकर्तृनियमयोर्बाधंकर्तुमिष्टेप्राप्तेकर्मण्युभयविधानेवाक्यभेदात्
अतोज्येष्ठस्यसपिंडीकरणेप्रयोजककर्त्तृकंकनिष्ठस्यमुख्यकर्तृतामंगीकृत्यैवोक्तवचनयोःसमानकर्त्तृकत्वमुपपादनीयम् एवंचान
योर्वचनयोर्दैवतात्वसिद्धिप्रयोजनासंकीर्त्तनाद्विधेयार्थैक्याच्चमूलैक्यलाघवानुरोधेन प्रेतकर्माण्यनिर्वर्त्येतिकृष्णाभट्टीप्रयोगोदाहृत
वचनार्थपरत्वंस्वीकर्त्तुमुचितं यदिपरंमातामहसपिंडीकरणापकर्षोसगोत्रविषयोनैवंसित्स्यादितितथानस्वीक्रियतेश्रीमद्भिर्मास्वी
कुर्वंतु नतुस्वकृतैतद्वाक्यव्याख्यावशेनानेकाभियुक्तोदाहृतस्यसकलदाक्षिणात्यप्रभृत्यनेकशिष्टाचारसंवादिनःप्रेतकर्माण्यनिर्व-
र्त्यैतिवचसोनिर्मूलत्वमर्थांतरकल्पनंचोक्तशिष्टाचारस्यवाप्रामाण्यकल्पनंप्रामाणिकैःस्वीकर्तुमुचितम् आस्तांवचनकथा अस्तिता
वत्प्राच्यभिन्नशिष्टानांसपिंडदाहप्रभृतिपुनर्मासिकांतेप्रेतकर्माभावेमांगलिककर्मोतारंभाचारःसपिंडेषुसंमताचतत्सतांश्रीमता

मपितन्मूलंनविद्मःइतिवदतां जनपदधर्मोग्रामधर्मोश्चतान्विवाहेप्रतीयादिति गृह्यसूत्रकारैरितीतराचाराणामादरंवदद्भिरस्यानाद
रःकृतइतिकथमिवनिर्धारितम् एवंचनांदीश्राद्धदेवतात्वयोग्यस्यापिसपिंडीकरणापकर्षोमांगलिककर्मानुरोधेनसिद्धिः तथाहि
पितामहेप्रपितामहेअकृतसपिंडनेसतिपितरिमृते औचित्येनतयोःसपिंडीकरणोत्तरंपितुःसपिंडीकरणकर्तव्यतायांप्राप्तायामपिय
दातथानुष्ठानेनपितुःसपिंडीकरणकालातिक्रमोभवतितदान्यायतःकालातिक्रमेणतथैवतत्कर्तव्यतायांप्राप्तायांवचनेनाकृतसपिंडी
करणाभ्यामपिताभ्यांपितुःसपिंडीकरणंकर्तव्यतयाविहितं यथाहकात्यायनः असंस्कृतौनसंस्कार्योंपूर्वौपौत्रप्रपौत्रकैः पितरंत
त्रसंस्कुर्यादितिकात्यायनोब्रवीत् पापिष्ठमपिशुद्धेनशुद्धंपापकृतापिवा पितामहेनपितरंसंस्कुर्यादितिनिश्चयइति असंस्कृतौ अ
कृतसपिंडीकरणौ पूर्वौपितामहप्रपितामहौ पापिष्ठंअकृतसापिंड्यंपितरं शुद्धेनकृतसापिंड्येन पापकृता अकृतसापिंड्येनवापि
तामहेनसहशुद्धंनिवृत्तप्रेतावस्थंकुर्यादित्यर्थः एवंकृतेदर्शश्राद्धमपितादृशाभ्यांसहकर्तव्यमित्यपितेनैवोक्तं पितुःसपिंडतांकृत्वाकु
र्यान्मासानुमासिकमिति एवंचदर्शश्राद्धविकृतित्वान्नांदीश्राद्धेपितादृशयोर्देवतात्वसंभवेपिमांगलिकविवाहाद्यनुरोधेनतयोःसपिं
डीकरणंकृत्वैवमांगलिकंकर्मकार्यम् तयोश्चतुःपुरुषांतरगतत्वात् अतएवशुभागमएवसपिंडीकरणापकर्षनिमित्तत्वेनकाला
दर्शोपक्ष्यते एकादशेद्वादशेऽन्हित्रिपक्षेवात्रिमासिवा षष्ठेवैकादशेवाब्देसंपूर्णेवाशुभागमे सपिंडीकरणस्येत्थमष्टौकालाःप्रकीर्ति

ताः सापिंडीकर्तव्यभावाद्यौ प्रेतो साम्नावनंतरः अनग्निरक्तादि इतीयाद्याः सप्तकालाः प्रकीर्तिताइति अनंतरस्मिन्पक्षइतिशुभस्य विवाहा
देरागम उपस्थितेसतीतिचतत्रैवव्याख्यायतन्मूलवाक्योदाहरणंचेत्थंकृतंमहाभारते सपिंडीकरणंकुर्याद्यजमानस्त्वनग्निमान् इत्यु
पक्रम्य एकादशेपिवामासिमंगलेस्यादुपस्थितइति अत्रचशुभमंगलशब्दाभ्यांविवाहाद्येवोक्तमितिप्रतीतेर्ननांदीश्राद्धप्रतीतिःनत
रांतद्देवतात्वस्येतिकृतबुद्धयएवविदांकुर्वंतु नचशुद्धमंगलशब्दौअंगभूतनांदीश्राद्धलक्षकौप्रधानवाचिनःशब्दस्यांगलक्षकतायाः
अन्याय्यत्वाददृष्टत्वाच्चशक्यतेतुवक्तुंशाठ्यायनिवाक्येनांदीश्राद्धमुखग्रहणंविवाहाद्यारंभपरंसपिंडीकरणांतमपकृष्यविवा-
हाद्यारंभंकुर्वीतेत्यर्थः मूलश्रुतिकल्पनालाघवात् चरुंनिर्वपेत् पशुमालभेतपूतिकानभिषुणुयात्भक्षंप्रयच्छेतेत्यादौअंगवा
चिनःशब्दस्यप्रधानलक्षकतायादृष्टत्वाच्चनांदीश्राद्धंविवाहादावितिनांदीश्राद्धस्यतदारंभत्वेनप्रसिद्धेश्चसत्यपिदेवतात्वसिध्य-
र्थापकर्षस्यशास्त्रार्थत्वेमातामत्याःसपिंडीकरणस्यनापकर्षः तस्यानांदीश्राद्धदेवतात्वाभावात् प्रकृतिभूतपार्वणएवगृह्यसूत्र
गृह्यपरिशिष्टेषुनिर्गुणपित्रादीनांदेवतात्वावगमेनसपत्नीकत्वेनगुणस्यापिदेवतानुप्रवेशासंभवात् स्विष्टकृतेसमवद्यतिपा-
त्नीवंतंगृण्हातीत्यादौचतुर्थ्याद्यवगतदेवतात्वस्यगुणस्यगुणिनंप्रतिनित्यसापेक्षत्वाद्भिन्नवति मांत्रवर्णिकगुणिनोस्यादेर्देव-
तानुप्रवेशः नभवतिचयदग्नयेचेतिचतुर्थ्याद्यवगतदेवतात्वस्यगुणिनोगुणितंप्रतिनित्यसापेक्षत्वाभावेनगुणस्यज्योतिष्वादेरुक्त

दन्नुप्रवेशइतिप्रसिद्धम् यत्तुनयोषिद्भ्यः पृथग्दद्यादवसानदिनादृते स्वभर्तृपिंडमात्राभ्यस्तृप्तिरासांयतः स्मृतेतिवचनात् सपत्नी-
कानांदेवतात्वमितितद्विस्मयकरं तन्निहितादिरहितास्यार्थवदस्य बृहस्पतेर्वा एतदन्नंपत्नीवाइतितद्देवतायामप्रामाण्यात् येनत्वाम
त्रान्वितिपिंडदानमंत्रेणान्येषामनुत्तराणामिवपत्न्या अपि प्राप्तस्यात्रालाभस्य तदालंबनत्वसंभवाच्च यद्यपिदाक्षिणात्याचारवशेन-
सपत्नीकत्वविशिष्टपित्राद्युद्देशः पार्वणश्राद्धे प्रामाणिकस्तथापिशक्यते वक्तुं यथाप्रस्तरयागस्योद्देशेने सदेवतासंस्कारस्य देवेभ्यइ
त्युद्देशोपि प्रयाजादिदेवतानांसंस्कारस्य देवेभ्यआज्यपेभ्य इत्युद्देशः प्रयाजादिदेवतानांसमिदादीनामेवदेवतात्वं देवाज्यपत्वगुणसं
कीर्तनंत्वदृष्टार्थं नतुतस्यदेवतानुप्रवेशः इष्टदेवतासंस्कारत्वविघातापत्तेः तथाश्चापिसपत्नीकत्वसंकीर्तनमदृष्टार्थमित्युचितंचै
तत् माहेंद्रग्रहइंद्रस्यादेवतात्ववत्सपत्नीकपितृदेवत्येश्राद्धे केवल नामदेवतात्वेनजीवन्मातृकमृतपितृकस्यामाश्राद्धाननुष्ठानाप
त्तेः अदृष्टार्थगुणंतुयादेवताविहायापिसंभवति नित्यानुष्ठानं अस्तुवादेवतानुप्रवेशोप्यस्यतथापिकालादर्शेमासिकदार्शिकयो-
र्भेदानुष्ठानसिद्ध्यैदेवताभेदप्रदर्शनावसरेपितृपितामहयोरुभयोरन्यतरस्य मृतभार्यात्वेसपत्नीकदेवतात्वयोग्यतादशायामेवसप-
त्नीकानांदेवतात्वकथनाज्जीवन्मातृकैर्मृतपितृकैः केवलपित्राद्युद्देश्यकश्राद्धानुष्ठानान्मृतोभयैश्चसपत्नीकतदुद्देशेनैवतदनुष्ठा
नाच्चमातॄणांदेवतात्वयोग्यतादशायामेवसपत्नीकानांदेवतात्वमितिस्वीकर्तव्यं ततश्चमृतपितृकेणदेशांतरमृताहिताग्निमात्र

स्थि प्रतीक्षांकुर्वता यथा केवलपित्राद्युद्देशेन दर्शश्राद्धमनुष्ठेयं तथा मातामह्या और्ध्वदेहिकाभावेपि केवलमातामहाद्युद्देशेन तस्यां
जीवत्यामेव नांदीश्राद्धसंभवात् तदनुरोधेनापि मातामह्या और्ध्वदेहिकप्रतीक्षावोचितेतिज्ञेयम् नच मृतयावस्वादिभावगतया सा
पत्नमातामह्या सपत्नीकत्वगुणसंभवे किमिति केवलानां देवतात्वमिति शंक्यं अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा अत्र मातुः पृथक्
श्राद्धमन्यत्र पतिना सहेति शातातपस्मृतौ स्वेन भर्त्रा समं भुंक्ते माता श्राद्धे सुधासमम् पितामही च स्वेनैव स्वेनैव प्रपितामहीति बृह
स्पतिस्मृतौ च श्रुतस्य मात्रादिशब्दस्य सापत्नमात्रादि गौणत्वान्मुख्ये संभवति गौणत्वस्यान्याय्यत्वाद्दमावास्याश्राद्धादौ सापत्नमा
त्रादेर्दैवतानुप्रवेशाभावस्य श्राद्धहेमाद्रिणो कृत्वादित्यलमतिप्रसंगेन अथ विवाहभेदाः तत्र मनुरुद्देशपूर्वकं तत्क्रमेण लक्ष-
णमाह ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः गांधर्वो राक्षसश्चैव पैशाचश्च तथाष्टमः आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्व
यम् आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते अलंकृत्य सुतादानं दैवं धर्मं प्रचक्षते एकं गो
मिथुनं द्वे वा वरादादाय धर्मतः कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते सहोभौ चरतां धर्ममिति यश्चानुभाष्य तु कन्याप्रदानमभ्यर्च्य
प्राजापत्यो विधिः स्मृतः अत्र विशेषं पारिजाते भगवान् अन्येष्वपि विवाहेषु धर्मस्याचरणं सह यद्यप्युक्तं तथाप्यत्र विशेषोक्तिर्गृ-
हाश्रमात् आश्रमांतरसंप्राप्तिनिषेधार्थेति गम्यते नचात्र तस्यां जीवत्यां विवाहस्य परिग्रहः आश्रमांतरयोगो वा मृतायां भवतस्तु

ताविति अन्येतुपुत्रादावनग्निसाध्येषुसाहित्यनियमार्थासेतिजातिभ्योद्रविणंदत्वाकन्यायाश्चस्वशक्तितः कन्याप्रदानंस्वच्छंदाद्या-
दासुरोधर्मउच्यते इच्छयान्योन्यसंयोगः कन्यायाश्चवरस्यच गांधर्वः सइतिज्ञेयोमैथुनेकामसंभवः हत्वाछित्वाचभित्वाचक्रोशंतीं
रुदतींगृहात् प्रगृह्यकन्याहरणंराक्षसोविधिरुच्यते सुप्तांमत्तांप्रमत्तांवाहोरात्रौयःप्रयच्छति सपापिष्ठोविवाहानांपैशाचःप्रथि
तोष्टमः आर्षोगोमिथुनंदानंचकन्यार्हणंनतुतावताकन्याविक्रयेणनिंद्यत्वमित्यपिमनुनैवोक्तम् आर्षेगोमिथुनंशुल्कंकेचिदाहु-
र्मृषैवतदित्युपक्रम्य अर्हणंतत्कुमारीणामानृशंस्यंहिकेवलमिति तद्गोमिथुनंआनृशंस्यंअनिंदितम् किंतुतत्कुमारीणामर्हणंपू
जनमित्येवमाचारमदनरत्नेव्याख्यातम् एषांव्यवस्थामाहमनुः षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोवरान् विट्शूद्रयोस्तुतानेवविद्या
द्धर्म्यानराक्षसान् तत्रब्राह्मादीन्गांधर्वान्ब्राह्मणस्यधर्म्यान् धर्मादनपेतान्विद्यात्क्षत्रस्यआसुरगंधर्वराक्षसपैशाचान्वैश्यशू
द्रयोराक्षसवर्जितान्आसुरगंधर्वपैशाचानितिव्याख्यातंमदनपारिजाते एषामपिप्राशस्त्यव्यवस्थामाहमनुः चत्वारोब्राह्मणस्या
द्याःशस्तागांधर्वराक्षसौ राज्ञस्तथासुरौवैश्येशूद्रेचांत्यस्तुगर्हितइति नारायणवृत्तिकारस्त्वाह पूर्वेषुचतुर्षुपूर्वःपूर्वःप्रशस्तःउत्तरेषू
त्तरोत्तरःपापीयान् तत्रपूर्वोब्राह्मणस्येतरयोःप्रतिग्रहाभावात् आर्त्विज्याभावाच्च गांधर्वःक्षत्रियस्यपुराणेदृष्टत्वात् राक्षसश्चतत-
स्यैवयुद्धसंयोगात् आसुरस्तुवैश्यस्यधनसंयोगात् इतरेत्रयोनियताइतित्रयआर्षप्राजापत्यपैशाचाः अत्राद्येमनुवाक्येषण्णांधर्म्य

त्वंभार्यात्वजनकत्वं द्वितीयेत्वासुरादेः सत्यपिभार्यात्वजनकत्वेप्रत्यवायजनकत्वमप्राशस्त्यम् यद्यपिदृत्तिकारेणत्रयोनियताइतितुल्यवदवि
शेषेणोक्तं तथापिपैशाचेप्रत्यवायाधिक्यंपापिष्ठत्वाद्युक्तेस्तदाशयत्वात् दृत्तिकृताचस्पष्टंतत्कथनात् विवाहांतरासंभवेप्रत्यवायाधिक्य
मंगीकृत्यापिप्रवृत्तम् क्षत्रियादिप्रतीतस्यभार्यात्वजनकत्वाभ्युपगमात् यथाहमाधवः अन्यविवाहालाभेक्षत्रियादीनांपैशाचमप्यनु
जानातिवत्सः सर्वोपायैरसाध्यास्यात्स्त्रकन्यापुरुषस्यया चौर्येणापिविवाहेनसाविवाह्यारहःस्थितेति इतिचौर्येणनीतापिविवाहहो
माभावेततोपहृत्याऽन्यस्मैदेयेतिमाधवीयेवसिष्ठः बलादपहृताकन्यामंत्रैर्यदिनसंस्कृता अन्यस्मैविधिवद्देयायथाकन्यातथैवसेति अ
स्तिचगांधर्वादिषुचतुर्ष्वपिपरिग्रहोत्तरंहोमविधिर्गृह्यपरिशिष्टे गांधर्वासुरपैशाचाविवाहाराक्षसश्चयः पूर्वंपरिग्रहस्तेषांपश्चाद्धो
मोविधीयतइति मंत्रैर्यदिनसंस्कृतेतिसप्तमपदादिक्रमेणमंत्रांतामंत्राविवक्षिताः तत्रैवभार्यात्वोत्पत्तेरितिमाधवः धर्म्यविवाहफ-
लंदुष्टविवाहजनितप्रत्यवायफलंचाहमनुः दशपूर्वान्परान्वंश्यानात्मानंचैकविंशकम् ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसःपितॄन्
दैवोढायाःसुतश्चैवसप्तसप्तपरावरान् आर्षोढायाःसुतस्त्रींस्त्रीषट्षट्कायोढजःसुतः ब्राह्मादिषुविवाहेषुनपूर्वशः ब्रह्मवर्चस्विनः
पुत्राजायंतेशिष्टसंमताः इतरेष्ववशिष्टेषुनृशंसानृतवादिनः जायंतेदुर्विवाहेषुब्रह्मधर्मद्विषःसुताइति ब्राह्मादिषुविवाहेषुवाग्दा
नोत्तरमद्भिर्दानोत्तरंवावरमरणेवसिष्ठः अद्भिर्वाचाचदत्तायांम्रियेतोर्ध्वंवरोयदि नचमंत्रोपनीतास्यात्कुमारीपितुरेवसेति वाग्दानोत्तरंदेशां

तरगमनेतु अपरार्केनारदः प्रतिगृह्यतुयःकन्यांवरोदेशांतरंव्रजेत् त्रीन्दृतून्समतिक्रम्यकन्याऽन्यंवरयेद्वरमिति एतच्चकन्यायैशुल्क
दानाभावे शुल्कदानेतुकात्यायनः प्रदायशुल्कंगच्छेद्यः कन्यायाःस्त्रीधनंतथा धार्यासावर्षमेकंतुदेयाऽन्यस्मैविधानतइति वर्षोत्तरमिति
शेषः यत्तुवसिष्ठः कन्यायांदत्तशुल्कायांम्रियतेयदिशुल्कदः देवराय प्रदातव्यायदिकन्यानुमन्यतेइति तद्युगांतरीयक्षेत्रजोत्सत्यनुमति
विषयं अनेकेभ्योवाग्दानेपिचंद्रिकायाम् अनेकेभ्योहिदत्तायामनूढायांतथैवच पूर्वागतश्चसर्वेषांलभेताद्यवरस्तताम् पश्चाद्वरेणय
द्दत्तंतस्याःप्रतिलभेतसइति सर्वेषांतुल्यत्वेआद्यवरएवलभेत तल्लाभासंभवनिर्णयेइतरेषांमध्येयएवपूर्वागतःसएवलभेतेत्यर्थः आद्य
स्यदोषवत्त्वेपरस्यगुणवत्त्वेचपरस्मैदेया कुलशीलविहीनस्यपश्चाद्धिपतितस्यच अपस्मारिविधर्मस्यरोगिणांवेषधारिणाम् दत्ताम
पिहरेत्कन्यांसगोत्रोढांतथैवचेतिवसिष्ठोक्तेः दत्तामपिहरेत्पूर्वांच्छ्रेयांश्चेद्वरआव्रजेदितियाज्ञवल्क्योक्तेश्च पश्चाद्वाग्दानोत्तरपतितस्ये
त्यर्थः वरस्यदोषाभावेवाग्दत्तामप्रयच्छन्दंड्यः कन्यायाश्चापस्मारादिमहादोषसत्वेतमनाख्यायप्रयच्छन्दंड्यइत्याह्याहयाज्ञवल्क्यः
सकृत्प्रदीयतेकन्याहरेत्तांचोरदंडभागिति अनाख्यायददन्दोषंदंड्यउत्तमसाहसमितिचदोषमनाख्यायेत्यन्वयः उत्तमसाहसंतेनैवो
क्तं साशीतिपणसाहस्रोदंडउत्तमसाहसइति अधर्म्येषुविवाहेषुभोजनादिनिषेधः तदतिक्रम्यप्रायश्चित्तंचोक्तंपारिजातेत्रिकांड्या
म् अधर्म्येषुविवाहेषुतांबूलमनुमोदनम् भोजनंवाहनंचैववर्जयेत्सर्वथाद्विजः आचरेद्दूषवासःस्याद्गांधर्वेचत्रिरात्रकं राक्षसेचैवपैशा

चेच्चरेच्चांद्रायणंतथेति इतिविवाहाष्टकगतविशेषनिर्णयः अथपरिवेत्त्रादिनिर्णयः तल्लक्षणंमनुः दाराग्निहोत्रसंयोगंकुरुते-
योग्रजेस्थिते परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजइति स्मृत्यंतरे ज्येष्ठायांयद्यनूढायांकन्यायामुह्यतेनुजा यासाग्रेदिधिषुर्ज्ञेयापूर्वा
तुदिधिषुःस्मृतेति परिवेत्त्रादिस्वरूपकथनपूर्वकं तत्प्रायश्चित्तंहारीतः ज्येष्ठेनिविष्टेकनीयान्निविशमानःपरिवेत्ताभवति पूर्वःपरिवि
त्तिः परिवेदिनीकन्यापरिदायीदातापरियष्टायाजकः तेसर्वेपतिताःसम्यक्संवत्सरंप्राजापत्येनकृच्छ्रेणयाजयेयुरिति एतदकामतः

पित्राद्यनुज्ञातोद्वाहविषयम् कामतःपित्रादिदत्तोद्वाहेतुमानवंत्रैमासिकम् अज्ञानतःपित्राद्यदत्तोद्वाहेयाज्ञवल्कीयंव्रतंचतुष्ट
यम् उपपातकशुद्धिःस्यादेवंचांद्रायणेनवा पयसावापिमासेनपराकेणाथवापुनरिति एवमितिगोवधप्रायश्चित्तातिदेशः अज्ञानतः
पित्रादिदत्तोद्वाहेतुयमः कृच्छ्रोद्वयोःपरिवेषःकन्यायाःकृच्छ्रएवतु अतिकृच्छ्रंचरेद्दातायष्टाचांद्रायणंचरेदिति प्रायश्चित्तंतुपरिवि-
दानःकृच्छ्रातिकृच्छ्रौचरित्वातस्मैदत्वापुनर्निविशेततांचैवोपयच्छेदिति परिविदानइतिपरिवेत्तुरेवसंज्ञा तस्मैज्येष्ठाय ब्रह्मचर्यात्तद्भै-
क्षवंनिवेद्यपुनरुद्वहेत्तामित्यंतदुक्तं तामेवेतिव्याचष्टेविज्ञानेश्वरः तथाग्रेदिधिषुवत्त्यादेरपिविशेषंवसिष्ठः अग्रेदिधिषुपतिःकृच्छ्रंद्वा
दशरात्रंचरित्वानिविशेततांचैवोपयच्छेतदिधिषुपतिःकृच्छ्रातिकृच्छ्रौचरित्वाज्येष्ठायामन्येनोढायांपश्चात्तामेवोद्वहेत् तस्मैकनीयस्याः
पूर्वतोज्येष्ठांदत्वाऽन्यामुद्वहेतेतिव्याख्यातंपारिजातादौ एवंनिर्णीतपरिवेदनदोषस्यापवादमाहयमः पितृव्यपुत्रान्सापत्नान्परस्त्रु

त्रांस्तथैवच दाराग्निहोत्रधर्मेषुनदोषःपरिवेदनेइति परपुत्रादत्तकादयइतिपारिजातः देशांतरस्थान्क्लीबांश्चतथाकुब्जषंढानपि
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः जडमूकांधबधिरकुब्जवामनखेलकान् अतिवृद्धानभार्यांश्चकृषिसक्तान्नृपस्यच धनवृ
द्धिप्रसक्तांश्चकामतःकारिणस्तथा कुहकान्मत्तचोरांश्चपरिविंदन्नदुष्यतीति खेलकोभग्नपादद्वयः अभार्यान्नैष्ठिकब्रह्मचारिणः
कामतःकारिणः विवाहादिच्छयानिवृत्ताइतिव्याख्यातंपारिजाते देशांतरगतज्येष्ठसोदरविषयेप्रतीक्षावधिमाहवसिष्ठः अ
ष्टौद्वादशवर्षाणिज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणःप्रायश्चित्तीभवतीति द्वादशेतिमुख्यःपक्षः द्वादशैवतुवर्षाणिश्रेयान्धमार्थ-
योगतः न्याय्यःप्रतीक्षितुंभ्रातान्श्रूयमाणःपुनःपुनरिति अत्राप्यपवादंकार्ष्णाजिनिः उन्मत्तःकिल्बिषीकुष्ठीपतितःक्लीबएव-
वा राजयक्ष्मामयावीचनन्याय्यःस्यात्प्रतीक्षितुमिति कन्याविषयेप्युक्तदोषापवादंगर्गः एकमातृप्रसूतानांकन्यानांपरिवेदनेदो
षःस्यात्सर्ववर्णेषुनदोषोभिन्नमातृष्विति वृद्धमनुः विवाहेनाधिकारेणज्येष्ठकन्योत्थितायदा तदनुज्ञांविनाचापिकनिष्ठासुद्वहे-
त्तदेति अन्यत्सर्वंपरिवेदनोक्तमनुसंधेयमितिपारिजातः इतिपरिवेत्तादिनिर्णयः अथमंडपादिनिर्माणंवसिष्ठः षोडशार
त्निकंकुर्याच्चतुर्द्वारोपशोभितम् मंडपंतोरणैर्युक्तंतत्रवेदिंप्रकल्पयेत् अष्टहस्तंतुरच्चयेन्मंडपंवाद्विषट्करमिति अन्यत्रतु मंगलेषुच
सर्वेषुमंडपोगृहमानतः कार्यःषोडशहस्तोवान्यूनहस्तोदशावधिः स्तंभैश्चतुर्भिरेवात्रवेदीमध्येप्रतिष्ठितेति पारिजातेनारदः हस्तो-

च्छ्रितांचतुर्हस्तैश्चतुरस्रांसमंततः स्तंभैश्चतुर्भिःश्लक्ष्णांवामभागेतुसद्मनि समांचैवचतुर्दिक्षुसोपानैरतिशोभिताम् प्रागुदक्प्र
वणारंभांस्तंभैर्हंसशुकादिभिः विचित्रेणांकितैःकुंभैर्विहितैस्तोरणांकुरैः भृंगारपुष्पनिकरैर्वर्णकैःसमलंकृताम् विप्राशीर्वचनैःपुण्यै
स्त्रिभिर्दीपैर्मनोरमाम् वादित्रगीतनृत्याद्यैर्हृदयानंदिनींशुभाम् एवंविधामारुरुक्षेन्मिथुनंसाग्निवेदिकामिति गह्मानतइतिमहतिगृ-
हेमहान्मंडपः न्यूनेन्यूनइत्यर्थः दशावधिरितिन्यूनतायांदशसंख्यावधिरित्यर्थः अतोवसिष्ठोक्तोष्टहस्तपक्षोऽत्यंतापद्विषयः साग्निवेदि
कामितिदंपत्योरारोहणात्पूर्वंहोमोपयोगिनामग्न्यादीनामुपकल्पनंकार्यमित्याशयः कृष्णभट्टीयेपक्षांतरं कन्याहस्तैःसप्तभिःपंचभि
र्वाकार्यावेदिःकूर्मपृष्ठोन्नतावा हर्म्येरम्येनिर्गमाद्वामभागेजायापत्योराशिषट्कंभयुक्ता विवाहर्क्षेशुभेदिनेवेदिःकार्यासमंडपेति त
त्रैवविशेषांतरम् नवत्रिषष्ठोनववारकःशुभोनवर्णकेनैवविवाहमंडपेइति नववारकोंऽकुरार्पणमितितत्रैवव्याख्यातम् वर्णकेनैवाऽनु
कल्पतयामंडपनिर्माणमपिनवमादिदिनेनकार्यम् मुख्यकल्पेनतन्निर्माणंतुतेषुदिनेषुसुतरांनकार्यमितितदाशयः विवाहार्थोमंडपोव
र्णकेनैवक्रियमाणोनशुभोऽन्यार्थस्तुवर्णकेनैवाक्रियमाणोपिशुभइत्यन्ये अथकन्यायाजन्मकालीनग्रहादिसूचितवैधव्यपरिहारो-
पायःकर्मविपाके ब्राह्मणंसाधुमामंत्र्यसंपूज्यविविधार्हणैः तस्मैदद्याद्विधानेनविष्णुमूर्तिंचतुर्भुजाम् शुद्धवर्णस्यवर्णेनवित्तशक्त्या
थवाकृताम् रुचिरांनिर्मितांशंखगदाचक्राब्जसंयुतां दधानांवाससीपीतेकुसुदोत्पलमालिनीं सदक्षिणांचतांदद्यान्मंत्रमेतमुदीरयेत्

यन्मयाप्राग्जनुषिभ्रंत्यापतिसमागमं विषोपविषशस्त्राद्यैर्हतोवातिविरक्तया प्राप्नुवंत्यामहाघोरंयशःसौख्यधनापहम् वैधव्या
द्यतिदुःखाद्येतन्नाशायसुखाप्तये बहुसौभाग्यलब्ध्यैच महाविष्णोरिमांतनुं सौवर्णीनिर्मितांशक्त्यातुभ्यंसंप्रददे द्विजेति अनघाद्या
हमस्मीतित्रिवारंप्रजपेत्ततः एवमस्त्वितितस्योक्तिंगृहीत्वास्वगृहंविशेदिति सुवर्णशब्दोत्रजातिवाची परिमाणंतुपलतदर्धान्द्धी-
न्यतररूपंदानपरिभाषोक्तंग्राह्यम् अथप्रयोगः स्नानाचमनेकृत्वा कन्यादेशकालौसंकीर्त्य वैधव्यहरंमहाविष्णुप्रतिमादानंकरि
ष्येइतिसंकल्प्य गणेशपूजनस्वस्तिवाचनेकृत्वा आचार्यवरणंकृत्वा यथाशक्तितंसंपूज्य तद्धस्तेनाग्न्युत्तारणपूर्वकंषोडशोपचारैःपू
जनंचकारयेत् वस्त्रार्पणसमयेपीतेवाससीदापनीये पुष्पापर्णकुसुदोत्पलमालापूजांतेदेवंकन्याप्रणाम्यमंत्रंपठित्वाब्राह्मणा
यदद्यात् ततःसुवर्णपरिमितंयथाशक्तिवाहेमदक्षिणांदत्वाअनघाद्याहमस्मीतित्रिर्वदेत् एवमस्त्वितिब्राह्मणोपित्रिः ततोयथा-
शक्तिब्राह्मणान्भोजयित्वाविवाहयोग्याभवेदिति इतिवैधव्यहरप्रतिमादानविधिः अथवावैधव्यपरिहारायकुंभविवाहःकार्यः
यथोक्तंतत्रैवविवाहात्पूर्वदिनेचंद्रताराबलान्वितेविवाहोक्तेयथालग्नेकन्यांकुंभेनसहचोद्वहेत् सूत्रेणवेष्टयेत्सम्यग्दशतंतुविधानतः
कुंभमालंकृतंदेहंतयोरेकांतमंदिरे ततःकुंभंचनिःसार्यप्रभज्यसलिलाशये ततोभिषेचनंकुर्यात्पंचपल्लववारिभिरिति आसमंताच्चंदन
पुष्पादिभिरलंकृतंकुंभंकन्यादेहंचवेष्टयेदित्यर्थः तदुभयसंबंधिनिमंदिरेइति विवाहकर्त्तापित्रादिःकन्यावैधव्यहरंकुंभविवाहंकरि

ष्ये इति संकल्प्य गणेशपूजनादिनांदीश्राद्धांतं कृत्वा वरुणविष्णुप्रतिमयोरग्न्युत्तारणं कृत्वा महीद्यौरित्यादिविधिना कुंभस्थापनं व
रुणपूजनं विधाय तत्रस्थापितविष्णुप्रतिमायां विष्णोरावाहनादिषोडशोपचारैः पूजां विधाय प्रार्थयेत् वरुणांगस्वरूपाय जीवनानां स
माश्रय पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु देहि विष्णो वरं देव कन्यां पालय दुःखतः इति ततो विष्णुरूपिणे कुंभायेमां कन्यां श्रीरूपि
णीं समर्पयामीति समर्प्य परित्वेत्यादिमंत्रैरधस्तादुपरिष्टाच्च मंत्रावृत्त्या कुंभं कन्यां च परिवेष्ट्य ततः कुंभं च निःसार्य सलिलाशये प्रभंजयि
त्वा पंचपल्लवैः शुद्धजलेन समुद्रज्येष्ठा इत्यादिमंत्रैः कन्यामभिषिच्य ब्राह्मणान् भोजयेत् इति कुंभविवाहप्रयोगः अथ वरस्य जन्म
कालीनग्रहसूचितमृतभार्यात्वपरिहारोपायः महार्णवे ज्येष्ठभ्रातर्यनूढे तु यो नुजो द्वहति स्वयम् संभवेन्मृतपत्नीक उष्णज्वरसमु-
द्भवात् प्राजापत्यत्रयं कुर्याद्दद्यादेवं त्रयमेव च तामग्निमिति वाज्येन चरुणाष्टोत्तरायुतम् जुहुयाद्भोजयेद्विप्रान्नेवं पापात्प्रमुच्यते असकृ
न्मृतभार्यात्वसूचने प्राजापत्यत्रयचांद्रायणत्रययोरावृत्तिः तामग्निमिति जातवेदस इत्यनुवाकी लक्ष्यते अस्यानुवाकस्य याज्ञिकीदेव
ता उपनिषद्दृषयः दुर्गाग्निविष्णवो यथायोग्यं देवताः त्रिष्टुप्छंदः अष्टोत्तरायुतहोमस्यार्धं चरुणार्धमाज्येन प्रथमं चरोः पश्चादाज्य
स्य क्रमो न विवक्षितः प्रत्यूचं च न होमः अग्निस्थापनादि स्वगृह्योक्तमार्गेणेति महार्णवः प्रायश्चित्तविधिना प्राजापत्यचांद्रायणानि-
कृत्वा मृतभार्यात्वपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं चर्वाज्यायुतहोमं करिष्ये इति संकल्प्य अग्निस्थापनाद्यन्वाधानांतं कुर्यात् चक्षुषी-

आज्येनेत्यंते दुर्गाग्निविष्णून् अष्टोत्तरायुतसंख्याभिश्चर्वाज्याहुतिभिः शेषेणास्विष्टकृतमित्यादि प्रतिदैवतं तूष्णींचरुः कृत्वोनिर्वा
पः प्रोक्षणंच त्यागकालेऽष्टोत्तरायुतसंख्याहुतिपर्याप्तंचर्वाज्यद्रव्यंयथामंत्रलिंगं दुर्गायै अग्नये विष्णवेच नममेतित्यागः स्विष्टकृदा
दिहोमशेषंसमाप्य दशब्राह्मणान्भोजयेदिति अयुतहोमप्रयोगः यद्वा कस्यचिद्ब्राह्मणस्यविवाहंकुर्यादित्यपिमहार्णवः अथताद
शग्रहसूचितमृतपुत्रत्वहरंम हार्णवे बालघातीचपुरुषो मृतवत्सः प्रजायते ब्राह्मणोद्वाहनंचैवकर्त्तव्यंतेनशुध्यति श्रवणंहरि-
वंशस्यकर्त्तव्यंचयथाविधि महारुद्रजपंचैव कारयेच्चयथाविधि जुहुयाच्चदशांशेन दूर्वामाज्यपरिप्लुताम् एकादशस्वर्णनिष्काःप्रदा-
तव्याश्चदक्षिणा एकादशपशूंश्चैव दद्याद्वित्तानुसारतः अन्येभ्योपियथाशक्ति द्विजेभ्योदक्षिणांदिशेत् स्नापयेद्दंपतीपश्चान्मंत्रैर्वरु
णदैवतैः आचार्यायप्रदेयानि वस्त्रालंकरणानिच ब्राह्मणोद्वाहनंहरिवंशश्रवणंरुद्रजपश्चेतित्रीण्यपिनिरपेक्ष्याणि शक्त्याद्यपेक्षया
व्यस्तानि समस्तानियोज्यानि पशुर्गौः वारुणमंत्राः कस्यनूनमित्यादयः पवमानःस्ववर्जनइत्यादयश्चग्राह्याइतिमहार्णवः अथह
रिवंशश्रवणविधिः तदुक्तएवोच्यते दंपत्योरनुकूलेसुदिने विनायकशांतिं विनायकपूजांवास्वशक्त्यनुसारेणविधायस्वस्तिवाचनंकु
र्यात् ततोदीर्घायुःपुत्रकामनयाहरिवंशश्रवणंकरिष्यावहेकरिष्येइतिवासंकल्प्य उभयोर्दंपत्योःकर्तृत्वे प्रथमःसंकल्पः एकस्यक
र्तृत्वेद्वितीयः ततोविभवानुसारेणश्रुताध्ययनसंपन्नंब्राह्मणंवस्त्रमुद्रिकाकुंडलतांबूलादिभिः संपूज्य एभिश्चंदनतांबूलादिभिः हरिवंश-

श्रवणेश्रावयितारंत्वामहंवृणेइतिवरणंकुर्यात् ततःप्रतिदिनंत्रायंतामित्यादिवैदिकमंत्रैःरूरास्त्वेत्यादिपौराणमंत्रैश्चसुस्नातावलंकृ-
तौदंपतीतदेकचित्तौशृणुयातां वाचयिताचप्रतिदिनंनारायणंनमस्कृत्येत्यादिपठित्वा नारायणायनमोनरायनरोत्तमायनमोदेव्यैसर
स्वत्यैनमोव्यासायनमोगुरुभ्योनमइत्युक्त्वावाचयेत्श्रोताप्रतिदिनमाचार्यंपुस्तकंचपूजयेत् अंतेस्वलंकृतांगांपयस्विनींसवत्सांस्वर्ण
शृंगींरौप्यखुरांताम्रपृष्ठींकांस्यदोहनवस्त्रयुतांगोदानविधिनावाचकायदत्वावाचकसंतोषावहपरिमाणंहेमदक्षिणांदत्वान्यूनंसंपूर्णम
स्त्वितिवाचयेत् गोदानविधिःकार्त्तिककृत्येऽभिहितः विनायकशांतिरुपनयनप्रकरणेऽभिहिता इतिमृतपुत्रत्वहरम् अथक
न्यादानप्रशंसा संवर्त्तः अलंकृत्यतुयःकन्यांभूषणाच्छादनादिभिः दत्वास्वर्गमवाप्नोतिपूज्यतेवासवादिभिः कूकुदश्चाश्व
मेधीचप्राणदाताभयेषुच समंयांतिरथाएषांत्रयोवैनात्रसंशयइति सालंकारकन्यादाताकूकुदः सत्कृत्यालंकृतांकन्यांयोददाति-
सकूकुदइत्यभिधानात् वन्हिपुराणे श्रुत्वाकन्याप्रदानंचपितरःसपितामहाः विमुक्ताःसर्वपापेभ्योब्रह्मलोकंव्रजंतितेइति
अथतद्विधिर्गृह्यपरिशिष्टे दातारमधिकृत्यवरंविधिवदभिषेचयेत् अथदक्षिणतःपुरोधाःउदङ्मुखउपविश्यमध्येप्राग
ग्रोदगग्रान्दर्भानास्तीर्यतैजसमयंपूर्णकलशंनिधायव्रीहियवानोप्य गंधादिभिरलंकृत्यदूर्वापल्लवैर्मुखमवस्तीर्याब्लिंगाभि
ऋग्भिरभिमंत्र्यताभिरद्भिःप्रयोजयेत् अथदातापुण्याहादीन्वाचयित्वाशिवाआपःसंतुसौमनस्यमस्तु अक्षतंचारिष्टंचास्तु

दीर्घमायुरस्तु शांतिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसंपदस्तु इति उक्त्वा भार्यादिसमेतः कन्यां संप्रगृह्य वत्सगोत्रो
द्भवाममुष्यप्रपौत्रीममुष्यपौत्रीममुष्यपुत्रीं सुशीलां लक्ष्मीनाम्नीं कन्यां वासिष्ठगोत्रोद्भवायामुष्यप्रपौत्रायामुष्यपौत्रायामुष्यपु-
त्रायश्रुतशीलनाम्नेऽस्मै वरायसंप्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन्वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिंचन् मन
सा प्रजापतिः प्रीयतामिति ब्रूयात् अथ वरः पुण्याहाशिषो वाचयित्वा दक्षिणांसे कन्यामभिमृश्य कइदं कस्मा अदात्कामः कामाया
दात्कामो दाता कामः प्रतिगृहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु इ-
ति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयादेवं त्रिः प्रत्युक्ते पुरोधाः दातृवरौ प्रत्यृतस्य हि सुरुधः-
संति पूर्वीरिति तिसृभो जपित्वैतद्वरः सत्यं समृद्धमिति ब्रूयादिति अथ वाग्दानप्रयोगः विवाहनक्षत्रमुहूर्ते सुदिने वरस्य पित्रादिसु-
हृद्भिः सह कन्यागृहं गत्वा आसने प्रत्यङ्मुख उपविशेत् ततो वृत्थः कश्चित्कन्यायाः पित्रादीन्प्रति ब्रूयात् अस्य पुत्रो वरोऽस्ति तदर्थं भ
वत्कन्यां याचितुं सुहृद्भिः सहायमागतः भवद्भिः स्वीयैः सह विचार्य कन्या पूजनार्थमनुज्ञेतेभ्यो देयेति ततः कन्यापिता मान्यजनाज्ञां गृ-
हीत्वाऽनुज्ञां दद्यात् ततः कन्यायाः पुरोहितादिर्देवीं वाच मित्यानयनपूर्वकं चतुरस्रपीठेषु शुद्धवस्त्राच्छादिते तां प्राङ्मुखीमुपवेशयेत् कन्या
याउत्तरतस्तत्स्त्रियादिरुपविशेत् वरपिता तु कन्यादक्षिणत उदङ्मुखः उपाविवाचम्य सुमुखश्चेत्यादि देशकाल संकीर्तनांते वरपि

ताकन्या पूजनमहंकरिष्ये तदंगत्वेनगणपतिपूजनंचकरिष्येइति संकल्प्य कन्यापिताकरिष्यमाणकन्यादानांगवाग्दानंकरिष्ये
इतिसंकल्पंकुर्यात् तदचिकीर्षायांगणपतिपूजनंवरुणपूजनंचकरिष्येइतिसंकल्प्य उभौगणेशवरुणयोःपूजनंकुरुतः ततोवर-
पित्रादिःकन्याया अंजलिंसकुंकुमचंदनेनानुलिप्यमान्येभ्योदर्शयेत् सर्वेमहालक्ष्मीरितिब्रूयुः ततोगौरीर्मिमायेतिकन्यांचंदनेना-
भ्यर्च्यस्वपक्षीयस्रुवासिन्यानीराजनंकारयेत् श्रियेजातइतिवस्त्रार्पणंचयुवंवस्त्राणीतिभूषणानिहिरण्यस्तूपइतिआयुष्यमितिच
ततःकन्यायैगुडादिनिवेदनंतस्याणौफलार्पणंचकुर्यात् याःफलिनीरितिअर्वाचीसुभगेभवेति ततःकन्यापितावरपितरंस्वस्थानमुप
वेशयस्वयंतत्स्थानेउदङ्मुखउपविशेत् ततोवरपितरंतन्मान्यैःसहगंधादिनापूजयेत् तथावरपिताकन्यापितरंतन्मान्यैःसहपूजयेत्
ततःकन्यापितात्थंकन्यायावाग्दानंकुर्यात् पंचफलानिकुंकुमाक्तान्यादाय एतत्प्रवरान्विते तद्गोत्रोत्पन्न एतच्छर्माऽहं एतत्प्रवरान्विते-
तद्गोत्रोत्पन्नायैतच्छर्मणःप्रपौत्रायैतच्छर्मणःपौत्रायैतच्छर्मणःपुत्रायैतच्छर्मणेश्रीधररूपिणेकन्यार्थिने एतत्प्रवरान्विते तद्गोत्रो-
त्पन्नामेतच्छर्मणःप्रपौत्रीमेतच्छर्मणःपौत्रीमेतच्छर्मणःममपुत्रीमेतन्नाम्नींकन्यांश्रीरूपिणींवरार्थिनींज्योतिर्विदादिष्टेमुहूर्तेदास्ये
तदस्तुमित्रावरुणाग्रृहाविप्रतिष्ठेतिवरपितुर्वस्त्रप्रांतेबध्वाग्रंथिंचंदनलिप्तंकुर्यात् पितामहकर्तृकेवाग्दानेममसपौत्रीमितिपाठः एवं
सकुल्यत्वेप्रपितामहकर्तृकेममप्रपौत्रीमिति एवंभ्रात्रादिकर्तृकेममेति नैवपाठः ततःअव्यंगेपतितेक्लीबेदशदोषविवर्जिते इमांक

न्यां प्रदास्यामि देवाग्निद्विजसन्निधाविति वाग्दानकर्त्रोक्ते वरस्य पित्रादिः पंचफलादि पूर्ववदादाय एतद्गोत्रात्पन्नं वरं विषये भवंतो निश्चिता

इति कन्यापित्रादेर्वरूप्रांते पूर्ववद्ब्रूयात् तदस्तु० गृहाणैवै० कन्यापित्रादिः वाचादत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया कन्यावलोकन-

विधौ निश्चितस्त्वं सुखी भवेति वदेत् वरपित्रादिः वाचादत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया वरावलोकनविधौ निश्चितस्त्वं सुखी भवे

ति वदेत् भ्रात्रादिं प्रति तस्य च यथार्थं भ्रात्रर्थं शिष्यार्थं मित्रार्थं वरार्थमित्यूहः ततः सर्वे ब्राह्मणाः हिंकृण्वती० समिद्धस्य० वनस्पते० इंदुर्दे

वाना० अस्यापि वक्षमतः० घृतादुल्लुप्तं० तदस्तु गृहाणैवै इति कन्याशिरस्यक्षतप्रक्षेपणाशीर्दानं कुर्युः ततः इंद्राणीं पूजयित्वा तत्प्रार्थनं कुमा-

र्या कार्यम् देवेंद्राणि नमस्तुभ्यं देवेंद्रप्रियभामिनि विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे इति वाग्दानम् ततः सुमुहूर्ते वधूवरयोः तैल-

हरिद्रारोपणं यथाचारं कार्यम् रजकी तैलमादाय कन्यकामभिषिंचति निशायाः प्रथमे भागे नागवल्लीदलेन त्विति ज्योतिर्निबंधोक्तमपि

यथाचारानुसारेण स्वीकार्यं वध्वा तदारोपणोत्तरं तच्छेषेण हरिद्रादिना वरस्य स्नानं कारणीयमित्याचारः अथ विवाहदिने तत्पूर्व

दिने वा स्वस्तिवाचनादि तत्र परिशिष्टे सुस्नातालंकृतो वरः स्वस्ति वाचयित्वेत्युपक्रम्य वधूगृहं प्रति वरस्य गमनमुक्तम् इदमेव शास्त्र

मवलंब्य पारिजाते ममदेवपितृऋणापाकरणहेतुभूतधर्मप्रजोत्पादनद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्याप्रतिग्रहणं कर्तुं तदंगभूतं स्वस्तिवा-

चनं करिष्य इति संकल्पपूर्वकं वरकर्तृकं स्वस्तिवाचनमुक्त्वा ततो विधिवत्पित्रा नांदीश्राद्धं कारयेदित्युक्तम् अन्ये तु वधूगृहगमनारंभे स्व

स्तिवाचनानंतरंपरिशिष्टेविधीयतेभगवतातथैवस्मरणात् विवाहंप्रकृत्यतेनत्युक्तं तत्राभ्युदयिकंश्राद्धंकुर्यात्स्वस्तिवाचयेत् अ-
परेद्युः कृतस्नानोधृतधौतांबरद्वयः भूषितांगंधमाल्याद्यैर्वंदिताभीष्टदेवतः ब्राह्मणान्भोजयित्वार्तैः कृतपुण्याहवाचनः यानार्हया
नमारुह्ययावद्धैववधूगृहमिति अतःप्रथमस्वस्तिवाचनंपित्रादिकर्तृकमेवेत्याह तदनुसारेणप्रयोगः संस्कार्यस्यपित्रादिःकन्या-
संस्कार्येणसहकृताभ्यंगस्नानोऽहतवासाः शुभासनेप्राङ्मुख उपविश्य स्वदक्षिणतःपत्नींतदग्रतःसंस्कार्यंचोपवेश्यदेशकालौसंकी
र्त्यममास्यपुत्रस्यदैवपितृऋणापाकरणहेतुभूतधर्मप्रजोत्पादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविवाहाख्यसंस्कारकर्मकरिष्ये तदंग
त्वेनस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंनंदिन्यादिमंडपदेवताप्रतिष्ठास्थापनंचकरिष्ये तदादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनं
करिष्ये इतिपुत्रविवाहेसंकल्पंकुर्यात् कन्याविवाहेतुममास्याःकन्यायाःभर्त्रासहधर्मप्रजोत्पादनद्रव्यपरिग्रहेषुअधिकारसिद्धि
द्वाराश्रीपरमेश्वरप्रीत्यर्थंविवाहाख्यसंस्कारकर्मकरिष्येइतिविशेषः शेषंपूर्ववत् भ्रातृपितृव्यादिस्तुममास्यभ्रातुरिति भगिन्याइ-
तिवाभ्रातुःसुतस्येतिवाभ्रातुःकन्यायाइतिवोहेनसंकल्पंकुर्यात् मातृकापूजनांते अजीवत्पितृमातृमातामहःपितास्वपित्राद्युद्देश्य
कंपार्वणत्रयंकुर्यात् मातर्यजीवत्यांतत्पार्वणलोपः मातामहएवजीवतितत्पार्वणलोपः तदापार्वणद्वयेनैवनांदीश्राद्धसिद्धिः मातृमा
तामहजीवनेपितृपार्वणेनैवतत्सिद्धिः अजीवत्प्रपितामहोजीवत्पितामहः पितृपितामहतत्पितृनुद्दिश्यपितृपार्वणंकुर्यात् पितुः

पितामहप्रपितामहौ चनांदीमुखा इदंवः पाद्यमितिप्रयोगः एवंप्रपितामहमातृजीवनेपि पितृपितामहतत्पितामहाननुद्दिश्यतत्कु-
र्यात् पितृपितामहौपितुः प्रपितामहश्चनांदीमुखाइति पितामहप्रपितामहयोरुभयोर्जीवनेपितुः पितामहस्यपितामहप्रपितामहौनो
दिश्यतत्कुर्यात् पितृपितामहस्यपितामहप्रपितामहौचनांदीमुखाइति एवमजीवन्मातृकस्यपितामहीमातृजीवनेमातृपितुः पिताम
हीप्रपितामह्यौचनांदीमुखाइतिमातृपार्वणेप्रयोगः प्रपितामहीमातृजीवनेमातृपितामह्यौपितुःप्रपितामही मातृजीवनेमातुः
पितुः पितामहीप्रपितामह्योर्जीवनेमातापितामहस्यपितामहीप्रपितामह्यौच नांदीमुखाइतिइदंवः० पितामहीप्रपितामहीसपत्न्योर्मृ
तयोः देवतात्वसंभवेताभ्यांसहैवपार्वणंकार्यम् एवंमातामहपार्वणेमुख्यमातामह्यादिषुजीवतीषुतत्सपत्नीभिः सपत्नीकत्वगुणोपप
त्तिः नतुसपत्नमात्रामातृपार्वणनिर्वाहः परिशिष्टविरोधात् एवमजीवन्मातामहस्यमातुःपितामहजीवनेमातामहतत्पितामहप्रपिता
महौचनांदीमुखाइति मातुःप्रपितामहजीवनेमातामहमातुःपितामहौमातामहस्यपितामहश्चनांदीमुखाइति तयोरुभयोर्जीवनेमाता
महपितामहप्रपितामहौचेतिप्रयोगः अथजीवत्पितृकः अजीवन्मातृमातामहश्च मातृमातामहपार्वणद्वयमेवकृतसंस्कारारंभेकुर्यात्
तस्यामपिजीवत्यांमातामहपार्वणमेवकुर्यात् मातामहएवजीवतिमातृपार्वणमेवदेवरहितंकुर्यात् त्रिष्वपिजीवत्सुपितुःपित्रादी-
नुद्दिश्यपार्वणत्रयंकुर्यान्नबाधकपरिशिष्टाप्रवृत्तौविष्णुस्मृतेर्निःशंकप्रवृत्तेः एवंस्वस्यद्वितीयादिविवाहांगत्वेनांदीश्राद्धंकुर्वन् अजी

वसितृकस्क पितुः पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् पितुः पितृपितामहप्रपितामहा नांदीमुखा इति॰ पितुः मातृपितामही प्रपितामह्यः
नांदीमुखाः पितुः मातामह मातुः पितामह मातुः प्रपितामहा इति च प्रयोगः जीवत्पितामहस्क पितामहस्य पित्रादीनुद्दिश्य कुर्यात् तदु
क्तवाक्येषु पितुरित्यस्य स्थाने पितामहस्य निर्देशः त्रयाणां जीवने तु पितृपार्वणलोपः कृतसंस्कार इति स्वीयमात्राद्युद्देश्य पार्वणद्वयेनै
व श्राद्धसिद्धिः नित्यवन्नांदीश्राद्धविधिर्नैवलोपः शास्त्रसहकृते तत्प्रापणात् एवं प्रथमविवाहेपि कन्त्रंतराभावे पारिजातोक्तरीत्यावर
एवं नांदीश्राद्धं कुर्वन् जीवत्पितृकः स्वपित्रादीनुद्दिश्य जीवत्पितृकादिस्क पितुः पितामहस्य वा पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् तत्र
जीवत्पितृकस्य नस्वस्येति संबंधकीर्तनं स्वसंबंधिकत्वमहिम्नैव पित्रादिषु विशेषसिद्धेः अदृष्टार्थतत्कीर्तनस्य नांदीश्राद्धे निषेधात्
अतएव परकीयपित्राद्युद्देश्यक नांदीश्राद्धविशेषलाभार्थस्य पितुरित्यादेः संबंधकीर्तनस्य निषेधः यदा तु पितृव्यमातुलादिः कन्याविवा
हे कुमारस्योपनयनमुपनीतस्य प्रथमविवाहं कुर्यात् तदा संस्कार्यस्याजीवत्पितृकत्वे तत्पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् सोदरज्येष्ठ-
भ्रातुः प्रयोगेन विशेषः तदीयपित्रादीनां संस्कार्यपित्रादिभिरभेदात् सापत्नज्येष्ठस्क मातृपार्वणसंस्कार्यस्य मातृपितामही प्रपिता
मह्य इति प्रयोगं कुर्यात् पितृव्यादिस्क सर्वपार्वणेषु संस्कार्यस्येति सविशेषेण प्रयोगं कुर्यात् संस्कार्यस्य जीवत्पितृकत्वे
संस्कार्यपितुः पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् तस्य जीवत्पितृकत्वे तदीयमात्रादीन् तदीयमातामहादींश्चोद्दिश्य पार्वणद्वयं कुर्यात्

मात्रादिजीवननिमित्तोविशेषः पूर्ववद्बोध्यः मुख्यस्ययथाप्राप्तकार्ये मुख्यकर्तृकाणांप्रवृत्त्यौचित्यात् एवंआत्मीकृत्यसवर्णेनपरकीयां
तुकन्यकाम् धर्मेणविधिनादातुः समगोत्रोपिपूज्यतेइतिस्कांदवचनात् अनाथांकन्यकांदत्वा सदृशेऽप्यधिकेवरे द्विगुणंफलमाप्नोतिक-
न्यादानेयदीरितमितिविष्णुधर्मोत्तरवचनात् यद्वा केनापिहेतुनाकन्यांदातुमशक्नुवतादानाधिकारिणात्वंकन्यादानंकुर्विति प्रार्थनाद्वा
यः परकीयकन्यांदातुमिच्छतिसोपिसंस्कार्यकन्यायाः पित्रादीनुद्दिश्यतस्याजीवत्पितृकत्वे तदीमात्राद्युद्देश्यकपार्वणानुष्ठानंयथासंभ-
वंकुर्यात् दत्तककन्यायास्तुविवाहंकुर्वन् प्रतिगृहीतास्वपित्रादीनुद्दिश्यैवपितृवन्नांदीश्राद्धंकुर्यात् दत्तकन्यायाअसंभवशंकाचनिरा
कृतादत्तकनिर्णये दत्तकपुत्रस्तुयदिलब्धबीजीरिक्थः तदोभौपितरौपितामहौप्रपितामहौचोद्दिश्यकुर्यात् एवंमातृपार्वणेमाताम
हपार्वणेचबोध्यम् यदितुबीजिरिक्थग्रहणेअधिकार्येतरसंभवाज्जोत्ररिक्थेजनयितुर्नभजेदंतिमः कृतइतिशास्त्रादलब्धतद्रिक्थ
स्तदाप्रतिगृहीतृकुलसंबन्द्धपित्राद्युद्देश्यकमेवकुर्यात् पिंडदोरिक्थहारीचपूर्वाभावेपरः परइतिपिंडदानरिक्थग्रहणसाहचर्यस्यौ
त्सर्गिकत्वात् एवंचानेकसंस्कार्यविषयानेकसंस्काराणांसहानुष्ठानंयत्रननिषिद्धंतदंगनांदीश्राद्धीयदेवतानामभेदश्चतत्र गणशः
क्रियमाणानामेकंस्यान्मातृपूजनम् वृद्धिश्राद्धंचतंत्रंस्याद्धोमस्तुस्यात्पृथक् पृथगितिस्मृत्यर्थसारवचनानुसारितंत्रानुष्ठानंबोद्धव्य
म् इतिनांदीश्राद्धदेवतानिर्णयः प्रदेयस्यान्नादेरपरोक्षत्वेइदमन्नमितिप्रयोगः परोक्षत्वेदास्यमानमिति अन्नासंभवेआममिति

तच्चचतुर्गुणं द्विगुणं समं वा आमासंभवे हिरण्यमिति वा हिरण्यासंभवे पर्याप्तान्ननिष्क्रयीभूतं द्रव्यमिति वा इति हविर्निर्णयः परकी-
यपित्राद्युद्देश्यके पितुर्माता पितामही चेति श्लोकपाठः लुप्तपार्वणसंबंधिश्लोकलोपश्च पूर्वोक्तोऽनुसंधेयः इति नांदीश्राद्धम् एवं वन्मंडपदे
वताप्रतिष्ठापनं ब्राह्मणस्ववासिनीभोजनसंकल्पं भूयसीदानसंकल्पं च कृत्वा विष्टरं दधिमधु पाद्यादि पात्राणि वरस्य वस्त्रयज्ञोपवीतालं-
कारान् वराय दक्षिणां भोजनपात्राणि जलपात्रं त्रिसूत्रीं क्षीरं मांगलिकजीरकादिद्रव्यं इध्मं बर्हिः आज्यलाजान् दृषदुपलौ उदकुंभं आम्रादि
पल्लवान् प्रणीतादिपात्राणि गौरीहरपूजोपयोगि प्रतिमादि कन्यापित्तोपकल्पयेत् विष्टरलक्षणं परिशिष्टे पंचाशता भवे द्ब्रह्मा तदर्द्धेन तु
विष्टरः ऊर्ध्वकेशो भवे द्ब्रह्मा लंबकेशस्तु विष्टरः दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टर इति केशा अग्राणि निर्माणकाले तदूर्ध्वत्वादि
पंचविंशति दर्भाणां वेण्यग्रे ग्रंथिभूषित इति अन्यत्र तत्पूजाविधिः संग्रहे लग्नाहे मातृकाः पूज्याः पूज्या गौरीहरान्विता पीठे वा तदलाभे
तु सहस्र तंडुलान्वितं पंकजं कारयित्वा तु तत्र गौरीहरौ यजेत् कलशैः कलशैः कार्यापिधानोत्तरश्रेणिका दिशां चतुर्षु कोणेषु स्थापये
त्तंडुलोपरि प्रतिमां पलहेम्ना तु कुर्याद्गौरीहरौ यतः यतः यस्यां प्रतिमायां उभौ मीलितावित्याशयः पलद्वयेन रौप्येण कुर्यान्नंदिनमग्रतः
अशक्तस्तु तदर्धेन पादेन शक्तितोथवा अलाभे कुंकुमाद्यैस्तु लेखयित्वा प्रपूजयेत् ध्यात्वा मंत्रेण देवौ द्वौ भक्त्या संपूजयेत् सुधीरिति
ध्यानमंत्रस्तत्रैव सिंहासनस्थां देवेशीं सर्वालंकारसंयुताम् पीतांबरधरं देवं रुद्रं चंद्रार्धशेखरं करेणाधः सुधापूर्णकलशं दक्षिणेन तु

वरदं चाभयं वामेनाश्लिष्य च तनुप्रियाम् एवं ध्यात्वा पूज्य गौरीं पुण्यभाजस्तथा स्त्रियः कन्यां समुद्वहेत्सम्यगादिति पूजामंत्रस्तत्रैव गौरी
हर महेशान सर्वमंगलदायक पूजां गृहाण देवेश सर्वदा मंगलं कुर्विति कन्यादेहप्रमाणेन सप्तविंशतितंतुभिः वर्तिकां दीपयेत्सम्यग्द्वतसं
पत्तिहेतवे भोजनीया ब्राह्मणाश्च स्त्रुवासिन्यः स्त्रु पूजिताः दशाष्टपंचयुग्मं वा हिरण्येनाथ तोषयेदिति तथा व्रतांते मंडपे स्थाप्य मंचकं सो
पधानकं चतुष्कोणेषु मंचस्य स्थाप्या भांडप्रभातत इति अतो लग्नदिने कन्यापित्रोक्त गौरीहरमूर्ति कात्यायनी महालक्ष्मी शची प्रतिमाभिः
सहाग्न्युत्तारणेन संस्कृत्य कोणचतुष्टयस्थापितकलशश्रेणीनां मध्ये उपलाद्युत्कृदृषदि सूत्रितायां पीठे वस्त्रे वा तंडुलैः पंकजं कारयित्वा तत्र
गौरीहरौ उक्तध्यानपूर्वकसुक्तमंत्रेण पूजयित्वा प्रतिमात्रये देवतात्रयं यथाविभवं संपूज्य कन्यया सह प्रणमय्य दीपं प्रज्वालयित्वा ब्राह्मण-
स्त्रुवासिनी [illegible]श्च भोजयेद्दक्षिणां च दद्यादिति अथ कन्यादाता वरगृहं गतः आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणकन्यावि-
वाहांगत्वेन वरस्य सीमांतपूजनं करिष्ये इति संकल्प्य गणेशवरुणपूजनं कृत्वा अस्मिन्त्राष्ट्रे श्रियमिति पत्नी प्रक्षिप्तजलेन तदीयदक्षिणवाम
पादौ प्रक्षाल्याचम्य गंधपुष्पनीराजनवस्त्रैर्यथाविभवं संपूज्य यथाचारं दुग्धादि प्राशनं कारयेत् ततो वरो देवताः पित्रादिमान्यांश्च प्रणम्य
स्वस्तिनो मिमीतामिति कनिक्रददिति च ब्राह्मणैः सह पठन् पदातिर्वा हनारूढो वा वधूगृहं गत्वा स्त्रुवासिनीभिर्यथाचारं पूर्णकुंभनीराजना-
दिना कृतमंगलः वधूगृहे प्रविशेत् ततो वरपिता गणेशवरुणौ संपूज्य कन्यां पूजयेत् याः फलिनीरिति मंत्राभ्यां फलैस्तांबूलैश्च यथाचारं

पूजयेत् ब्राह्मणाः हिंकृणवतीत्यादिमंत्रैः पूर्ववदाशिषोदद्युः पूर्ववाग्दानमकृतंचेत्फलपूजानंतरंकर्त्तव्यम् अथमधुपर्कः परिशिष्टे
वरस्ययाश्चवेच्छाखवानछाखागृह्यचोदितः मधुपर्कःप्रदातव्य अन्यशाखेपिदात रीति दध्यलाभेपयोजलंवा पयोवामधुसंसृष्टमभावे
उदकमितिधर्मप्रश्नात्स्मतिनिधिःसर्पिर्मध्वलाभेतदलाभेगुडोवा कन्यादातादेशकाल संकीर्त्तनांतेगृहागतंस्नातकंवरंमधुपर्केणार्हयिष्ये
इतिसंकल्पयेत् द्वितीयविवाहार्थमागमनेतुस्नातकमितिपदलोपः दाताविष्टरो ३ प्रतिगृह्यतामितिविष्टरंदद्यात् वरःप्रतिगृण्हामी-
तिदक्षिणहस्तेनप्रगृह्य अहंवर्ष्मेत्यस्यवामदेवोविष्टरोनुष्टुप् आसनकरणेविनियोगः अहंवर्ष्मसजातानांविद्युतामिवसूर्यः इदंतम-
धितिष्ठामियोमाकश्चाभिदासति ततोवरोलौकिकजलेनाचामेत् स्वगृहागतस्यप्रथमंचरणप्रक्षालनंकुर्वन् दातापिगंधाक्षतपुष्पयु
क्तंपाद्यपात्रेजलमादायपाद्यं३ प्रतिगृह्यतामितिदातापाद्यंदद्यात् पादयोर्वरःप्रतिगृण्हामीति अस्मिन्राष्ट्रइतिदातापत्नीप्रक्षिप्तजले
नदक्षिणपादप्रक्षालनपूर्वंप्रतिगृहीतुःपादौप्रक्षालयेत् अर्घ्यपात्रेगंधाक्षतपुष्पफलयुतंजलंदात्राअर्घ्यमर्घ्यमर्घ्यंप्रतिगृह्यतामिति
निवेदितमंजलिनावरोगृण्हीयात् प्रतिगृण्हामीतिपात्रांतरस्थंशुद्धजलंदात्राचमनीयं३प्रतिगृह्यतामितिदत्तंदक्षिणहस्तेनप्रतिगृ
ह्यवामेतत्पात्रंनिधायतज्जलंतृतीयांशंवरोऽमृतोपस्तरणमसीतिपिबेत् अथमधुपर्कमानीयमानमपसारितापिधानंवरोअवेक्षेत
मित्रस्यत्वाचक्षुषाप्रतीक्षेइति दातामधुपर्को३ प्रतिगृह्यतां वरोदेवस्यत्वा॰ ण्यांप्रतिगृण्हामीत्यंजलिनाप्रतिगृह्यतत्स्थमेव तृचे

नावेक्षेत मधुवाताइतित्त्यचस्यराहूगणोगौतमोविश्वदेवागायत्री मधुपर्कावेक्षणेविनियोगः ॐ मधुवाता०३ माध्वीर्गावोभव-
तुनइतिसव्यहस्तस्थापितेमधुपर्कपात्रेंऽगुष्ठोपकनिष्ठिकाभ्यांमधुपर्कंप्रदक्षिणंत्रिरालोड्य वसवस्त्वागायत्रेणच्छंदसाभक्षयंत्वि
तिपुरस्तान्निमार्ष्टि रुद्रास्त्वात्रैष्टुभेनेतिदक्षिणस्यां आदित्यास्त्वाजागतेनेतिप्रतीच्यां विश्वेत्वादेवाआनुष्टुभेनेत्युदीच्यां आलोडनं
संजातांगुलिलेपस्यैवदिक्चतुष्टयेप्यपनयनंनतुपुनर्ग्रहणं ताभ्यामेवमध्यात्त्रिर्गृहीत्वाभूतेभ्यस्त्वेतित्रिरावृत्तेनत्रिरूर्ध्वंक्षिपेत भूमौपा
त्रनिधानं निमृज्यांजलिलेपंतुभूतेभ्यस्त्वेतिमंत्रतः त्रिरुद्धृत्यत्रिरुत्क्षिप्यभूमौपात्रंनिधायचेतिकारिकोक्तेः यद्वासकृद्गृहीतस्यैवत्रिः
समंत्रकउत्क्षेपः ततोमध्याच्चकिंचन आदायभूतेभ्यस्त्वेतिमंत्रमुक्त्वात्रिरुत्क्षिपेदितिमंत्रस्योत्क्षेपणस्यापित्रिरभ्यासंसमाचरेदि-
तिभगवत्स्मृतेः वृत्तिस्वरसादपीदृशार्थप्रतीतेः ततोविराजोदोहोसीतिमधुपर्कैकदेशंप्रथमंप्राश्नीयात् विराजोदोहमशीयेति-
द्वितीयं मयिदोहःपद्यायैविराजःइतितृतीयं स्वयंगृहीतस्यपरेणवाहस्तेप्रक्षिप्तस्यप्राशनत्रयमेतत् यद्वामधुपर्कोपरिभागात्
पात्रत्रयेभूतेभ्यस्त्वेतिमंत्रावृत्त्यात्रिरादाययथाक्रमंमंत्रत्रयेणप्राश्नीयात् अयंप्रकारोग्रंथकारैरनादृतोपि सूत्रस्वरसिद्धोन्यायसिद्ध-
श्च निमार्ष्टीत्यनुषंगाभावात् उद्धृत्येत्यत्रगृण्हातेःक्षेपणार्थत्वकल्पनाभावाच्च प्रथमद्वितीयादिपदानांसार्थकत्वलाभाच्च दृष्टरूपस्यो
पयोक्ष्यमाणसंस्कारस्यलाभाच्च मधुपर्कशेषमुत्तरतउपविष्टायब्राह्मणायदद्यात् अप्सुवाक्षिपेत् तृतीयप्राशनकालेसर्वंप्रा

श्रीयात् अथान्नममीयशोधान्दं ममृतापिधानमसीति प्राश्य लौकिकजलेनाचामेत् सर्वास्तद पः सत्यंयशः श्रीर्मयिश्रीश्रयतामितिप्रा
श्य लौकिकजलेनद्विराचामेत् दातागौर्गौर्गौः प्रतिगृह्यतामितिगां निष्क्रयंवाददद्यात् वरः मातारुद्राणामित्यस्य भार्गवो जमदग्निर्गौस्त्रिष्टु
प् उत्सर्जनेविनियोगः ॐ मातारुद्राणां० वधिष्ट ओ मुत्सृजतेत्युत्सृजेत् अत्रजयंतः गोःप्रतिनिधित्वेन छाग आलभ्यते उत्सर्जनप
क्षेपिच्छागएवनिवेदनीयइति अन्नापिमते छागस्य प्रतिनिधित्वान्निष्क्रय एवनीवारेषु व्रीहिशब्द इव गौर्गौरिति मातारुद्राणामिति वाविकृतं
भवतिगविमनसि धृतायां द्वात्रिंशत्पणात्मक निष्क्रयवच्च छागेमनसि धृते पणाष्टकात्मको निष्क्रयो देयः ततः कर्तव्यमाह भगवान् दाता
थगंधमाल्याद्यैर्विधितोभ्यर्च्य येद्वरम् पश्चात्तेन सहायातांस्तद्वंधूनपिपूजयेदिति वृद्धा आहुः गंधमाल्यवस्त्रयुगोपवीतयुगाभरणा
दिभिः यथाविभवं पूजयेदिति विधितइति पदात् आदिभिरिति बहुवचनाच्च भोजनात्पूर्वं धूपदीपौ तदुत्तरतांबूलदक्षिणे अपिदातुमुचि
ते नामांसोमधुपर्को भवतिइति सूत्रादुत्सर्जनपक्षे अन्येन मांसेन भोजनदानमिति वृत्तिकृज्जयंतादिभिरभिधानाच्च मांसप्रतिनिधित्वे
नमाषविकारो भोजनेदेयः विनायकशांत्यादौ मांसप्रतिनिधित्वेन तस्यैवमहार्णवादिभिरभिधानाच्च इत्याश्वलायनोक्तो मधुपर्कः
अथापस्तंबोक्तः दाताकूर्चंददाति वरः राष्ट्रभृदस्याचार्यासंदीमात्वयोषंतस्मिन्नुपविशति आपः पाद्याइत्युदकं प्रयच्छति आपः-
पादावनेजनीर्द्विषतंनाशयंतुमे अस्मिन्कुले ब्रह्मवर्चस्यसानिइति पाद्यमवेक्षते यजमानस्तेनोदकेन वरस्य पादौ प्रक्षालयति ब्राह्मणो-

दक्षिणंपूर्वंवरः प्रक्षालयितारमुपस्पृश्य मयिमहोमयियशोमयींद्रियंवीर्यम् आत्मानंप्रत्यभिमृश्य अपउपस्पृश्य पुष्पगंधादियुक्तमर्घ्यं
मृन्मयेनिधाय कूर्चाभ्यांपरिगृह्य अर्हणीयाआपइतिप्रयच्छति आमागन्यशसावर्चसासंसृजयशसातेजसाच तंमाप्रियंप्रजानांकुर्व-
धिपतिंपशूनां अभिमंत्र्यविराजोदोहोसि विराजोदोहमशीय मयिदोहःपद्यायैविराजः अंजलावेकदेशआनीयमानेजपति समुद्रंवः
प्रहिणोम्यक्षितास्वांयानिमपिगच्छत अच्छिद्रःप्रजयाभूयासंमापरासेतिमत्पयः शेषंपुरस्तान्निनीयमानं केचिदस्मिन्कालेभोज-
नांतेवापूज्यायलंकरणादिदातव्यम् अन्यथायंपूजितएवनस्यादितिस्कदर्शनः दधिमधुसंसृष्टंकांस्येनवर्षीयसापिधाय कूर्चाभ्यांपरि
गृह्यमधुपर्कइत्याहवरोमधुपर्कंपरिगृह्यपिधानमपनीयत्रय्यैविद्यायैयशोसियशसोयशोसि ब्रह्मणोदीप्तिरसि तंमाप्रियंप्रजानांकु
र्वधिपतिंपशूनां आमागन्नितिचद्वाभ्यामभिमंत्रयते दाताआचमनीयाआपःआवेदयति वरस्तदेकदेशंपिबति अमृतोपस्तरणमसि
ततःआपआचम्येत्यंस्कदर्शनः यन्मधुनोमध व्यंपरममन्नाद्यंवीर्यंतेनाहंमधुनोमधव्येनपरमेणान्नाद्येनवीर्येण परमोन्नादोमध
व्योसानि इतित्रिःप्राश्य सकृन्मंत्रेणद्विस्तूष्णींप्राश्यहस्तौप्रक्षाल्यामृतापिधानमसि पूर्वशेषंपिबतिपुनराचमतिशेषमनुकंपयाब्र
ह्मचारिणेप्रयच्छति अस्मिन्कालेवस्त्रालंकरणादिभिरलंकृत्यगौरित्युक्तेवरयज्ञोवर्द्धतांयज्ञस्याहृत्थिमनुवर्द्धायचितिरस्यपचि
तिंमाकुर्वपचितोऽहंमनुष्येषुभूयासंगौर्धेनुर्भव्या मातारुद्राणांदुहितावसूनांस्वसा॰ प्रनुवोचं॰ वधिष्ट पिबतूदकंतृणान्यत्तुउपां

श्रुत्वा ओंमुत्सृजत उच्चैरियं गौरुत्सर्गपक्षेपि भोक्तुरेवेति सुदर्शनः सिद्धमन्नं भूतमेवेत्युक्ते भूतं सा विराट् तन्म अक्षायितस्य ते
शीय तन्मऊर्जं धाः उपांशु श्रुत्वा ओंकल्पयत उच्चैर्ब्रूयात् एवं वरस्य मधुपर्कं कृत्वा तत्पित्रादेर्मधुपर्कं कुर्यात् आपस्तंबशाखिनां गो-
गृहेषु गौस्तया वरमतिथिवदर्हये द्योस्यापचितस्तमितरथेत्यापस्तंबीयगृह्यसूत्रात् विवाहस्थाने गौः संनिधाय गृहशालायामन्या पूर्व
योत्सर्गद्वारेणांगभूतया युक्तेन मधुपर्केण वरमभिपूजयेत् योस्य वरस्य पित्रादिः संबंधी लोके चापचितो विद्यादिना यद्वा वरस्या-
पचितः पूज्यः तमितरयोः पूर्ववदंगभूतया युक्तेन मधुपर्केण पूजयेत् एतन्मधुपर्कद्वयमपि विवाहांगमित्युदाहृतं सूत्रव्याख्यावसरे
सुदर्शनोक्तेश्च यत्र क्व चाग्निमिति विधिनाग्निं प्रतिष्ठाप्य कन्याशालां गत्वा वरो यथार्हं यथाविधि मधुपर्कं गृह्णाति एवं वरापचितोपी
ति प्रदेशांतरे तदुक्तेश्च यथार्हमिति एतौ सांगशाखाध्यायिनौ चेद्दक्षिणार्थाधिकगवा सहैताभ्यां मधुपर्को देयः अन्यथा केवल इति
गोमधुपर्को वेदाध्याय इति धर्मप्रश्नव्याख्यावसरे गां च दक्षिणामिति उज्ज्वलोक्तेः दक्षिणार्थगोराधिक्यं प्रकृत्य वरायाचितस्नातकम-
धुपर्केषु उक्तव्यवस्थायाः सुदर्शनेनाप्युक्तेश्च आश्वलायनशाखिनां गंधादिना तत्पित्रादेः पूजनं कार्यं अनंतरोदाहृतभगवद्वचनात्
अथ कन्यादानम् मदनरत्ने ऋष्यशृंगः वरगोत्रं समुच्चार्य प्रपितामहपूर्वकं नामसंकीर्त्तयेद्विद्वान्कन्यायाश्चैवमेव हि तिष्ठेत्पूर्वमुखो
दाता वरः प्रत्यङ्मुखो भवेत् मधुपर्कार्हणे कन्यां तस्मै दद्यात्सदक्षिणा मिति तत्रैव वृद्धवसिष्ठः नामगोत्रे समुच्चार्य संप्रदानस्य चात्म

नः संप्रदेयं प्रयच्छंतिकन्यादानेतुपुंस्त्रयमिति पुंस्त्रयकीर्त्तनंच प्रपितामहपूर्वकम् नांदीमुखेविवाहेच प्रपितामहपूर्वकं नामसंकीर्त्त-
येदितिवचनात् अत्रनांदीमुखेतत्पूर्वकत्वविधिर्यच्छाखायांतद्विधिस्तद्विषयइतितत्रैवदानपरिभाषायांतत्रैवषड्त्रिंशन्मते नामगोत्रे
समुच्चार्यप्राङ्मुखोदेयकीर्तनात् उदङ्मुखायविप्रायदत्वातत्स्वस्तिवाचयेदिति देयस्यसदेवताकस्यकीर्तनानंतरंदत्वेत्यन्वयः अयंदि
ङ्नियमोनकन्यादाने प्रागप्रत्यगास्यतउद्वाहेदातृग्राहकयोःस्थितिरितिवचनादित्यपितत्रैवोक्तम् प्रतिग्रहेविशेषस्तत्रैवोक्तोविष्णुध
र्मोत्तरे प्रतिग्रहीतासावित्रंसर्वत्रैवानुकीर्तयेत् ततस्तुकीर्त्तयेत्सार्द्धंद्रव्येणद्रव्यदेवताम् समापयेत्ततःपश्चात्कामस्तुत्याप्रतिग्रहम् त
दंतेकीर्तयेत्स्वस्तिप्रतिग्रहविधिस्त्वयमिति सावित्रंयजुःदेवस्यत्वेति यजुःशाखिविषयस्तद्विधिः कन्यायादेवताविशेषःविष्णुध
र्मोत्तरे कन्यादासस्तथादासीप्राजापत्याप्रकीर्तितेति कन्यादानेतुनपठेद्द्रव्याणांतुपृथक्पृथक् प्रतिग्रहंद्विजश्रेष्ठतत्रैवांतर्भवंतिते
इति सुवर्णादिद्रव्याणांद्विजस्यचसंबंधघटितंप्रतिग्रहमंत्रैःपृथक्नपठेदित्यर्थः अथतत्प्रयोगः तत्रहेमाद्रिरित्थंदानवाक्यमुदा
जहार ॐ अद्यामुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रायामुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणःपौत्रायामुकसगोत्रस्या
मुकप्रवरस्यामुकशर्मणःपुत्रायामुकसगोत्रस्यामुकप्रवरायामुकशर्मणेवराय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणःप्रपौत्रीं
अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणःपौत्रीं अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणःपुत्रीं अमुकसगोत्राममुकप्रवराममुका

भिधामिमां कन्यां सालंकारां प्रजापतिदैवतां अमुककामस्तुभ्यमहं संप्रददे इति संमतं चेदृशं दानवाक्यं मदनरत्नकृतोपि वरप्रपितामह-
नामकीर्तनावसरे गोत्रोच्चारणं प्रदर्शयता अनेन तथैव रीत्या पितामहादिनामोच्चारणावसरे तदुच्चारणकर्त्तव्यतासूचनात् किमत्र मूल-
मिति चेत् उभाभ्यामुदाहृतमृष्यशृंगवाक्यं वरगोत्रं समुच्चार्य प्रपितामहपूर्वकं नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेवहीति नचात्र वर
विशेषणत्वेनैव गोत्रोच्चारणं विहितं न प्रपितामहादिविशेषणत्वेनेति शंक्यं दानसामान्यविषयेण हन्द्ववसिष्ठवचनेनैव कन्यादानेपित-
त्प्राप्तेः अतः प्रपितामहपूर्वकनामोच्चारणे प्रत्येकं वरगोत्रोच्चारणांगत्वेन विधीयत इति निबंधकृतोरभिप्रेतम् तथान्योपि विशेषो मद
नरत्न एवोक्तः प्रजापतिदैवतामित्यंते अक्षय्यब्रह्मलोककामस्तुभ्यमहं प्रतिपादयामीति वरहस्ते कुशाक्षतजलानि कन्याकरेण सहद
त्वा कन्यां कनकसंपन्नामिति मंत्रं पठेदिति ततो दक्षिणादानमुक्तं हेमाद्रिरुक्तदक्षिणादानोत्तरं गौरीं कन्यामिति दानमंत्रोच्चारणमाह त
त्र मूलमुदाहृतमृष्यशृंगवाक्यशेषः मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् उपपात्रं ततो गृह्यमंत्रेणानेन दापयेत् अथ गृह्यपरि
शिष्टानुसारी पारिजातोक्तदानप्रकार उच्यते दानदेशे पुरोधा वधूवरयोर्दक्षिणत उदङ्मुख उपविश्य वधूवरयोर्मध्यदेशे प्रागग्रोद
गग्रान्दर्भानास्तीर्य तेषु तेजसं पूर्णकलशं निधाय व्रीहियवानोप्य गंधादिभिरलंकृत्य दूर्वापल्लवैर्मुखमवच्छाद्याब्लिंगाभिरापोहिष्ठे
त्यादिभिर्ऋग्भिरभिमंत्रयेत् अथ दाता पुण्याहं भवंतो ब्रुवंत्वित्येवं पुण्याहं स्वस्त्यृद्धिवाक्यत्रयं ब्राह्मणद्वारा वाचयित्वाशिवा आपः

संत्विस्त्याशिषः प्रयुज्य भार्यासमेतः पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावा
प्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्यादानं करिष्ये इति संकल्प्य वरं कन्यां च यथाशक्त्यलंकृत्य वरहस्ते हिरण्यं निधाय पूर्वार्चितकलशोदक
मादाय कन्यां हस्ताभ्यां संप्रगृह्य कन्यां कनकसंपन्नामिति मंत्रौ पठित्वा वत्सगोत्रोद्भवाममुष्यप्रपौत्रीममुष्यपौत्रीममुष्यपुत्रीं मम कन्यां
रूपशीलानाम्नीं श्रीरूपां प्रजापतिदैवतां वासिष्ठगोत्रोद्भवायामुष्यप्रपौत्रायामुष्यपौत्रायामुष्यपुत्राय रूपशीलनाम्ने श्रीधररूपिणे व
राय तुभ्यं मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्तिद्वारा श्रीपरमेश्वरप्रीतिकामः प्रजासृजत्वकर्मभ्यः संप्रददे प्रतिगृण्हा
तु भवानिति ब्रुवन्वरस्य पाणावुदकं निषिच्य प्रजापतिः प्रीयतामिति मनसा स्मरन् ओंस्वस्तीत्युक्त्वा गौरीं कन्यामिति मंत्रद्वयेन प्रार्थये
त् अथ वरः पुण्याहमित्यादि दातृवदुक्त्वा कन्यादक्षिणां समभिमृश्य क इदमिति मंत्रं पठेत् प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं क
न्यां प्रतिगृण्हामीति ब्रूयादिति कारिकायां कन्यादानस्येत्थं विधिरुक्तः वरेणैव वृतां कन्यां तत्पिता प्रददाति तां पुत्रायास्य प्रपौत्राय ना
म्नेस्यामुकगोत्रिणे अस्या अमुकगोत्रीया पुत्री पौत्र्यस्य नप्त्रिका श्रीरूपेयं मया दत्ता तुभ्यं श्रीधररूपिणं इत्युक्त्वोदकपूर्वां तां दद्यात्
स्वस्तिपदं पठन् वरोथ प्रतिगृण्हीयात्स्प्रशोत्क इति मंत्रत इति शौनकीयेपि उपलिप्य तथोल्लिख्य स्थंडिलेग्निं निधाय च पश्चाद-
ग्नेः प्रतिष्ठाप्य पेषणी भस्मनिर्मिता प्रागुत्तरेग्नेः संस्थाप्य पूर्णकुंभमथो वरः उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतो जलात् तदानीमा

त्मनोदत्तं नूतनं वसनद्वयं वसित्वाचात्तसलिलाभूषितांकुसुमादिभिः प्रत्यङ्मुखः प्राङ्मुखीति स्थितामात्मसमीपतः कन्यकामभि
गृण्हातिदत्तांपित्रादिभिर्वरः कन्यादानप्रकारश्चपूर्वाचरितउच्यते तद्यथागार्ग्यगोत्राय परमेश्वरशर्मणे आत्रेयगोत्रप्रभवां पार्वतीं
प्रददाम्यहम् कन्यांस्नातकर्मण्यः करोति प्रतिपादनं ततोमंगलसूत्रंचध्यायन्निष्टांचदेवतां बध्वाकंठप्रदेशेस्याभूषणानिचशक्तितः
कन्यकांप्रतिगृह्यैव वरः पूर्ववदासने तत्रैवोपविशेत्सभ्याततांवधूंमातुलादिकः स्वजनःपरिगृह्याग्नेरुत्तरेणावरस्यतु पश्चिमेनयथानीत्वा
तस्मिन्नेववरासने वरस्यदक्षिणेपार्श्वे प्राङ्मुखीमुपवेशयेत् समाधायपुरस्तंत्र मन्वाधानादिकंक्रमात् अत्राग्निप्रतिष्ठापनोत्तरमन-
न्वाधानात्पूर्वं कन्यादानमितिप्रतीयते जयंतस्त्वाह आज्यसंस्कारांतंकृत्वापरिहितधौताभिनववासोयुगुलमाचांतामलंकृतामभितःस्व
स्त्ययनांकुमारीमग्निसमीपमानयति ततोवरोभ्युत्थायप्राङ्मुखः स्थित्वोदकपूर्वांकन्यांप्रतिगृह्यतस्मिन्नेवासनेउपविशति तांचाग्नेरुत्त
रतएवनीत्वावरस्यबहिःप्रतिपाद्यतस्मिन्नेवासनेदक्षिणतउपविशति केचिदस्यांतरंगत्वंवर्णयंति अथवापूर्वोवोदकपूर्वांकन्यांप्रति
गृह्यतामात्मनःसमीपेकृत्वादक्षिणतउपवेश्योपलेपनादिप्रक्रमतइति केचिदित्यनेनसंस्कार्यत्वेनभार्यायाअंतरगत्वाद्राज्ञ्योर्मध्य
मार्गेणसीमंतइवनयनपक्षःसूच्यते अत्रग्रंथानांविरोधेकिमुचितमित्यपेक्षायांपारिजातेउक्तं कारिकागृह्यपरिशिष्टविरोधेपरिशि
ष्टोक्तमेवानुसंधेयं आचार्येणोक्तत्वात् तथैवलौकिकंवाक्यंस्मृतिबाधेपरित्यजेदितिवचनाच्चेति गृह्यपरिशिष्टकारशौनकयोर्विरो-

धेपरिशिष्टोक्तमेवानुसंधेयम् आचार्येणोक्तवचनत्वादितिच एवंच हेमाद्र्यादिनिबंधोदाहृतस्मृतिविरोधे गृह्यपरिशिष्टोक्तमेवोत्क
तरामुचितमाश्वलायनशाखिनां बह्वृचत्वं वा स्वगृह्योक्तमितिशास्त्रात् स्मृतीनां शाखांतरविषयत्वसंभवाच्च आश्वलायनशाखिकुले
षु सर्वशिष्टैः प्रपितामहादिपुरुषेषु प्रत्येकं गोत्रादिसंकीर्तनस्यानादृतत्वाच्च तान्विवाहे प्रतीयादिति गृह्याविरुद्धकुलधर्माणामपि संग्र
हार्यमिति वृत्तिकृतोक्तत्वात् तदनुसारिकुलधर्माणां सुतरां संग्राह्यत्वात् एवंच हेमाद्र्यादिषूदाहृतं प्रतिपुरुषं गोत्रादिकीर्तनं बह्वृचा-
न्यशाखिविषयं अतएव हरिहरेण हेमाद्र्यनुसारेण प्रतिपुरुषगोत्रादिसंकीर्तनमुक्तमेव दानप्रयोगमुक्त्वा द्यौस्त्वा ददातु पृथिवी प्रतिगृ
ह्णात्विति वरः प्रतिगृह्य क इदमिति कामस्तुतिं पठेदित्युक्त्वा सुवर्णं गोमिथुनं दक्षिणां गां च दद्यादित्युक्तं प्रत्यङ्मुखेन वरेण प्राङ्मुख्याः क
न्यायाः स्वीकारश्च शौनकोक्त आश्वलायनशाखिभिन्नबह्वृचविषयः कारिकायास्तु पुरुषेयत्तायामेवंतात्पर्यं न पित्रादिक्रमे बहुग्रंथवि
रोधात् एवं सत्यपि सकलग्रंथानामनादृत्याचारानुसरणमेवेच्छतां परितोषाय यथाचारमपि प्रयोगो लिख्यते हस्तांतरालं विहाय प्रत्येकं-
प्रस्थपरिमिततंडुलराशी पूर्वापरौ विधाय पूर्वस्मिन्प्रत्यङ्मुखं वरं अपरस्मिन्प्राङ्मुखीं कन्यामवस्थाप्य तयोर्मध्ये कुंकुमादिकृतस्वस्तिकांकि
तमंतःपटमुदग्दशं धारयेयुः कन्यावरयोः पित्रादिर्ज्योतिर्विदो वस्त्रादिना पूजां विधाय तद्दत्तान्सयुगफलान्कुंकुमाक्षतान्कन्यावरयोर
जलौ दद्यात् तावुभौ यथाचारं तद्धारणं कुर्वंतौ स्वस्तिकालोकनसमाहितचक्षुर्मनस्कौ स्वस्वेष्टदेवतामनुध्यायेन्नम इत्येवं ध्यायंतौ तिष्ठतः

ज्योतिर्विदा मंगलपद्यपाठांते तदेवलग्नमिति पठित्वा स्वमुहूर्तमस्त्वऔंप्रतिष्ठेत्युक्ते ततः पटमुत्तरतोऽपसारयेयुः ततः कन्यावरौ परस्परंशि
रसोरक्षतप्रक्षेपं परस्परेक्षणंचकुर्यातां वरः अभ्रातृघ्नींवरुणापतिघ्नींबृहस्पते इंद्रापुत्रघ्नींलक्ष्म्यंतामस्यैसवितुः सवेतिजपन्नीक्षेत त
यावीक्ष्यमाणः अघोरचक्षुरितिमंत्रंजपेत् वरः अथतस्याभ्रुवोर्मध्येदर्भाग्रेण ॐ भूर्भुवः स्वरितिपरिमृज्यदर्भंनिरस्यापउपस्पृशेत्
अथवैदिकैः पठ्यमान ब्राह्मणारवंडवाक्यांते कन्यापूर्वकंताभ्यामक्षतारोपणंकार्यं तत्रऋग्न्वाइतिखंडद्वयं २ उत्तमाप्रतिष्ठा॰ यच्चावा
चो॰१ ततोनुदेतां॰१ महीद्यौः॰४ धारयन्धारयन्॰५ दक्षिणाअनु॰६ हिरण्यकशिपावासीनआचष्टे॰७ साम्राज्यंभौज्यं॰८ एतानिवाक्या
नि दक्षिणा अन्वित्यस्यस्थानेवाग्वाइतिखंडंकेचित्पठंति अन्नृक्षराऋजवः संत्विति विपर्यासेन प्राङ्मुखंवरं प्रत्यङ्मुखींकन्यांकृत्वाः
दातावरदत्तवस्त्रादिरहितांस्वदेयाहतवस्त्रालंकारमात्रयुतां अलंकारभिन्नकनकयुतहस्तांवरपूजावशिष्टचंदनलिप्तहस्तचरणांकन्य
मित्थंदद्यात् वधूवरयोर्दक्षिणातः स्वदक्षिणातः स्थितपत्नीसहितउदङ्मुखः पीठेउपविश्य बद्धशिखः उपविश्याचम्यकुशहस्तः प्राणा
नायस्यदेशकालसंकीर्तनांते अमुकप्रवरान्वितामुकगोत्रोऽमुकशर्माहं ममसमस्तपितॄणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्या
दानकल्पोक्तफलावाप्तये अनेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान् द्वादशपरान्पुरुषांश्चपवित्रीकर्तुंआत्मनश्च
लक्ष्मीनारायणप्रीतयेब्राह्मविवाहविधिनाकन्यादानमहंकरिष्ये इतिसकुशाक्षतजलप्रक्षेपेणसंकल्प्य सपत्नीकउत्थायोदङ्मुखएवक-

न्यांसंभगृत्य कन्यांकनकसंपन्नांकनकाभरणैर्युतां दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया विश्वंभरःसर्वभूताःसाक्षिण्यः
सर्वदेवताः इमांकन्यांप्रदास्यामिपितृणांतारणायचेतिपठित्वानवकांस्यपात्रस्थकन्यांजलेरुपरिवरांजलिंनिधाय तत्रदक्षिणेह-
स्तेयथाशक्तिहिरण्यंनिधायस्वदक्षिणास्थितपत्न्यानूतनपात्रस्थितानुच्छिष्टशुद्धोदकधारामविच्छिन्नांक्रियमाणांसहिरण्येतद्धस्ते-
क्षिपन्वदेत् ब्राह्मणैःसह कन्यातारयतु पुण्यंवर्द्धतां शांतिःपुष्टिस्तुष्टिश्चास्तु पुण्याहंभवतोब्रुवंतु स्वस्तिंभवंतोब्रुवंतु ऋद्धिंभवंतो-
ब्रुवंतु श्रीरस्त्वितिभवंतोब्रुवंत्वेतद्वाक्यचतुष्टयांते ओंपुण्याहमित्याद्युत्तराणिब्राह्मणाःपठेयुः अमुकप्रवरान्वितामुकगोत्रोमुकशर्माहं
ममसमस्तेत्यादिप्रीतयेइत्यंतमुक्त्वा अमुकप्रवरोपेतामुकगोत्रायामुकशर्मणःप्रपौत्रायामुकशर्मणःपौत्रायामुकशर्मणः पुत्रायामुकशर्म-
णेश्रीधररूपिणेवरायकन्यार्थिने अमुकप्रवरामुकगोत्राममुकशर्मणःप्रपौत्रीममुकशर्मणःपौत्रीममुकशर्मणःममपुत्रीं अमुकनाम्नीं
कन्यांश्रीरूपिणींवरार्थिनींप्रजापतिदेवत्यांप्रजासृजत्वकर्मभ्यस्तुभ्यमहंसंप्रददेइतिसहिरण्यहस्तेसाक्षतजलंक्षिपेत् प्रजापतिःप्री
यतामितिध्यात्वाकन्यांप्रतिगृण्हातुभवानितिवदेत् वरःॐस्वस्तीत्युक्त्वाकन्यायादक्षिणांसमभिमृशेत्कइदंकस्मा॰ प्रतिगृण्हामि
तित्रिर्वदेत् अथधर्मप्रजासिद्ध्यर्थंप्रतिगृण्हामीतिवदेत् ततोदातागौरींकन्यामिमांविप्रयथाशक्तिविभूषितां गोत्रायशर्मणेतुभ्यं
दत्तांविप्रसमाश्रय कन्येममाग्रतोभूयाः कन्येमेदेविपार्श्वयोःकन्येमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयां ममवंशकुलेजातापालि-

तावत्सराष्टकं तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी। धर्मेचार्थेचकामेचनातिचरितव्यात्वये ममिति वरोनातिचरामीतिवदेत् दातो-
पविश्य कृतस्यकन्यादानस्यप्रतिष्ठाफलसिद्ध्यर्थंइदंसुवर्णमग्निदैवत्यंदक्षिणात्वेनसंप्रददेइतिदद्यात् ओंस्वस्तीतिवरः कृतस्यकन्यादा
नप्रतिष्ठासिद्ध्यर्थंजलपात्रंभोजनपात्रंतदुपपात्रेचसंप्रददेइति दानपात्रेषुकांस्यादिजातिभेदेनमंत्रभेदाअभ्यूह्याः ओंस्वस्तीतिव
रः इत्थंपित्रादानंकार्यम् पितामहस्तुदानंकुर्वन्पौत्रीमित्यंतःपूर्वंममेतिवदेत् पुत्रीमित्यंतःपूर्वंनवदेत् भ्रात्रादिःदानंकुर्वन्पुरुष
त्रयसंकीर्तनमेवकुर्यात् नममेतिक्वापिवदेत् सकुलत्वेनपितामहःकुर्वन्प्रपौत्रीमित्यंतःपूर्वंममेतिवदेत् नोत्तरत्रजननीदानंनेकुर्या
त् गोत्रामुकनाम्न्य हमितिविकारः भर्तृगोत्रमेवेत्यंवदेत् नगोत्रोत्पन्नेतिपितृगोत्रंनैववदेत् पुत्रिकागांधर्वादिविवाहोढाचपितृगो
त्रमेववदेत् पुंस्त्रयसंकीर्तनेममेतिनवदेच्च मातामहमातुलादिःसंबंधीअसंबंधीवायःकश्चित् गोत्रांतरीयःकन्यादानंकुर्वन्स्वगो
त्रंस्वविशेषणत्वेनसंकीर्त्यामुकशर्मणःसमस्तपितृणामितिकन्यापितृनामषष्ठ्यंतमुक्त्वाकन्याविशेषणत्वेनतदीयप्रवरगोत्रकीर्तन-
मेवकुर्यात् ममवंशकुलेजातेतिम्लोकेपिममेत्यस्यस्थानेकन्यापितृनामैववदेच्च कुलशब्दस्यपितृवंशपरत्वेनैवसाफल्यात् अतएव-
पितादद्यात्स्वयंकन्यांभ्रातावानुमतेपितुः मातामहोमातुलश्चसकुल्योबांधवस्तथा मातात्वभावेसर्वेषांप्रकृतौयदिवर्तते तस्यामप्र
कृतिस्थायांदद्युःकन्यांसजातयः इतिनारदव्याख्यावसरेसकुल्याःपितृपक्षीयाःबांधवाःमातृपक्षीयाःसजातयोब्राह्मणादयइति-

व्याख्यातं मदनपारिजाते यद्यप्यत्र भ्रात्रनंतरं संकल्पात्पूर्वं मातामहमातुलयोः संकीर्तनमौरसकन्याविषये पुत्रिकाविषयेन वेदितव्य
मितितत्रैवोक्तम् तथापि पुत्रिकाविषयमेवैतत् और सकन्यायां याज्ञवल्क्योक्तश्रौतक्रमस्य बलवत्त्वात् अतएव नारदवाक्ये भ्रातुःपू
र्वं पितामहोपसंहारः पुत्रिकाकरणं च कलौ नोचितं दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह इति कलिवर्ज्येषु पाठात् यदि दत्तकः स्वौरसकन्या-
दानं कुर्यात् प्रतिग्रहीतायेन तद्गोत्रमेव स्वस्य कन्यायाश्च विशेषणत्वेन वदेत् प्रतिग्रहीतुः पितुरनंतरं च प्रपितामहस्थाने पितामहस्था
ने वदेत् दत्तकन्यादानेपि गोत्रकन्याविशेषणत्वेन संकीर्तनं श्लोके जातेत्यस्य दत्तेत्येवमूहः एवं दत्तकवराय कन्यादानेत्यनेन प्रतिग्रही-
तुः तदीयगोत्रस्य नतत्कुलगतपुरुषाणामेव वरविशेषणत्वेन संकीर्तनं बोद्धव्यम् अथ कन्यादानांगत्वेन गवादिदानं यः कुर्यात् संक
ल्पपूर्वकं तत्तन्मंत्रेण तत्तद्दानं कुर्यात् यज्ञसाधानभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवः प्रीयतामनयागवा गोः१ सर्व
सस्याश्रयाभूमिर्वराहेण समुत्धृता अनंतसस्यफलदा अतः शांतिं प्रयच्छमे भूमेः२ इयं दासी मया तुभ्यं श्रीवत्सप्रतिपादिता सदा-
कर्मकरी भोग्या यथेष्टं फलमश्नुते दास्याः३ अशून्यं शयनं नित्यमनूनां श्रियमुन्नतिम् सौभाग्यं देहि मे नित्यं शय्यादानेन केशव शय्या
याः४ हिरण्यगर्भसंभूतं सौवर्णं चांगुलीयकम् सर्वप्रदं प्रयच्छामि प्रीणातु कमलापतिः अंगुलीयकस्य ५ क्षीरोदमथने पूर्वमुद्भूतं
कुंडलद्वयं श्रियासह समुद्भूतं ददे श्रीः प्रीयतामिति कुंडलयोः६ महार्णवसमुत्पन्न उच्चैःश्रवसपुत्रक मयात्वं विप्रमुख्याय दत्तः

शांतिंप्रयच्छमे अश्वस्य ७ रजतंसर्वभूतानांपितॄणांपरमंहितम् शिवनेत्रोद्भवंयस्मादतःशांतिंप्रयच्छमे रजतस्य ८ रूप्रतीकग-
जेंद्रत्वंसरस्वत्याभिषेचित इद्रस्यवाहनंशश्वत्सर्वदेवैश्चपूजित दानेनानेनदत्तेनममशांतिंप्रयच्छमे गजस्य ९ इदंगृहंगृहाणत्वंसर्वो
पस्करसंयुतं तवविप्रप्रसादेनममास्त्वभिमतंफलम् गृहस्य १० इंद्रादिलोकपालानांयाराज्यमहिषीशुभा महिषासुरस्यजननीसास्तु
मेसर्वकामदा महिष्याः ११ परापवादपैशून्यादभक्षस्यचभक्षणात् उत्पन्नपापंदानेनताम्रपात्रस्यनश्यतु ताम्रपात्रस्य १२ यानिपा
पानिकाम्यानिकामोत्थानिकृतानिच कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा कांस्यपात्रस्य १३ अगम्यागमनंचैवपरदाराभिमर्शनं
रौप्यपात्रप्रदानेनतानिनश्यंतुमेसदा रौप्यपात्रस्य १४ जन्मजन्मसहस्रेषुयत्कृतंपातकंमया स्वर्णपात्रप्रदानेनशांतिरस्तस्यास्तुमेसदा
स्वर्णपात्रस्य १५ पूरितंपूगपूगेननागवल्लीदलान्वितं पूर्णेनचूर्णपात्रेणकर्पूरपिटकेनच सपूगखंडनंदिव्यंगधर्वाप्सरसांप्रियम्
करकत्वंनिरातंकंत्वंप्रसादात्कुरुष्वमाम् करकस्य १६ कांचनंहस्तवलयंरूपकांतिसुखप्रदम् विभूषणंप्रदास्यामिविभूषयतुमांसदा
वलयस्य १७ सर्वविद्याश्रयंज्ञानकारणंललिताक्षरं पुस्तकंसंप्रयच्छामिप्रीताभवतुभारती पुस्तकस्य १८ धर्मस्त्वंवृषरूपेणजग-
दानंदकारक अष्टमूर्तेरधिष्ठानमतःशांतिंप्रयच्छमे वृषस्य १९ एवंदानंकृत्वाकुक्ष्यभिमर्शनपक्षे यत्कक्षीवांसंवननंविश्वेदेवा-
अनुष्टुप् दक्षिणकुक्ष्यभिमर्शनेविनियोगः ॐ यत्कक्षीवांसंवननमितिमंत्रेणकन्यादक्षिणकुक्षिमभिमृशेत् अथकांस्यपात्रेक

लशजलमासिच्य अनाधृष्टमित्याभिमंत्र्य सकुशदूर्वयोदुंबर्याद्र्याशारवयावावधूवरावभिषिंचेत् आनःप्रजामितिचतसृ-
णांसूर्यासावित्रीऋषिः सूर्यासावित्रीदेवता आद्याजगती द्वितीयात्रिष्टुप् अंत्येद्वेअनुष्टुभौ अभिषेकेविनियोगः ॐ आनःप्रजां०
अघोरचक्षु० इमांत्वमिंद्र० सम्राज्ञी० ४ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् अभिषेके० ॐ समुद्रज्येष्ठाःस० आपो
हिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री अभिषकेवि० ॐ आपोहिष्ठा० ३ एवमभिषिच्य अथैशानीमारभ्यदुग्धाक्तंसूत्रंवधूव-
रयोःकंठदेशेचतुर्वारंपंचवारंवाप्रदक्षिणं परित्वागिर्वणो० १ तान्वोमहो० २ दशावनिभ्यो० ३ तेसोमादो० ४ वृषावो० अजुषध्वमध्वर्यमि
त्येतैर्मंत्रैर्वेष्टयित्वा कंठदेशस्थमधोनिष्काश्य कटिदेशस्थमुपरिनिष्काश्यऊर्णाहरिद्राखंडंबध्वाकंठदेशस्थंसूत्रंवधूवामहस्तेवरो
बध्नीयात् नीललोहितमित्यनेनमंत्रेण तथाकटिदेशस्थंसूत्रंवरदक्षिणहस्तप्रकोष्ठेवधूर्बध्नीयात् विश्वेत्तातेइत्यनेनमंत्रेण ऊर्णा-
स्तुकेकेशपक्षयोर्बन्द्धे भवतइतिसूत्रात् पक्षेविहितस्य अग्नेविश्वेभिःस्वनीकदेवैरितिमंत्रेणवरोदक्षिणोत्तरकेशपक्षयोर्मंत्रावृत्त्या
ऊर्णादशांबध्नीयात् इदंकृत्वाकृतमिति ततोऽक्षतारोपणं तत्रायंक्रमः तैजसपात्रेणक्षीरमानीयघृतमासिच्यपात्रांतरेणार्द्रास्त
तशुक्लशालितंडुलानादायवरः क्षालितपाणिःप्रक्षालितवध्वंजलौक्षीरघृतंपाणिनाद्विरुपस्तीर्यद्विवारंतंडुलानोप्याद्विवारंतथैवा
भिघारयेत् एवंवरांजलावन्येनापूरितेदातानदंजल्योःरूपवर्णनिधायवरांजलिंकन्यांजल्युपरिनिधाय कन्यानारयान्त्वसाद्दिमुहूर्तनक्ष॰

न्नसंपदस्त्वित्यंतंपठित्वा कन्यांजलिस्थितानक्षतान् वरमूर्धन्यारोपयेत् भगोमेकामःसमृध्यतामिति वरःस्वांजलिस्थानक्षतान्वधूशि
रसिक्षिपेत् यज्ञोमेकामःसमृध्यतामिति एवंपुनर्द्विवारंकुर्यात् तत्रश्रियोमेकामःसमृध्यतामितिवधूः धर्मोमेकामःसमृध्यतामिति
वरः इतिद्वितीयेकुर्यात् प्रजामेकामःसमृध्यतामितिवधूः यशोमेकामःसमृध्यतामितिवरः एवंतृतीयेकुर्यात् तूष्णींचतुर्थेनकु-
र्यात् सप्तवारंचकुर्यादितिकेचित् अन्येतुअक्षतारोपणेमंत्रान्नेच्छंति एवमक्षतारोपणंकृत्वा वरःस्वशिरसिपुष्पमादायक्षीरघृते
नाक्लाव्यकन्याललाटेतिलकंकुर्यात् साप्रिपूर्वोक्तंतिलकंवरस्यकुर्यात् मालांवरकंठेनिदध्यात् ततोकन्याकंठेवरोमालांनिदध्यात् ततो
वधूवरौप्राङ्मुखावुपविश्य अष्टपुत्रीसंज्ञकंवस्त्रद्वयंसकंचुकंमांगल्यतंतुयुक्तंनीराजनपुरःसरंसुवासिनीभिःसमर्प्य वरः मांग-
ल्यतंतुनानेनममजीवनहेतुना कंठेबध्नामिसुभगेसाजीवशरदांशतमितिमंत्रेणकंठेबध्वाकुलदेवतांचस्मृत्वा आयुष्यमितिसूक्ते
नभूषणैर्भूषयेत् ततःविवाहनिर्विघ्नतासिद्ध्यर्थगणपतिपूजनंकरिष्ये गणानांत्वाआतूनइंद्रक्षुमंतमितिमंत्रद्वयेनहरिद्राखंडपू
गीफललड्डुकादिनिधायषोडशोपचारैःसंपूज्य पुनःपूर्वोक्तमंत्राभ्यांवस्त्रप्रांतेबध्वाउत्तरीयवस्त्रप्रांतेपरस्परंबध्नीयात् ततोवधूवरौ
महालक्ष्मींशचींपार्वतींचप्रणम्यषोडशोपचारैरभ्यपूजयेत् देशकालसंकीर्तनांतेविवाहव्रतंकरिष्यावहे इतिसंकल्प्य ततःप्रथमदिव-
सेरोहिणीसोमौप्रमुखादाक्षायणीमावाहनादिभिःपूजयेत् ततोवधूर्मंगलद्रव्यपरिपूर्णानिवायनानिदेवतात्रयोद्देशेनसुवासिनीभ्योदद्यात्

ततोद्विजैराशीर्देया पाद्वंकर्णेभिः॰१ द्रविणोदाद्रवि॰२ सविताषश्चातात्॰३ नवोनवोभवति॰४ उच्चादिवि॰५ दक्षिणावता॰६ इतिपठेयुः
ततोवधूवरौपूर्वोक्तलक्षणांवेदिंमंत्रघोषेणगच्छतः वरःस्वयमासनेउपविश्य पश्चिममार्गेणनियमितवाचंवधूमानीय दक्षिणतउपवेश्य आ
चम्यप्राणानायम्यदेशकालौसंकीर्त्य प्रतिगृहीतायामस्यांवध्वांभार्यात्वसिद्धयेगृह्याग्निसिद्धयेचविवाहहोमंकरिष्येइतिसंकल्प्य स्थंडिलो
पलेपनाद्यग्निप्रतिष्ठपनांतकर्मकृत्वाप्रत्यगग्नेर्दृषदंसोपलांप्रतिष्ठाप्य प्रागुदीच्यामुदकुंभंधान्यराशौरुपरिनिधाय पल्लवैरपिधायगंधपुष्पै-
रलंकृत्यउदगग्नेःसप्ततंडुलराशीनुपकल्प्य समिद्धूयमादायदेशकालौसंकीर्त्य अस्मिन्विवाहहामेदेवतापरिग्रहार्थमन्वाधानमित्यादि आ-
घारावाज्येनेत्यंतमुक्त्वात्रिरग्निंपवमानंसकृदग्निंप्रजापतिंचाज्येन अयर्माग्निंवरुणाग्निंपूषाग्निंप्रजापतिंचलाजद्रव्येण शेषेणस्विष्टकृतमि-
त्यादि आज्याधिश्रपणांतंपूर्ववत्कृत्वाऽज्यंलाजैःसहपर्यग्निकृत्वाज्योत्पवनादिस्रुक्स्रुवांजलिसंमार्गांते हविरासादनान्वर्चनपूर्वकमाघा
रांतंकृत्वा वध्वाऽन्वारब्धः अग्नआयूंषीतितिसृभिःपूर्ववद्धोमत्यागौकृत्वा त्वमर्यमेतिमंत्रस्यवसुश्रुतऋषि अग्निर्देवतात्रिष्टुप्छंदः आ
ज्यहोमेवि॰ ॐ त्वमर्यमाभवसि॰ कृणोषिस्वाहा अग्नयइदं॰ प्रजापतेनत्वदेतान्यन्यइतिपंचभिराज्याहुतीर्हुत्वा प्रत्यङ्मुखवत्तिष्ठन् प्राङ्मु-
खव्याः वध्वा उत्तानहस्तांगुष्ठादिप्रदेशमवाङ्मुखेनकरेणगृभ्णामीतिमंत्रस्यसूर्यासावित्रीऋषिर्देवताच त्रिष्टुप्छंदः अस्यावध्वाःपाणि
ग्रहणेविनियोगः ॐ गृभ्णामितेसौभगत्वाय॰ यदेवाइतिमंत्रेणगृहीत्वावध्वाकरौप्रक्षाल्यांऽजलिंकारयित्वास्रुवेणाज्यमादायोपस्तीर्य

यंवधूभ्रात्राभ्रातृस्थानीयेनवाति छताशूर्पस्थाल्लाजान्मुष्टिपरिमितान् द्विरोप्य स्वयंपात्रस्थानभिघार्यांजलिस्थानप्यभिघार्य अर्यमण
मितिमंत्रस्य वामदेवऋषिः अर्यमाग्निर्देवता अनुष्टुप्छंदः विवाहप्रधानलाजहोमे॰ ओंअर्यमणंनुदेवंकन्याअग्निमयक्षत सइमांदेवोअर्य
माप्रेतोमुंचातुनामुतस्वाहा अर्यम्णेऽग्नयइदं॰ इतिमंत्रमुक्त्वातिष्ठन्नं जलिनांगुल्यग्रैर्होमयेत् ततोदृषदमुपलांचव र्जयित्वाकुंभसहित
मग्निं अमोहमस्मिसात्वंसात्वमस्यमोहंद्यौरहंपृथिवीत्वंसामाहमृक्त्वंतावेहविवहावहै प्रजांप्रजनयावहैसंप्रियौरोचिष्णूसुमनस्यमानौ-
जीवेवशरदःशतमितिमंत्रेणाग्रेस्वयंगच्छन्वध्वासहप्रदक्षिणीकृत्य तांप्राङ्मुखीं इममश्मानमारोहाश्मेवत्वंस्थिराभव सहस्वपृतनाय
तोभितिष्ठपृतन्यत इतिमंत्रेणद्वाभ्यामपिपादाभ्यांदृषदमारोप्य अश्मानमारोहयत्युत्तरतोग्नेर्दक्षिणपादेनेतिकात्यायनः पुनःपूर्ववत्तदंज
लिमुपस्तीर्यलाजावदानंद्विःकारयित्वाऽभिघार्य वरुणमितिमंत्रस्यवामदेवऋषिःवरुणाग्निर्देवताअनुष्टुप्छंदः विवाहप्रधानलाजहोमे॰
ओंवरुणंनुदेवंकन्याअग्निमयक्षत सइमांदेवोवरुणःप्रेतोमुंचातुनामुतःस्वाहा वरुणायाग्नयइदंनममेति मंत्रेणपूर्ववद्धावयित्वा पुनस्तेनैवमं
त्रेणवध्वासहप्रदक्षिणीकृत्य अश्मानमारोप्यपुनर्लाजावदानंपूर्ववत्कारयित्वा पूषणमितिमंत्रस्यवामदेवऋषिः पूषाग्निर्देवताअनुष्टु-
प्छंदः विवाहप्रधानलाजहोमे॰ ॐ पूषणंनुदेवंकन्याअग्निमयक्षत सइमांदेवःपूषाप्रेतोमुंचातुनामुतस्वाहा पूष्णेग्नयइदं॰ इतिमंत्रमु
क्त्वाहावयित्वा पुनर्मंत्रेणप्रदक्षिणीकृत्य अश्मानमारोप्य स्वयंप्रजापतयेस्वाहेतिस्मरन् अवशिष्टाल्लाजान् आत्माभिमुखशूर्पकोणेनैवनि

खशेषं तथैव हावयेत् ततो वधूं परिगृह्य अग्नेरुदक्सप्ततंडुलराशिष्वपि इषएकपदी भव सामामनुव्रता भव पुत्रान्विंदावहैबहूंस्तेसं
तुजरदष्टय इति प्रथमराशिं ऊर्जेद्विपदी भवेत्यादिना द्वितीयराशिं रायस्पोषाय त्रिपदी भवेत्यादिना तृतीयराशिं मायोभव्याय चतुष्पदी भ
वेत्यादिना चतुर्थराशिं प्रजाभ्यः पंचपदी भवेत्यादिना पंचमराशिं ऋतुभ्यः षट्पदी भवेत्यादिना षष्ठराशिं सखासप्तपदी भवेत्यादिना सप्त
मराशिं प्रत्यगादितः क्रमेणाक्रमय्य तस्याः शिरसा स्वशिरः संयोज्य कलशोदकमादाय प्रथममात्मशिरः पश्चाद्वधूशिरः पूर्वोक्तशांतिर
स्त्वित्यादि पंचदशवाक्यैरभिषिच्य पूर्ववदासित्वाज्येनास्विष्टकृदादि होमशेषं समाप्य पूर्ववद्धोत्तरीयांतौ तूष्णीं विस्रस्य रात्रौ ध्रुवमरुंधतीं
सप्तर्षींश्च वध्वा सह दृष्ट्वा जीवपत्नी प्रजां विंदेयेति मंत्रं पत्न्या वाचयेत् ततो वधूर्वाचं विसृजेत् एतदादि विवाहाग्निं रक्षेदिति विवाहहोमः
ततः सायंसंध्यामुपास्य विवाहाग्निं प्रज्वाल्य प्राणानायम्य देशकालौ संकीर्त्य अस्मिन्विवाहाग्नौ यथोक्तकाले श्री परमेश्वरप्रीत्यर्थं याव-
ज्जीवमुपासनं करिष्ये इति संकल्प्यौपासनं कुर्यात् तत्राज्यं क्रमः शुद्धदेशे चतुर्विंशत्यंगुलप्रमाणं षोडशांगुलप्रमाणं वा चतुरस्रं प्रत्ये
कं चतुरंगुलोत्सेधं मेखलात्रययुक्तमायतनं निर्माय गोमयेनोपलिप्योल्लिख्य तत्र यथालाभं सिकतापद्मपत्रादिसंभारान्निःक्षिप्य तत्र गृ
ह्याग्निं पूर्ववत्प्रतिष्ठाप्य विवाहदिनसायंकालादारभ्यौपासनं कुर्यात् तदित्थं यजमानः कृतसंध्यावंदनोऽग्नेः पश्चिमत उपविश्य प्राणा
नायम्य देशकालौ संकीर्त्य औपासनं करिष्ये इति संकल्प्य अस्तमानात्पूर्वकाले प्रज्वालिताग्नौ चत्वारिशृंगेति मंत्रेण यज्ञपुरुषमूर्तिं ध्यात्वा

सोदकेन पाणिनासमंतात्स दक्षिणं पुनः पुनरुदकमादाय त्रिः परिमृज्य परिस्तीर्य त्रिरुदकमादाय त्रिः पर्युक्ष्य होमद्रव्यं प्रक्षाल्य पात्रे निःक्षिप्य
तत्पात्रमग्नेरुत्तरतो निधाय ज्वलता दर्भेणावज्वाल्य प्रोक्ष्य तेनैव दर्भेण ज्वलता त्रिः पर्यग्निकृत्वा तदुल्मुकं निरस्याप उपस्पृश्याऽग्नेः पश्चिम-
तः कुशानास्तीर्य तत्र समिधा सह हविर्निधाय विश्वानि न इत्यादिऋग्भ्यां गंधादिभिरग्निमभ्यर्च्य दक्षिणं जान्वाच्य तत्समिधं तूष्णीमग्नौ प्रक्षि
प्याप उपस्पृश्य समिधि प्रदीप्तायां सत्यां विधूमे प्रज्वलितेऽग्नौ हुतसंख्याकान् प्रस्थधान्यस्य चतुःषष्टितम भागरूपान्वा तंडुलान् दक्षिणहस्तेनादा
य सव्यपाणिं हृदि निधायाऽङ्गुल्युत्तरपार्श्वेन समिन्मूलतो द्व्यंगुलप्रदेशेऽग्नये स्वाहेति हुत्वाऽग्नय इदं न ममेत्युक्त्वा वस्याआहुतेरैशानदेशे पू
र्वाहुतेर्मध्ये यसीमाहुतिं प्रजापतिपदं चतुर्थ्यंतं मनसा ध्यायन् स्वाहेत्युच्चार्य पूर्वाहुत्यसंस्पृष्टां हुत्वा पूर्ववदुपविश्य परिस्तरणं विसृज्य परिसमूह
न पर्युक्षणे कृत्वा अग्न आयूंषीति मंत्रत्रयस्य शातं वैखानसा ऋषयः अग्निः पवमानो देवता गायत्री छंदः अग्न्युपस्थाने विनि॰ अग्न आयूंषि॰
१ अग्निर्ऋषिः॰ २ अग्ने पवस्व स्वपा॰ ३ अग्ने त्वं न इति प्रजापते न त्वदिति तंतुं तन्वन्नित्यस्य देव ऋषिः अग्निर्देवता जगती छंदः विनियोगः उ-
क्त्वा ओं तंतुं तन्वन्नजसो॰ हिरण्यगर्भ इत्यस्य हिरण्यगर्भ ऋषिः प्रजापतिर्देवता त्रिष्टुप्छंदः विनियोगः पूर्ववत् हिरण्यगर्भः समवर्तता॰
विधेम एतैर्मंत्रैर्वायव्यदेशे प्रह्वीभूतः कृतांजलिः स्थित्वाग्निं समीक्षमाण उपस्थाय पुनरुपविश्य न्यूनातिरिक्तता परिहारार्थं विष्णुं स्मृत्वाऽने
न होमेन श्रीभगवान् परमेश्वरः प्रीयतामित्युच्चारयेत् एवं प्रातरुदयात्पूर्वमग्निप्रादुष्करणं कृत्वा होमकाले पूर्वांगानि कृत्वा पूर्वं संकल्पि

तत्प्रातरौपासनं करिष्ये इत्युक्त्वा सूर्याय स्वाहेति पूर्ववद्द्रव्ये णैव प्रथमाहुतिं हुत्वा सायंकालीनद्वितीयाहुतिवदत्राप्याहुतिं हुत्वा परि-
समूहनादिकं कृत्वोपस्थानं कुर्यात् तत्रायं क्रमः सूर्योन इति चक्षुः सूर्यो देवता गायत्री छंदः सूर्योपस्थाने वि॰ ओं सूर्यो नो दिवस्पातु॰
१ उदुत्यं चित्रं देवानां नमो मित्रस्येत्यस्य सूर्यो भितपा ऋषिः सूर्यो देवता जगती छंदः सूर्योपस्थाने॰ ओं नमो मित्रस्य॰ एतैश्चतुर्भिर्मं-
त्रैः पूर्वोक्तप्राजापत्यैश्चोपस्थायोंचमेति इत्यौपासनम् स्वमंदिरं गच्छन्नवधूं यानमारोहयेत् पूषात्वेतो नयतु हस्तगृह्येति सू-
र्यासावित्री ऋषिर्देवता च त्रिष्टुप् छंदः यानारोहणे वि॰ ओं पूषात्वेतो नयतु॰ वदासीति गृहं गत्वा श्वशुरगृहे वा पुनस्तिथ्यादि संकी
र्त्य ममाऽग्नेर्गृह्यत्वसिद्धिद्वारा श्री परमेश्वरप्रीत्यर्थं गृहप्रवेशाख्यं होमं करिष्ये तत्र देवतापरिग्रहार्थमित्यादि चक्षुषी आज्येनेत्यंतमु-
क्त्वाऽत्र प्रधानं सूर्यासावित्रीं चतुर्वारमुक्त्वा आज्येन शेषेण स्विष्टकृतमित्युक्त्वाऽन्वाधाय प्रत्यगग्नेः स्वदक्षिणदेशे प्राग्ग्रीवमुत्तरलो
मानडुहं चर्मास्तीर्य तस्मिन्वधूमुपवेश्य पात्रासादनाद्यग्न्यलंकरणपर्यंतं कृत्वा तयान्वारब्धः स नूइध्माधानाद्याज्यभागांतं कृत्वा आ
नः प्रजामिति चतसृणां सूर्यासावित्री ऋषिः सूर्यासावित्री देवता प्रथमा जगती द्वितीया त्रिष्टुप् अत्ये द्वे अनुष्टुभौ आज्यहोमे विनि॰
ओं आनः प्रजां जनयतु॰ चतुष्पदे स्वाहा सूर्यासावित्र्या इदं॰ १ अघोरचक्षुरपति॰ ष्पदे स्वाहा सूर्यासा॰ इमांत्वमिंद्रमीढ्वः॰ कृधि-
स्वाहा सूर्यासावित्र्या इदं॰ ३ सम्राज्ञी श्वशुरे भव॰ देवृषु स्वाहा सूर्यासावित्र्या इदं॰ ४ इति चतसृभिराज्याहुतीर्हुत्वा समंजंतु वि-

श्वेदेवाः॰ दधातुनौ हुतशिष्टाज्येन स्वस्य वध्वाश्च त्हृदये अंक्त्वा हस्तं प्रक्षाल्य स्विष्टकृदादि होमशेषं समाप्य पतिपुत्रवतीभिः सु-
वासिनीभिर्नीराजितो ब्राह्मणेभ्य आशिषो गृहीत्वा वध्वा सहाभिनंदन्नासीत ततो द्वितीयादिदिने विवाहे वधूवरौ अप्सरसो गंध-
र्वौ भूत्वा महादेवीं तृतीयाहे स्वाहाग्नी भूत्वा कालिकां चतुर्थाहे मानवौ भूत्वा शांकरीमावाहनादिभिः संपूजयेतां एवं चतुर्षु दिवसेषु वस्त्र-
दानं हेमसहितं च कृत्वा बहुब्राह्मणभोजन वेदोक्ताशीर्वादपूर्वकं व्रताचरणं कुर्यातां तत स्त्रिरात्रं वधूवरौ ब्रह्मचारिणावलंकुर्वाणाव-
धःशायिनौ अक्षारालवणाशिनौ भूत्वा तिष्ठेयातां ततो वरः व्रताचरणांते विवाहकाले वध्वा परिहितं वस्त्रं सत्येनोत्तभिता भूमिरिति-
सूक्तेन तदर्थविदे ब्राह्मणाय दत्वा व्रतसंपूर्त्यर्थं ब्राह्मणान् भोजयित्वा ॐ स्वस्तीति तानुक्त्वा पुनरोंस्वस्तीति तैनैव वाचयेत् अर्धरात्रे व्य-
तीते तु परेद्युः प्रातरेव हि गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुरिति संग्रहे अयं गृह्यपरिशिष्टमतेन विवाहप्रयोगः अथैरि-
णीदान प्रयोगः वधूपिता चतुर्थदिने प्राणानायम्य तिथ्यादि संकीर्त्य ममोमामहेश्वर लक्ष्मीनारायणप्रीतिद्वारा सकलकामनासिद्ध्यर्थं
कन्यादानस्य संपूर्णफलावाप्त्यर्थं वंशाभिवृद्ध्यर्थं च ऐरिणीपूजनं वरस्य तत्पितृमात्रादीनां तत्पक्षीयाणां च यथाविभवं वस्त्रादिभिः पूजनं वर-
मात्रे ऐरिणीदानं च करिष्ये वस्त्रदानांतं कृत्वा तदंगतया गणपतिपूजनं करिष्ये ऐरिणि त्वमुमादेवीतवेशो गिरिजापतिः अतस्त्वां
पूजयिष्यामि ऐरिणीं सर्वकामदामिति मंत्रेण षोडशोपचारैरभ्यर्च्य ऐरिणीदानं वरमात्रे कुर्यात् तत्र मंत्रः महद्वेणुमयं पात्रं नानापक्वा

न्नसंयुतं सवस्त्रफलतांबूलंदंपतीवंशवर्द्धनं सदक्षिणंसदीपंचशूर्पैः षोडशभिर्युतम् वरमात्रे प्रयच्छामि कन्यादानस्यसिद्धये
ऐरिण्याख्यंवंशपात्रं पक्वान्नैः परिपूरितं करकैरुद्रसंख्याकैः सुवर्णपरिपूरितैः एतावदैरिणीरूपं कर्त्तव्यं किलसूरिभिः वंशोवंश
करश्रेष्ठो वंशोवंशसमुद्भवः अनेनवंशदानेनश्रीशोऋद्धिंकरोतुमे वंशपात्रमिदंपुण्यंवंशजातसमुद्भवं वंशानामुत्तमंदानमतः शां-
तिंप्रयच्छमे अनेनवंशपात्रदानेनश्रीलक्ष्मीनारायणौप्रीयेतां वंशपात्राणिसर्वाणिमयासंपादितानिवै उमाकांतायदास्यामिम
मवंशाभिवृद्धये वंशवृद्धिकरंदानंसौभाग्यादिसमन्वितम् वस्त्रेणाच्छादितंपूगफलहेमस मन्वितं सर्वपापक्षयकरंनानाद्रव्यैःसु
पूरितं दानानामुत्तमंदानमतः शांतिंप्रयच्छमे इतिवंशदानंकृत्वा ततः कन्यांवरमातुरुत्संगयोरुपवेश्यवरमातरंप्रार्थयेत् अष्टव
र्षालियंकन्यापुत्रवत्पालितामया इदानींतवपुत्रायदत्तास्नेहेनपाल्यतामिति वधूमात्रादिः तत्पक्षसुवासिनीभ्योयथाचारंकंचुकी
क्षुद्रशूर्पवायनादिदद्यात् इदंवधूपितृभ्यामभुक्तवन्ध्यामभुक्तवत्यैवरमात्रेकार्यम् यथाचारंज्ञेयम् इत्यैरिणीदानप्रयोगः दे
वकोत्थापनंतुपूर्वोक्तोपनयनप्रकरणेज्ञेयम् अथद्विभार्याग्निसंयोगप्रयोगः शौनकः अथास्त्योर्गृह्ययोर्योगंसपत्नीभेदजा-
तयोः सहाधिकारसिद्ध्यर्थमहंवक्ष्यामिशौनकः पृथक्स्थंडिलयोरग्नीसमाधाययथाविधि तन्त्रंकृत्वाज्यभागांतमन्वाधानादिकं
तः पूर्वपत्न्यग्नौजुहुयात्तयान्वारब्धआहुतीः अग्निमीळेपुरोहितंसूक्तेननवकेनच समिध्येनंसमारोप्यअयंतेयोनिरित्यृचा प्रत्यव

रोहेत्सनया कानिष्ठाग्नौ निधायच आज्यभागांतमत्रापि कृत्वा रभ्य तदादितः समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयादाहुतम् चतुर्गृहीतमेता
भिराभिर्गाभिर्यथाक्रमम् अग्नावग्निश्चरति अग्निनाग्निः समिध्यते अस्तादमितितिसृभिः पाहिनोअग्नएकया ततः स्विष्टकृदारभ्य-
होमशेषं समापयेत् गोयुग्मं दक्षिणां दद्याच्छ्रोत्रियायाहिताग्नये पत्न्योरेकायदि मृता दग्ध्वा तेनैव तां पुनः आदधीतान्ययासार्द्धमाधान
विधिनागृहीति अथ प्रयोगः देशकालौ संकीर्त्य मम द्वाभ्यां भार्याभ्यां सह निष्पन्न गृह्याग्न्योरुक्ताभ्यां सहाधिकारसिद्धिद्वारा श्रीपर
मेश्वरप्रीत्यर्थं संसर्गं करिष्ये इति संकल्प्य गणेशपूजनं स्वस्तिवाचनं च कृत्वोदगपवर्गस्थंडिलयोर्गृह्याग्निं प्रतिष्ठाप्य प्रथमेऽग्नौ ज्येष्ठपत्न्य-
न्वारब्धोऽन्वाधानं कुर्यात् अग्निद्वयसंसर्गं प्रथमाग्निहोमकर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये चक्षुषी आज्येनेत्यंतेऽत्र प्रधानं अग्निं
नवभिर्ऋग्भिराज्याहुतिभिः शेषेणेत्यादि षट्पात्रासादनादि आज्यभागांते अग्निमीळइति नवानां मधुच्छंदा अग्निर्गायत्री अग्निद्वयसंस
र्गार्थे प्रथमाग्नौ प्रधानाज्यहोमे वि॰ स्वाहांते नवभिः स्रुवेण नवाहुतीर्जुहुयात् अग्नयइदं॰ ततः स्विष्टकृदादि होमशेषं समाप्य अयं-
तेयोनिरितितमग्निं समिधि समारोप्य प्रत्यवरोहेति द्वितीयाग्नौ तं प्रत्यवरोह्य द्वाभ्यामन्वारब्धोन्वाधानं कुर्यात् अग्निद्वयसंसर्गार्थे प्रथम-
संसृष्टद्वितीयाग्नौ विहितहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये चक्षुषी आज्येनेत्यंतेऽत्र प्रधानं अग्निं षड्वारमाज्येन शेषेण स्विष्टकृत



मित्यादि पात्रासादने प्रोक्षणीं कुशान् दर्वीं स्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषीति पात्राष्टकमासाद्य आज्यसंस्कारांते कुशैर्दर्वीस्रुवयोः सं

मार्गः आज्यभागांते दर्व्यांचतुर्गृहीतमाज्यं गृहीत्वा पत्नीहृया न्वारब्धो जुहुयात् अग्नावग्निरित्यस्य हिरण्यगर्भोग्निरष्टी अग्निहृय संस
गार्थे संसृष्टाग्नौ प्रधानाज्यहोमेविनियोगः ओं अग्नावग्निश्चरतिप्रविष्ट ऋषीणांपुत्रो अधिराजएषः तस्मैजुहोमिहविषाघृतेन मादेवा-
नांमोसुहृद्भागधेयंमो अस्माकंमोसुहृद्भागधेयंस्वाहा अग्नयइदं० शिष्टपंचहोमेषुचतुर्गृहीतमाज्यग्रहणेविनियोगस्त्यागश्चपूर्ववत्
अग्निनाग्निर्मेधातिथिः काण्वोगायत्री होमे० ओं अग्निनाग्निः समिध्यते० जुह्वास्यः स्वाहा १ अस्तीदमितितिसृणांविश्वामित्रोऽ
ग्निरनुष्टुप् अंत्येत्रिष्टुभौ होमे० ॐ अस्तीदमधिमंथ० पूर्वथाः स्वाहा २ ॐ अरण्योर्निहितो० मनुष्येभिरग्निःस्वाहा ३ ॐ उत्तानाया
मवभरा० जनिष्टस्वाहा ४ पाहिनोभर्गः प्रगाथोऽग्निर्बृहती होमे० ओं पाहिनोअग्नएकया० चतसृभिर्वसोस्वाहा ५ सर्वत्रस्वाहा
कारसमकालाहुतिः ततः स्विष्टकृदादिहोमशेषंसमाप्यश्रोत्रियाय आहिताग्नये गोमिथुनंदद्यात् ब्राह्मणान्भोजयेत् इतिद्वितीया
याग्निहूयसंसर्गप्रयोगः अथार्कविवाहप्रयोगः ततः कर्त्ता रविवारे हस्तर्क्षेशनिवारेवाऽन्यस्मिन्शुभदिनेवाग्रामात्प्राच्यामुदीच्यां-
वा पुष्पफलसंयुतमर्कंनिरीक्ष्य अर्ककन्यादातारं आचार्यंपरिकल्प्य स्नात्वालंकृतवासाः रक्तगंधादिभूषितः अर्कसंनिधिमागत्य आच
म्य प्राणानायम्य देशकालौसंकीर्त्य ममतृतीयमानुषीविवाहजन्यदोषपरिहारार्थंतृतीयमर्कविवाहंकरिष्ये इतिसंकल्प्य स्वस्तिवा-
चनंकृत्वा हिरण्येननांदीश्राद्धंकृत्वा आचार्यवरणंकृत्वा अष्टवर्गान्पूजयेत् दातामधुपर्केणयज्ञोपवीतवस्त्रहस्तकर्णादिभूषितैः

उष्णीषगंधमाल्यादिभिश्चवरंपूजयेत् वरःस्वशाखोक्तप्रकारेणमधुपर्कंसमाचरेत् अर्कंपुरतस्तिष्ठन् त्रिलोकवासिन्सप्ताश्वः
छाययासहितोरवे तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु इतिसूर्यंसंप्रार्थ्य छायायासहितरविंतत्राध्यारोप्य आदिलिंगैरभिषिच्यव
स्त्रमाल्यगंधैस्तत्तन्मंत्रैः संपूज्यश्वेतवस्त्रेणकार्पासतंतुभिश्चसंवेष्ट्यगुडौदनंनिवेद्यतांबूलंसमर्पयेदिति ततःममप्रीतिकरायेयं
मयासृष्टापुरातनी अर्कजाब्रह्मणासृष्टात्वस्माकंपरिरक्षतु इतिमंत्रेणार्कंप्रदक्षिणींकृत्य पुनः नमस्तेमंगलेदेविनमःसवितुरा
त्मजे त्राहिमांकृपयादेविपत्नीत्वंमेइहागता अर्कत्वंब्रह्मणासृष्टः सर्वप्राणिहितायच वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धन
तृतीयोद्वाहजंपापंमृत्युंचाशुविनाशयेतिमंत्रेणप्रदक्षिणंकुर्यात् ततःकन्यादानपर्यंतविधिंकृत्वा कन्यादाता आदित्यस्यप्रपौत्रीं
सवितुःपौत्रींअर्कस्यपुत्रीं काश्यपगोत्रां अमुकगोत्रायवरायतुभ्यमहंसंप्र० अर्ककन्यामिमांविप्रयथाशक्तिविभूषितां गोत्रायशर्म
णेतुभ्यंदत्तांविप्रसमाश्रय इतिमंत्रेणदद्यात् अंजल्यक्षतकर्माणिकृतकंकणपूर्वकम् यावत्संचकृतंसूत्रंतावदर्कंप्रवेष्टयेत् स्वशा-
खोक्तेनमंत्रेणगायत्र्यावाथवेष्टयेत् पंचीकृत्यपुनःसूत्रंस्कंधेबध्नातियत्ततः बृहत्सामेतिमंत्रेणसूत्ररक्षांप्रकल्पयेत् अर्कस्यपूर्व
पश्चिमदक्षिणोत्तरा मेयादिचतुष्टयेषुकुंभानष्टौनिधायप्रतिकुंभंवस्त्रसूत्राभ्यांवेष्टयेत् गंधहरिद्रायुक्तसितजलैः तान्कुंभानापू
र्यप्रतिकुंभंनाममंत्रेणमहाविष्णुंपाद्यार्घ्यादिनैवेद्यांतंपूजयेत् ततःअर्कस्यउत्तरदिग्भागेअर्कभार्ययान्वारब्धः ततःप्राणाना

यस्य अस्याः सम्यग्भार्यात्वसिध्यर्थं पाणिग्रहणहोमं करिष्ये तदंगं स्थंडिलोल्लेखनादि आघारदेवते आज्येनेत्यंतमुक्त्वा अत्र प्रधा-
नं बृहस्पतिं अग्निं अग्निं वायुं सूर्यं प्रजापतिं चैताः आज्यद्रव्येण शेषेण स्विष्टकृतमित्याद्याघारांतं तंत्रं कृत्वा संगोभिरित्यस्यांगिरा ऋ-
षिः बृहस्पतिर्देवता त्रिष्टुप्छंदः आज्यहोमे वि० ओं संगोभिरांगिरसो नक्षमाणो भग इवेदर्यमणं निनाय जने मित्रो न दंपती अनक्ति बृह-
स्पते वाजयाशूंरिवाजौ स्वाहा बृहस्पतय इदं० १ यस्मै त्वा कामकामायेत्यस्य वामदेव ऋषिः अग्निर्देवता त्रिष्टुप् छंदः आज्यहोमे विनि-
योगः ओं यस्मै त्वा कामकामाय वयं सम्राड्यजामहे तमस्मभ्यं कामं दत्त्वाथेदं त्वं घृतं पिब स्वाहा अग्नय इदं० २ ततो व्यस्तसमस्तव्याहृति-
भिर्हुत्वा स्विष्टकृदादि होमशेषं समाप्य प्रदक्षिणां कृत्वा मया कृतमिदं कर्म स्थावरेषु जरायुणा अर्कापत्यानि नो देहि तत्सर्वं क्षंतुमर्ह-
सीत्युक्त्वा शांतिसूक्तानि पठित्वा गोयुग्मं श्रोत्रियायाचार्याय दत्त्वा इतरेभ्योपि विप्रेभ्यो यथाशक्ति दक्षिणां दत्त्वा धारितवस्त्राणि त्यक्त्वा नू-
तनान्यानि धारयेत् त्यक्तवस्त्राणि गुरवे दद्यात् चतुर्थदिवसानंतरं होममग्निं च विसृज्य पुण्याहं वाचयित्वा मानुषीं विधिनोद्वहेत् इ-
त्यर्कविवाहप्रयोगः अथाग्निसंसर्गदोषप्रायश्चित्तप्रयोगः स्वगृह्याग्निरन्यगृह्याग्निना संसृष्टश्चेदग्निं विभज्य उभौ समिधिस-
मारोपणं कुर्यातां ततः प्रत्यवरोहणं कृत्वा पूर्ववद्धोमात्प्राणानायम्य तिथ्यादि संकीर्त्य समिद्द्वयमादाय अस्मिन्नन्वाहिते ग्नावित्या-
दि चक्षुषी आज्येनेत्यंतमुक्त्वा ऽत्र प्रधानं अग्निं विविचिं च रुद्रद्रव्येण शेषेण स्विष्टकृतमित्यादि पूर्णपात्रनिधानांतं कृत्वा पवित्रवतिं सूर्ये

सं॰कौ॰
२३०

ऽग्नये विविचये त्वा जुष्टं निर्वपामीति चतुरो मुष्टीन्निरूप्य प्रोक्षणाद्याज्यभागांतं कृत्वा अग्नये विविचये स्वाहेत्युद्देश्यत्यागौ कृत्वा स्विष्टकृ-
दादि होमशेषं समापयेत् अनुपक्रांतदर्शपूर्णमासश्चेत्पूर्ववदाज्यं संस्कृत्य स्रुवेण द्वादशवारं स्रुचि गृहीत्वा अग्नये विविचये स्वाहे-
ति स्रुवेणैव हुत्वा काले होमं चरेत् पश्चाद्धोता ऽग्नये पथिकृते जुहुयात् शवाग्निना संसृष्टश्चेदग्नये शुचये स्वाहेति जुहुयात् पचना-
ग्निना संसृष्टश्चेदग्नये संवर्गाय जुहुयात् वैद्युतेन संसृष्टश्चेदग्नये ऽप्सुमते च जुहुयात् इति संसर्गदोषप्रायश्चित्तप्रयोगः अ-
थ दर्शपूर्णमासस्थालीपाकप्रयोगः यजमानः अथाधानदिने स्त्रिया सह स्नात्वा कृतनित्यक्रियो विधिवत्प्रातरौपासनं कृत्वा प्रा-
णानायम्य देशकालौ संकीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पूर्णमासस्थालीपाकेन यक्ष्ये चत्वारि शृंगा गौतमो वामदेवो
ऽग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः ॐ चत्वारि शृंगा॰ सप्तहस्त स्वतु॰ तत्र देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य स-
मिद्द्वयं गृहीत्वा अस्मिन्नन्वाहितेऽग्नौ जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येनेत्यु-
क्त्वा अत्र प्रधानं अग्निमग्नीषोमौ चरुद्रव्येण शेषेण स्विष्टकृतमग्निमिध्मसंनहनेन रुद्रमयासमग्निं देवान्विष्णुमग्निं वायुं सूर्यं प्रजापतिं
चैताः प्रायश्चित्तदेवता आज्येन ज्ञाताज्ञातदोषनिबर्हणार्थं त्रिवारमग्निमाज्येन व्युत्क्रमादिदोषपरिहारार्थं मरुत आज्येन एवं सांगेन कर्मणा
श्वो यक्ष्ये सद्यस्कालेतु सद्यो यक्ष्ये व्यात्हतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अन्वाधानसमिद्धोमे विनियोगः ओं भूर्भुवः स्वः स्वाहा प्रजाप

२३०

तयइदं॰ समिद्द्वयमग्न्यावाधायेध्मा बर्हिषोश्च संनहनं कुर्यात् तत्रायं क्रमः प्रादेशमात्रान्दर्भान्षड्विंशत्संख्यान्रज्जुकरणार्थं गृही-
तानत्रद्वादशदर्भैः संधित्रयवर्तीं रज्जुं प्रादक्षिण्येन कृत्वा पुनरन्यां रज्जुमेवं कृत्वा तद्रज्जुद्वयमप्रादक्षिण्येन समस्य पुनरन्यां रज्जुं पूर्ववत्कृत्वा
प्रादक्षिण्येनात्रिवृतं समस्याग्रेऽप्रदक्षिणं ग्रंथिं कृत्वा तां रज्जुमुदगग्रां वितत्य तत्र प्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय तया रज्ज्वा तान् द-
र्भान्द्विरावेष्ट्य तद्रज्ज्वग्रेण तद्रज्जुमूलं सकृदावेष्ट्य तद्रज्ज्वग्रशेषं पूर्वमावेष्टितरज्ज्वाऽधस्तान्निर्नीय अन्यैर्दर्भैः सहायतनात्पश्चाद्द्रा-
गेउपरि निदध्यात् ततः पूर्ववदन्यां त्रिवृतां रज्जुं कृत्वोदगग्रां वितत्य तत्र पलाशखदिराद्यन्यतमयज्ञियवृक्ष प्रादेशप्रमाण पंचदश समिधा
दात्मकेध्मं प्रागग्रं निधाय तया रज्ज्वा सकृदाबध्य आयतनात्पश्चाद्द्रागेउपरि निधाय ततः उभौ स्वशरीरे गंधादिभिरलंकृत्य तद्दिवसे कल
हं क्रयविक्रयमनृतं साहसं बहुभाषणं नृत्यगीतवादित्रव्यसनं पर्यंकशयनं दंतधावनं दग्धान्नकुलित्थकोद्रवसक्तुचणकमसूरहंताकक्षार
लवणं मधु मांसमाषपरान्नमेतानि वर्जयित्वा घृतमिश्रहविष्यान्नं दिवैव सकृद्भुंजीयाताम् ततो यजमानः सायंहोमं कृत्वा अग्नेः सका-
शादंगुलपरिमिते देशे परिसमुत्य प्राच्यामुदगग्रैर्दक्षिणस्यां प्रागग्रैः प्रतीच्यामुदगग्रैरुदीच्यां प्रागग्रैर्दर्भैः परिस्तृणीयात् पूर्वपश्चिम
परिस्तरणमूलयोरुपरि दक्षिणपरिस्तरणं पूर्वपश्चिमपरिस्तरणाग्रयोरधस्तादुत्तरपरिस्तरणं एवमग्निं परिस्तीर्य पर्युक्ष्य ब्रह्मचारी-
भूत्वाऽधःशयीत ततः परेद्युः प्रातर्होमानंतरं अग्नेर्दक्षिणतो ब्रह्मासनार्थमुत्तरतः पात्रासादनार्थं दर्भान्प्रागग्रानास्तीर्य अग्नेरीशा-

नीमारभ्य पूर्ववत्परिमृज्य अग्नेरुत्तरतः पूर्वमास्तीर्णेषु दर्भेषु चरुस्थालीं प्रोक्षणपात्रं दर्वीं स्रुवं प्रणीतापात्रमाज्यपात्रमिध्मं बर्हिः शूर्पं कृ-
ष्णाजिनमुलूखलं मुसलं चेति एतानि पात्राणि द्वंद्वशः उदगपवर्गं प्राक्संस्थान्यखिलान्यासादयेत् ततः प्रोक्षणपात्रमुत्तानीकृत्य प्रादेशमा
त्रे पवित्रे निधाय शुद्धाभिरद्भिः पूरयित्वा अंगुष्ठानामिकाभ्यां ते पवित्रे उदगग्रे असंसृष्टे गृहीत्वा त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं विस्रस्य
सर्वाणि पात्राणि त्रिः प्रोक्षयेत् ततः ईशानदिगवस्थितं विप्रं अस्मिन्कर्मणि ब्रह्माणं त्वां वृणे इति तस्य पाणिं पाणिना गृहीत्वा वृणुयात् ततो ब्रह्मा वृ-
तोऽस्मीत्युक्त्वा प्राङ्मुखो यज्ञोपवीत्याचम्य समस्तपाण्यंगुष्ठो भूत्वाऽग्रेणाग्निं परीत्याग्नेर्दक्षिणत उदङ्मुखः स्थित्वा पूर्वमासनार्थं निहितद
र्भेषु दक्षिणभागस्थितमेकं दर्भं अंगुष्ठानामिकाभ्यां गृहीत्वा निरस्तः परावसुरिति मंत्रेण नैर्ऋत्यां निरस्याप उपस्पृश्य इदमहमर्वावसोः सद
ने सीदामीत्युक्त्वोदङ्मुखो वामोपरि दक्षिणपादं संस्थाप्योपविश्य यजमानेन गंधादिभिरर्चितः सन् ॐ बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्य
ते बृहस्पते यज्ञं गोपाय स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीति जपित्वा यज्ञावेक्षणे रतो भूयात् ततो यजमानः अग्नेः पश्चात्प्रणीतापा
त्रं निधाय तत्र पवित्रे निधाय पूर्वमुत्पूताभिरद्भिः पूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य ॥ हे ब्रह्मन्नपः प्रणेष्यामीति ब्रह्मा ओं भूर्भुवः स्वर्बृहस्प
तिप्रसूत इत्युपांशु उच्चैराह ओं प्रणयेति यजमानस्तत्पात्रं मुखसममुद्धृत्य अग्नेरुत्तरतो दर्भेषु निधाय ते पवित्रे गृहीत्वा तत्पात्रमन्यैर्दर्भै
राच्छाद्य अग्नेः पश्चाच्छूर्पं निधाय शूर्पे पवित्रे निधाय पवित्रोपरि अग्नये त्वा जुष्टं निर्वपामीति मंत्रावृत्त्या चतुरश्चतुरो मुष्टीन्निरूप्याऽग्नेः

षोमाभ्यां त्वाजुष्टं निर्वपामीति तथैव निरूप्य ते पवित्रे निरुप्तव्रीहीणामुपरि निधाय उत्पूताभिरद्भिर्निर्वापसंख्यया प्रोक्ष्य प्राग्ग्रीवे ऊर्ध्वलो-
म्नि कृष्णाजिने उलूखलं निधाय उलूखले निरुप्तव्रीहीनोप्य तान्मुसलेन पत्न्यावहत्य त्रिः फलीकृत्य त्रिः प्रक्षाल्य अविदग्धमबहिर्गतकंचुकं
सुशृतं चरुं श्रपयेत् ततस्ते पवित्रे आज्यपात्रे निधाय तत्पात्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासिच्याग्नेरुत्तरतः स्थितांगारान् भस्मना सहा-
ग्नेरुदक्परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यस्थालीमधिश्रित्य ज्वलता दर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये निधा-
य पुनर्ज्वलता तेनैव दर्भोल्मुकेन चरुणा सहाज्यं त्रिः पर्यग्नि कृत्वा तदुल्मुकमपास्यापः स्पृष्ट्वा आज्यस्थालीं फा विकर्षन्निवोदगुद्वास्यांगा-
रान् प्रत्यूह्यापः स्पृष्ट्वा तत्रस्थितमेवाज्यं सवितुष्ट्वेत्यस्य हिरण्यस्तूप ऋषिः सविता देवता पुरउष्णिक् छंदः आज्यस्योत्पवने विनियोगः
सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति मंत्रेणैकवारं द्विस्तूष्णीं पवित्राभ्यां प्रागुत्पूय ते पवित्रे अद्भिः प्रोक्ष्य
अग्नौ प्रहृत्य अग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोऽग्रे फवं प्रोक्ष्य भुवि बर्हिः सन्नहनीं रज्जुमुदगग्रां वितत्य तद्बर्हिः प्रागग्रमुदगपवर्गं निबि-
डमास्तीर्य तत्राज्यपात्रं निधाय दक्षिणहस्तेन दर्वीस्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य दर्वीं निधाय सव्यहस्ते स्रुवं गृ-
हीत्वा दक्षिणेन पाणिना दर्भाग्रैः स्रुवबिलं प्रादक्षिण्येन प्रागादिप्रागपवर्गं त्रिः संमृज्य स्रुवाधस्ताद्दर्भाग्रैरभ्यात्मबिलपृष्ठं त्रिः संमृज्य
दर्भमूलैः स्रुवदंडाधस्ताद्बिलपृष्ठादारभ्य यावदुपरि बिलं तावत्त्रिः संमृज्य द्विः प्रोक्ष्य स्रुवं निष्टप्य आज्यस्थाल्या उत्तरतः दर्व्यं संसृष्टे

निधायाप ऽस्पृष्ट्वा तैरेव दर्भैर्दग्धैस्तद्वत्संमृज्य तां स्रुवस्योत्तरतो निधाय दर्भानद्भिः प्रोक्ष्याऽग्नावनुप्रहरेत् ततः शृतं चरुं स्रुवगृहीतेनाज्येना
भिघार्य चरुस्थालीमुदगुद्वास्याग्न्याज्ययोर्मध्येन नीत्वाज्याद्दक्षिणतो बर्हिषि सांतरमासाद्य पुनश्चरुमभिघार्य स्वरोरुद्धरणाय चर्वाज्ययो
र्मध्ये पात्रांतरं निधाय गंधाक्षतपुष्पैरग्निमर्चयेत् विश्वानि न इत्यनयोर्वत्सश्रुत ऋषिः अग्निर्देवता त्रिष्टुप्छंदः अग्न्यर्चने विनियोगः ॐ वि
श्वानि नो० तनूनाम् यस्त्वा हृदा कीरिणा० मृतत्वमश्यामिति ऋग्भ्यां प्रतिपादं प्रतिदिशं प्राचीमारभ्याऽभ्यर्च्य यस्मै त्वं सुकृते० शतेस्व
स्तीत्युपस्थायात्मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबंधनरज्जुं तत्रैव निधाय दक्षिणपाणिनेध्ममादाय त्रिरिध्ममभिघार्य मूलमध्ययोर्मध्य-
भागं गृहीत्वा अयं त इध्म इत्यस्य वामदेव ऋषिः जातवेदा अग्निर्देवता त्रिष्टुब्छंदः इध्महोमे विनियोगः ॐ अयं त इध्म आत्मा जातवेदस्तेने-
ध्यस्व वर्द्धस्व चेद्ध वर्धय चाऽस्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा इतीध्मं हुत्वा जातवेदसेऽग्नय इदं न ममेत्युद्दिश्य
त्यजेत् अथ स्रुवेणाज्यं गृहीत्वा परिस्तरणाद्वायव्यकोणतो नीत्वा वायव्यकोणमारभ्याऽग्नेयीपर्यंतं प्रजापतय इति मनसा स्मरन्हुत्वा
हुत्वेत्याचार्य अविच्छेदेनाज्यधारां प्रदीप्तेऽग्नौ इध्मदारूणि परिप्लावयन्हुत्वा पुनराज्यं गृहीत्वा परिस्तरणान्नैर्ऋत्यकोणतो नीत्वा नैर्ऋती
मारभ्य ऐशानीपर्यंतं तथैव हुत्वा उभयत्र प्रजापतय इदं न ममेत्युद्देशत्यागौ कृत्वा स्रुवेणाज्यमादायाऽग्नये स्वाहेत्यग्नेरुत्तरपार्श्वेऽ
पूर्वभागे हुत्वा पुनराज्यं गृहीत्वा सोमाय स्वाहेति अग्नेर्दक्षिणपार्श्वे तत्समप्रदेशे हुत्वा यथादैवतमुद्देशत्यागौ कृत्वा चरुं पूर्वनिहित

पात्रांतरे पृथक्कृत्य इदमग्नये इदमग्नीषोमाभ्यामिति चरुभागद्वय मुत्तर संस्थमभिमृश्य स्रुवेण दर्व्यामुपस्तीर्य प्रथमप्रधानदेवता
चरोर्मध्यादंगुष्ठपर्वमात्रं तिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखस्पर्शमकृत्वा अवदाय दर्व्यामोप्य ततः पूर्वभा-
गं भागग्राभिस्ताभिस्तथैवावदाय दर्व्यामोप्य स्थालीस्थं हविरभिघार्य पश्चाद्दर्वीस्थितमभिघार्य विधूमाल्पज्वालांगाराग्नौ अग्नये
स्वाहेति आज्यभागयोर्मध्ये प्राक्देशे वा दर्व्याः पार्श्वेनाच्छादयन्निव हुत्वा अग्नय इदं न ममेत्युक्त्वा पुनस्तथैव गृहीत्वा ओं अग्नी-
षोमाभ्यां स्वाहेति पूर्वाहुतेः प्राग्भागे हुत्वा अग्नीषोमाभ्यामिदं न ममेति त्यागमुक्त्वा दर्व्यामुपस्तीर्य प्रथमहविष उत्तरार्धात्पूर्वावदाना
तो भूयो ऽनूचीनाभिरेवावदाय दर्व्यामोप्य पुनर्द्वितीयहविषस्तथैवावदाय स्थालीपाकमनभिघार्य दर्वीस्थं हविरभिघार्य यदस्येत्य
स्य हिरण्यगर्भ ऋषिः अग्निः स्विष्टकृद्देवता अतिधृती छंदः अग्निस्विष्टकृद्धोमे विनियोगः ओं यदस्य कर्मणोत्यरीरिचं यद्वान्यून
मिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे स
र्वान्नः कामान्समर्धय स्वाहा इत्यग्नावैशानदेशे जुहुयात् अग्नये स्विष्टकृत इदं० पंचावत्तीतु प्रधानहोमे मध्यात्पूर्वार्धात् पश्चार्धात्
त्रिवारमवद्यति स्विष्टकृत उत्तरार्धात् पूर्वार्धाच्च द्विरवद्यति इतरत्सर्वं समानम् ततः अग्नेरुत्तरतः स्थितामिध्मबंधनरज्जुं विस्रस्य
रुद्राय पशुपतये स्वाहेति हुत्वा रुद्रायेदं न ममेत्युक्त्वा अपः स्पृष्ट्वा स्रुवेणाज्यमादाय अयाश्चाग्नेरित्यस्य विमद ऋषिः अयाश्च-

ग्निर्देवता पंक्तीछंदः प्रायश्चित्ताज्यहोमेविनियोगः अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि अयासावयसाकृतोयासन्ह-
व्यमूहिषेयानोधेहिभेषजंस्वाहा अयसेऽग्नयइदं॰ अतोदेवाइत्यस्यमेधातिथिर्ऋषिः देवादेवताः गायत्रीछंदः प्रायश्चित्ताज्यहोमे॰
ओं अतोदेवाअवंतुनो॰ भभिः स्वाहा देवेभ्यइदं॰ इदंविष्णुरित्यस्यमेधातिथिर्ऋषिःविष्णुर्देवता गायत्रीछंदः प्रायश्चित्ताज्यहोमे॰
ओं इदंविष्णुर्विचक्रमे॰ स्वाहा विष्णवइदं॰ व्याहृतीनांव्यस्तसमस्तानांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयः अग्नि
वायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुब्बृहतीतिक्रमाच्छंदांसि प्रायश्चित्ताज्यहोमे॰ ॐ भूःस्वाहा अग्नयइदं॰ ॐ भुवःस्वा
हा वायवइदं॰ ॐ स्वःस्वाहा सूर्यायेदं॰ ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदं॰ इतिसमाज्याहुतीर्जुहुयात ततोब्रह्माऽग्नेर्वायव्यदेशे
स्थित्वा एताः सप्तहुत्वा मंत्रविपर्यासादिनियतनिमित्तेप्राप्ते यद्वोदेवाइत्यस्यअभितपाऋषिः मरुतोदेवताः त्रिष्टुप्छंदः प्रायश्चि
त्ताज्यहोमे॰ ॐ यद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनम् अरायोअस्मांअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तान्निधेतनस्वा-
हा मरुद्भ्यइदं॰ अनाज्ञातमितिमंत्रद्वयस्यहिरण्यगर्भऋषिः अग्निर्देवता अनुष्टुप्छंदः प्रायश्चित्ताज्यहोमे॰ ॐ अनाज्ञातंयदाज्ञा
तंयज्ञस्यक्रियतेमिथु अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा अग्नयइदं॰ ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः अग्ने
तदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा अग्नयइदं॰ यत्पाकत्रेत्यस्यास्यस्त्रितऋषिः अग्निर्देवता त्रिष्टुप्छंदः प्रायश्चित्ताज्य॰

ओं यस्माकृणवामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाः ऋतुशोयजातिस्वाहा अग्नयइ
दं० समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्य वामदेवऋषिः आपोदेवताः त्रिष्टुब्छंदः अंत्याजगती पूर्णाहुतिहोमेविनियोगः ॐ समु
द्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट् घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः वयंनामप्रब्रवामाघृतस्यास्मि
न्यज्ञेधारयामानमोभिः उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य
त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् इंद्रएकंसूर्यएकंजजा
नवेनादेकंस्वधयानिष्टतक्षुः एताअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसो
मध्यआसाम् १ सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमानाः एतेअर्षंत्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः
सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयंतियह्वाः घृतस्यधाराअरुषोनवाजीकाष्ठाभिंदन्नूर्मिभिःपिन्वमानः अभिप्रवंत
समनेवयोषाःकल्याण्यः१स्मयमानासोअग्निम् घृतस्यधाराःसमिधोनसंततानुषाणोहर्यतिजातवेदाः कन्याइववहतुमेतवाउअं
ज्यंजानाअभिचाकशीमि यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराअभितत्पवंते अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणा
निधत्त इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंते धामंतेविश्वंभुवनमधिश्रित— मंतःसमुद्रेहृद्यं१तरायुषि अपामनीके

समिधेय आभृतस्तमश्याम सधुमंतं तउर्मिं स्वाहेति पठन् यवपरिमितधारां संततां दर्व्यग्रेणासावशेषं हुत्वा अग्नय इदं नमम इत्युक्त्वा
विज्योतिषेत्यस्य वृष ऋषिः अग्निर्देवता त्रिष्टुप्छंदः अवशिष्टहोमे॰ ॐ विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा प्रा
देवीर्मायाः सहते दुरेवाः शिशीते शृंगे रक्षसे विनिक्षे स्वाहा इत्यनेनावशिष्टं सर्वं हुत्वा अग्नय इदं नमम इत्युक्त्वा विश्वेभ्यो देवेभ्यः स्वा
हेति संस्रावं हुत्वा विश्वेभ्यो देवेभ्य इदं नमम इति त्यजेत् ततः पूर्वासादितप्रणीतापात्रं आस्तीर्णे बर्हिषि दक्षिणपाणिनाभिधाय तत्र
गंगादिपुण्यनदीः स्मृत्वा दक्षिणपाणिनास्पृशन् ओं पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि
सर्वं मे भूयाः अक्षितिरसि मा मे क्षेष्ठाः इति जपित्वा कुशाग्रैः प्रागादिपंचदिक्षु प्रादक्षिण्येन क्रमेण जलं सिंचेत् प्राच्यां दिशि देवा ऋत्वि-
जो मार्जयंतां दक्षिणस्यां दिशि मासाः पितरो मार्जयंतां अपः स्पृष्ट्वा प्रतीच्यां दिशि गृहाः पशवो मार्जयंतां उदीच्यां दिश्याप ओषधयो-
वनस्पतयो मार्जयंतां ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतामित्येकश्रुत्या पठन् प्रतिदिशं सिक्त्वा स्वशिरसि कुशाग्रैर्मार्ज
येत् आपो अस्मानित्यस्य देवश्रवा ऋषिः आपो देवताः त्रिष्टुप्छंदः मार्जने विनियोगः ॐ आपो अस्मान्मातरः शुंधयंतु घृतेन नो घृ
तप्वः पुनंतु विश्वं हि रिप्रं प्रवहंति देवीरुदिदाभ्यः शुचिरापूत एमि इदमाप इत्यस्य सिंधुद्वीप ऋषिः आपो देवताः अनुष्टुप्छंदः मा-
र्जने विनियोगः ओं इदमापः प्रवहत॰ शेप उतानृतम् सुमित्र्यान आप ओषधयः संतु एतैर्मंत्रैर्मार्जयित्वा निर्ऋतिदिशि दुर्मित्र्यास्त

स्मैसंतु योस्मान्द्वेष्टि यंचवयंद्विष्मस्तंहन्मीति कुशाग्रैरपःसिंचेत् ततोयजमानस्यवामपार्श्वस्थितपत्न्यंजलौप्रणीतापात्रस्थजल
म् माहंप्रजांपरासिचंयानःसयावरीस्थन समुद्रेवोनिनयानिस्वंपाथोअपीथ इत्येकश्रुत्योच्चारितेनप्रत्यङ्मुखंनिषिच्य तदंजलिस्थ
जलैःपापनिरसनाय आत्मानंयजमानंतत्सर्वंचप्रोक्षयेत् पत्नीतज्जलंबर्हिषिनिषिंचेत् यजमानःअग्नेर्वायव्यदेशोस्थितःसंस्था
जपेनोपतिष्ठेत तद्यथा अग्नेत्वंनइत्यस्यगौपायनालौपायनाबंधुःश्रुतबंधुर्विप्रबंधुरितिऋषयः अग्निर्देवता द्विपदावि
राड्छंदः अग्न्युपस्थानेविनियोगः ॐ अग्नेत्वंनोअंतम० वसुरग्निर्वसुश्रवा० सनोबोधिश्रुधीहव० तंत्वाशोचिष्ट दीदिवः० सखि
भ्यः ओंनमेस्वरस्वमेयज्ञोपचतेनमश्च यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः इत्युपस्थाय परिस्तरणंविसृज्य पर्युक्ष्य परि
षिंच्य अलंकृत्य घृतादिहिरण्यंच ब्राह्मणायदक्षिणांदत्वायस्यस्मृत्येति विष्णवर्पणंकुर्यात् इतिपौर्णमासस्थालीपाकप्रयोगः
अथदर्शस्थालीपाकप्रयोगः यजमानःसायंहोमंकृत्वापूर्ववद्व्रतनियमपरिस्तरणादिकंकृत्वापरेद्युःप्रातर्होमंविधाय प्रणी
ताप्रणयनांते अग्नयेत्वाजुष्टंनिर्वपामि इंद्राग्निभ्यांत्वाजुष्टंनिर्वपामीति पूर्ववन्निरूप्य प्रोक्षणादिहविरवदानांतंकृत्वा अग्नयेस्वा–
हा इंद्राग्निभ्यांस्वाहेतिहुत्वा यथादैवतमुद्देश त्यागौकृत्वास्विष्टकृदादिहोमशेषंसमापयेत् इतिदर्शस्थालीपाकप्रयोगः अथपिं
डपितृयज्ञः प्राणानायम्य देशकालौ संकीर्त्य पितृतृप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंकरिष्ये इतिसंकल्प्य आग्नेय्यभि

सुखोऽग्निं ध्यात्वा अग्नेराग्नेयीं दिशमारभ्याऽप्रदक्षिणमेवाग्निं परिसमुह्य प्राग्दक्षिणाग्रैर्दर्भैः परिस्तीर्य पर्युक्ष्य अग्नेरीशान्यां वायव्यां वा प्राग्दक्षिणाग्रान् दर्भानास्तीर्य तेषु स्थालीं शूर्पं स्फ्यमुलूखलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नं बर्हिरिध्मं मेक्षणं कमंडलुं नैकैकशः प्राग्दक्षिणापवर्गाणि पात्राणि सादयेत् शूर्पे स्थालीं निधाय व्रीहिपूर्णां निमृज्य शूर्पे स्थान् व्रीहीन् शकटे निधाय स्थालीस्थान् व्रीहीन् कृष्णाजिने उलूखले कृत्वा पत्न्यावघात्य अविवेचनं सकृत्फलीकृतान् सकृत्प्रक्षाल्याऽग्नौ चरुं श्रपयेत् अग्नेरुल्मुकं पृथक् कृत्वा प्रदीप्तं ततः येरूपाणि प्रतिमुंचमाना असुराः संतः स्वधया चरंति परापुरो निपुरो ये भरंत्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् इति मंत्रेण अग्नेराग्नेय्यां दिशि निनयेत्तदुल्मुकं पूर्ववद्दर्भैः परिस्तीर्य तस्मादर्वाक् अपहता असुरा रक्षांसि वेदिषद इति मंत्रेण स्फ्येन लेखामाग्नेयीसंस्थां स्पष्टामुल्लिखेत् तां चलेखां मध्ये पर्युक्ष्य पूर्वं सादितसकृदाच्छिन्नबर्हिषावस्तीर्य आज्यं कस्मिंश्चित्पात्रे निषिंच्य तेनैव पात्रेण ध्रुवायां निधाय ध्रुवाज्येन पक्वं चरुमभिघार्य अग्नेरुत्तरतो दक्षिणतो वा उद्वास्य पुनरभिघार्याऽग्नेः पश्चिमदेशे आस्तीर्णे बर्हिषि निदध्यात् ध्रुवामंजनाभ्यंजनकशिपूपबर्हणानि चाग्नेर्दक्षिणतः सादयित्वाऽग्निं प्रज्वाल्य प्राचीनावीती भूत्वा तमिध्मं तूष्णीमग्नौ हुत्वा स्रुवेण ध्रुवाज्यं गृहीत्वा आज्येन मेक्षणमुपस्तीर्य मेक्षणेन चरुं द्विरवदाय स्रुवेण चरुमभिघार्यावदानं प्रत्यभिघार्य सोमाय पितृमते स्वधा नम इति मंत्रमुच्चार्याग्नौ हुत्वा सोमाय पितृमत इदं न ममेत्युक्त्वा पुनस्तथैवावदाय अग्नये कव्यवाहनाय स्वधा नम इति मं

त्रमुच्चार्याग्नौ हुत्वा अग्नये कव्यवाहनायेदं न ममेत्युक्त्वा यज्ञोपवीती भूत्वा मेक्षणमग्नौ प्रहृत्य प्राचीनावीती सन् तां लेखां आदौ म-
ध्ये अंते च शुंधंतां पितरः शुंधंतां पितामहाः शुंधंतां प्रपितामहाः इति त्रिरुदकेन परिषिच्य तस्यां पितृतीर्थेन एतत्ते अस्मत्पितः अमुकश
र्मन्नमुकगोत्र वसुरूप ये च त्वामत्रानु एतत्ते अस्मत्पित्रे ऽमुकशर्मणे ऽमुकगोत्राय वसुरूपाय अयं पिंडः स्वधा नमः ये च त्वामनुगच्छं-
ति तेभ्यश्चेति पित्रे पिंडं पितामहप्रपितामहयोरपि रुद्रादित्यरूपयोः पिंडौ आदिमध्यांतेषु दत्वा पिंडान् तंत्रतः सकृदत्र पितरो मादय
ध्वं यथाभागमावृषायध्वमित्यनुमंत्रयेत् ततः स्वपाणिं पिंडबर्हिर्मूले निमृज्य सव्यपार्श्वेन व्यावृत्त्य यथाशक्ति वायुं नियम्य तथैव प
र्यावृत्य अमीमदंत पितरो यथाभागमावृषायिषतेति पुनस्ताननुमंत्र्य पिंडशिष्टचरोः किंचिदादाय अवघ्राय त्यजेत् ततो हस्तं प्रक्षा
ल्य शुंधंतामित्यादिमंत्रैः पिंडेषु पितृतीर्थेन जलं निषिंचेत् ततः पिंडेषु दर्भेण पितृतीर्थेन तैलं अस्मत्पितः अमुकशर्मन्नमुकसगो-
त्र वसुरूप ऽभ्यंक्ष्वेति एवं पितामहप्रपितामहयोरपि संबुद्ध्यंते अभ्यंक्ष्वेत्यंतं नोक्त्वा दत्वा तथैव संबुद्ध्यंतानि नामगोत्राण्युक्त्वा अंक्ष्वे
ति नोक्त्वा तथैव अंजनं दद्यात् अथ वासः वस्त्रांतं सूत्रच्छेदं वा पंचाशद्वर्षाधिकत्वे दातुः स्वप्रकोष्ठस्थं लोम वा एतद्वः पितरो वासो मा
नोतोऽन्यत्पितरो युंग्ध्वमित्यनेन प्रत्येकं पिंडेषु समर्प्य पूजयित्वा नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः-
पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा-

वोजीवंतइह संतः स्याम मनोन्वाहुवामहेनाराशंसेनसोमेन पितॄणांचमन्मभिः आतएतुमनः पुनः क्रत्वेदक्षायजीवसे ज्योक्चसूर्यंदृशे पुनर्नः पितरोमनोंददातुदैव्योजनः जीवंव्रातंसचेमहि इत्यनेनपिंडाननुपतिष्ठेत अथपिंडस्यानुपितृभ्यां याम्यांदिशमनुव्रजन् परेतनपितरः सोम्यासोगंभीरेभिः पथिभिः पूर्व्यणेभिः दत्वायास्मभ्यंद्रविणेहभद्रंरयिंचनः सर्ववीरंनियच्छतेइत्यनेनोद्वासयेत् अथाऽग्निंप्रत्येयात् अग्नेतमद्याश्वंनस्तोमैः क्रतुंनभद्रंहृदिस्पृशम् ऋध्यामातओहैः यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम अग्निर्मातस्मादेनसः प्रमुंचतुकरोतुमामनेनसम् वीरंमेदत्तपितरइतिजप्त्वापिंडानांमध्यमंपिंडंपत्नी आधत्तपितरोगर्भंकुमारंपुष्करस्रजम् यथायमरपाअसदितिप्राशयेत् अप्सुनीतोल्मुकेवाइतरौपिंडौप्रक्षिपेत् अन्नारुचिमान् महारोगग्रस्तोवापिंडावुभौप्राश्नीयात् रोगान्मुक्तिर्मृतिर्वाऽस्यभवेत् उपयुक्तावशिष्टपात्राणांद्विर्द्विरुत्सर्गः द्वंद्वातिरिक्तमेकंतृणेनसहोत्सृजेत् इतिपिंडपितृयज्ञः अथव्यतिषंगप्रयोगः योनाहिताग्निरौपासनाग्निमान् मृतपितृकः वक्ष्यमाणंपार्वणश्राद्धंपिंडपितृयज्ञंचव्यतिषंगेणैवकुर्यात् व्यतिषंगोनामविच्छिद्यविच्छिद्यसहानुष्ठानात्मकस्तंत्रविशेषः पार्वणश्राद्धंपिंडपितृयज्ञंचव्यतिषंगेणाकरिष्ये इध्माधानाद्याक्तनपितृयज्ञंकृत्वाब्राह्मणपच्छौचाद्याछादनांतमग्नौकरणपूर्वकंसर्वंश्राद्धंकुर्यात् पुनरिध्माधानादिपितृयज्ञःआनेक्षणात्तुप्रहरणमन्नानुज्ञानात् अथोभयशेषंक्रमे-

णसमापयेदितिक्रमः आहिताग्निस्तु सर्वाधानी अर्धाधानी वा दक्षिणाग्नावेव पिंडपितृयज्ञं कृत्वा पार्वणश्राद्धं प्रागेव कुर्यात्
इति व्यतिषंगप्रयोगः इति श्रीमदनंतदेवकृतापदेवतनयेनानंतदेवेन विरचितः संस्कारकौस्तुभः समाप्तिमगमत्

स्वस्त्यस्त्वग्निगजाद्रिभू १७८३ मितशकेऽब्दे दुर्मतौ भार्गवे कृष्णाहां भाद्रपदस्य मोहमयिषष्ठ्यां वर्द्धने
यज्ज्ञानिः हेगिष्टेतुसदाशिवस्य तनुजो योबापुशेटीति विरव्या[illegible]स्तेन निजेंकितोश्रममयं यंत्रे कौस्तुभोयं किल १ छ

॥ इतिसंस्कारकौस्तुभः समाप्तिमगमत् ॥ श्रीलक्ष्मीनारायणार्पणमस्तु ॥

